आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११७

श्रीवनमालिविरचिता

# ब्रह्मसूत्रसिद्धान्तमुक्तावलिः

एतत्पुस्तकं काव्यालंकारभूषणैर्वाळाचार्यखुपेरकर-
शास्त्रिभिः संशोधितम् ।

तच्च

बी० ए० इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् 'महादेव चिमणाजी आपटे' इत्यभिधेय-
महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८६४ ।

खिस्ताब्दाः १९४२ ।



मूल्यं सार्धरूपकद्वयम् ( २॥ ) ।

## स्वल्पं निवेदनम् ।

इह खलु जगति निखिलैरस्माभिर्नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ इति श्रीभगवदुक्तेर्यथार्थता नित्य-मनुभूयत एव । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् , इति श्रीमनुवाक्य-स्यापि । तथैव सुखाय कर्माणि करोति लोकः, इति श्रीभागवतवचसश्च । तदिदं सुखमेव साक्षाद्दुःखनिवृत्तिद्वारा चाभिलष्यन्तः सर्वे जीवा विविधेषु व्यापारेषु प्रवर्तन्ते । यद्यदस्माभिर्नित्यमनुष्ठीयते तत्तदखिलं निजसुखार्थमेव । एवं समासाद्या-प्यस्थिरस्य दुःखानुविद्धस्य वैषयिकस्य सुखस्य परामपि कोटिमपरितृप्यैव प्रयतध्वं प्रयतध्वमिति वयं प्रयतामहे । इत्थं कृतेऽपि बहुविधे प्रयासे दुःखानुवेधशून्यं स्थिरं च मोक्षाभिधं नित्यं सुखं श्रीहरिप्रसादमृते कदाऽपि नाधिगच्छति जीवः । मोक्षस्य नित्यत्वं " न स पुनरावर्तते " इत्यादिश्रुत्या समुपवर्ण्यते । स एव किल परमपुरुषार्थः । विषयास्तावन्नास्य हेतुर्भवितुमर्हन्ति । घटादेरिव परमपुरु-षार्थरूपमोक्षस्य साधनं नहि किंचिदपि प्रत्यक्षेणोपलभ्यते । सत्येवं व्याप्तिज्ञाना-भावादनुमितिः कथं नाम समुत्पद्येत । किं तर्हि मोक्षसाधने प्रमाणम् । भगवान् श्रीवेदः । उक्तं च वेदशब्दनिर्वचनं भाष्यादिग्रन्थेषु---यदलौकिकं पुरुषार्थो-पायं वेत्त्यनेनेति । प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति च ।

तस्यैतस्य वेदस्य दुर्विज्ञेयार्थतां निरीक्ष्य सर्वज्ञाः करुणावरुणालयाश्च महा-मुनयस्तदुपदिष्टमोक्षमार्गादिकं बहुधा दर्शनादिद्वारा स्पष्टी चक्रुः । सर्वेषु ह्येषु दर्शनेषु वैयासि(स)कमेव दर्शनं गरीय इति प्रथितमास्ते । सूत्ररूपेणैव प्रणीतेऽस्मिन् वैयासि( स )के दर्शनेऽर्थनिर्णयार्थं यद्यपि बहवो भाष्यग्रन्थाः संप्रत्युपलभ्यन्ते तथाऽपि तेषां भाष्यग्रन्थानामतिविस्तृतत्वाद् दुर्बोधत्वाच्च नैतस्य दर्शनस्य याथार्थ्यमवबोद्धुं समर्था अभवन् स्वल्पमतयो मुमुक्षुजनाः । दृष्ट्वा चेमां मुमुक्षु-जनानां हृदयवर्तिनीमार्तिं श्रीमन्मध्वगुरोर्भाष्यमनुसृत्य पण्डितवरेण्यैः **श्रीवन-मालिमिश्रै**र्विरचिताऽऽसीदेका **श्रीब्रह्मसूत्रसिद्धान्तमुक्तावलिनामिका** सु-गमा व्याख्या । सेयमद्यावधि कुटिलकालवशाल्लुप्तप्रायाऽपि श्रीहरिगुरुप्रसादे-नास्मदीयकरतलं समुपस्थिता । प्राचीनविविधसंस्कृतग्रन्थप्रकाशने बद्धादरैरस्मत्सु-हृद्वर्यैरापटेकुलोत्पन्नैर्दत्तोपंतमहाशयैर्मदीयप्रार्थनानुसारेण कृपयाऽद्याऽऽनन्दाश्र-**मसंस्कृतग्रन्थावलि**द्वारा प्रकाशमानीयते ।

व्याख्यानस्यास्य प्रणेतारो वनमालिमिश्रा माध्वसंप्रदाये यद्यपि पण्डितप्रकाण्डत्वेन प्रसिद्धास्तथाऽपि ते कदा च समभूवन् कंच देशमभिजनं वाऽऽत्मनो जन्मना समभूषयन् गुरुपरम्परा चैतेषां कीदृश्यासीत् कं चान्ये च विद्वद्लंकारभूतैरेतैर्ग्रन्था. विरचिता इत्यादिकमखिलं सुनिपुणं संशोध्यापि साकल्येन यथार्थतया च नाद्याप्यस्माभिर्विदितमस्ति । श्रीभगवत्कृपया समुपलभ्येत चेदस्य व्याख्यानस्य द्वितीयावृत्तिसमयस्तदाऽवश्यं श्रीवनमालिमिश्राणामितिवृत्तं समग्रं प्रकाशयिष्यामः ।

अस्य ब्रह्मसूत्रसिद्धान्तमुक्तावलिग्रन्थस्य प्रथममस्मत्करतले केवलमेकैव संपूर्णा क्वचिच्च त्रुटिताक्षरा मातृका समापतिता । मातृकान्तरप्राप्तये महान् किल प्रयासः कृतोऽस्माभिस्तथाऽपि सप्ततारनगरस्थगजेन्द्रगडकरग्रन्थसंग्रहस्थमेकं त्रुटितमपूर्णं पुस्तकं विनाऽन्यस्या मातृकाया अभावाद् व्याख्यानस्यास्य पाठान्तरविषये त्रुटितस्थले च यथावद्ग्रन्थपूर्तिकरणे दुःशकप्रायमेवाभूत् ।

ग्रन्थेऽस्मिन् प्रमाणत्वेन समुदाहृतानां श्रुतिस्मृत्यादिवचनानां स्थलनिर्देशपूर्वकं सूचीपत्रं परिशिष्टरूपेण यद्यप्यवश्यं प्रदेयमासीत्तथाऽपि पत्राणां (कागद) समर्घतया ग्रन्थगौरवभिया च न पारितं तदस्माभिः ।

आनन्दाश्रमव्यवस्थापकमण्डलेनामुं ग्रन्थं प्रकाश्य गहने वैयासि(स)कदर्शने प्रविविक्षूणां मुमुक्षूणां शिरसि महान् किलोपकारभरः स्थापित इति तस्मै सादरं बहुधन्यवादान् प्रदाय कृतशोधनेऽपि ग्रन्थेऽस्मिन् सूक्ष्ममतिभिः सदयं दृष्टिक्षेपो विधेय इति प्रार्थ्यते ।

ज्येष्ठवदि ११ दश्यां १८६४ तमे वत्सरे. करवीरक्षेत्रम् ।

विदुषां विधेयः—
खुपेरकरोपाह्वमाधवाचार्यात्मजो बाळाचार्यः ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीवनमालिविरचिता

# ब्रह्मसूत्रसिद्धान्तमुक्तावलिः ।

श्रीमते हयग्रीवाय नमः ।

अथ प्रथमाध्यायस्य प्रथमः पादः ।

वाच्यो यः सर्वशब्दानामहेयगुणसंश्रयः ।
वाजिग्रीवः कृपासिन्धुः सोऽव्यान्नः सुखविग्रहः ॥ १ ॥
श्रीमद्द्वैपायनं वन्दे मरुदंशमरिन्दमम् ।
कुमताब्धेरगस्त्यं च जयतीर्थं मुनीश्वरम् ॥ २ ॥
श्रीमद्भाष्यकृतां वाचष्टीकाकृतां च केवलम् ।
संगृह्यन्ते हि बोधायाल्पानां वनमालिना ॥ ३ ॥
श्रीब्रह्मसूत्रसिद्धान्तमुक्तावल्यर्पिता हरेः ।
कण्ठे मोदं सतां चित्ते क्रियात् सुरद्रुहां व्यथाम् ॥ ४ ॥

ब्रह्मरुद्रादिभिः प्रार्थितः संसारिणः सञ्जीवानुद्दिधीर्षुर्भगवान्द्वापरादौ वेदान्विभज्य तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार । तत्राऽऽदौ सर्वशास्त्रविचारविधिमसूत्रयत् ।

ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १ ॥

अत्र ब्रह्मजिज्ञासायाः कर्तव्यतासमर्थनादस्तिशास्त्रसंगतिः । अन्यथा शास्त्रस्यानारम्भणीयत्वं प्रसज्येत । अध्यायपादसंगतिस्त्वानन्दमयाधिकरणमारभ्यैव गवेषणीया । ततोऽर्वाक्तनाधिकरणानामध्यायपादपीठत्वात् प्रथमाधिकरणत्वाच्छ्रुतिविचारस्याद्याप्यनारब्धत्वान्न पूर्वाधिकरणतद्विषयवाक्याभ्यां संगती च ।

नन्वानन्दमयमारभ्येति कथम् । समन्वयसूत्रे साक्षात्समन्वयोक्तेरीक्षत्यधिकरणे समन्वयासाधारणहेतुवाच्यत्वसमर्थनेन तस्मिन्नपि तस्याः सत्त्वादिति । उच्यते । वैदिकशब्दानां ब्रह्मण्युपक्रमादिलिङ्गप्रमाणकः शक्तितात्पर्यलक्षणसमन्वयः । स च न समन्वयसूत्रव्युत्पाद्यः । तत्र तत्प्रमाणानुक्तेः । किंतु व्युत्पादयिष्यमाणः शास्त्रयोनित्वे हेतुत्वेन सिद्धवदुपन्यस्तः । ईक्षताववाच्यत्वप्रयुक्तसमन्वयासंभवाशङ्कैव निरस्ता । समन्वयस्तु न व्युत्पादित इति न तयोः पादाध्यायाभ्यामन्तर्भावलक्षणा संगतिः ।

अत्र वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रमनारम्भणीयमुताऽऽरम्भणीयमिति । तदर्थं न्यायानुसंधानरूपविचारो न कर्तव्य उत कर्तव्य इति । तदर्थं विचारविधेर्विषयादिकं न संभवत्युत संभवति । तदर्थं विषयभूतं ब्रह्म एवोतान्यदिति । यदि प्रत्यक्षभूतो जीवस्तदा तस्य निश्चितत्वेन विषयाभावादनारम्भणीयं शास्त्रम् । यद्यन्यद्ब्रह्म तदा तस्यानिश्चितत्वेन विषयसंभवाच्छास्त्रमारम्भणीयमिति । उपलभ्यन्ते खलूभयविधान्यपि वाक्यानि । ननु कस्यायं संशयः । न तावत्सूत्रकारस्य । अवगतविशेषत्वात् । अन्यथा निर्णयसूत्रप्रणयनानुपपत्तेः । नापि परस्य परेणाद्यापि शास्त्रस्यानुपलब्धत्वात् । मैवम् । यदेदं शास्त्रं परेणोपलभ्येत तदोक्तसंदेहकारणोपपत्तौ प्रयोजनार्थिनैवं संदिग्धेनेति सूत्रकृत एव परकीयसंभावितसंशयापाहरणोपपत्तेः । तत्र न शास्त्रमारम्भणीयम् । न्यायानुसंधानात्मकविचाररूपजिज्ञासाया एव विषयाद्यभावेनाकर्तव्यत्वात् । विषयत्वेनाभिमतं ब्रह्म न जीवाद्भिन्नम् । मानाभावात् । कर्मकाण्डस्य च कर्मपरत्वात् । वेदान्तैश्चोपक्रमादिभिरद्वैतिरीत्याऽखण्डप्रत्यगात्ममात्रप्रत्यायनात् । तस्य चाहमिति स्वप्रकाशतया भासमानत्वादन्यस्याभावात् । आत्मनश्चास्वप्रकाशत्वे तत्प्रकाशः किं तार्किकरीत्या मानसानुभवेन किंवा प्राभाकररीत्या स्वप्रकाशसंविदाश्रयणेन । नाऽऽद्यः । तस्यापि परप्रकाश्यत्वेनानवस्थानात् । कस्यचिदनुभवस्य स्वप्रकाशत्वेन लाघवादात्मन एव तदस्तु । अत एव नान्त्यः । एवं चाधिकारी दूरोत्सारितः । यतोऽर्थी समर्थो विद्वानधिक्रियते । न चैतादृशेऽर्थेऽर्थिता संभवति । ननु कथं तर्हि श्रोतव्य इति विचारविधानमिति चेन्न । श्रवणस्य विचाररूपत्वासंभवात् । मन्तव्यः सोऽन्वेष्टव्य इत्यादेश्च विष्णुरुपांशु यष्टव्य इत्यादिवत् कृत्यप्रत्ययस्यार्हत्वेनाप्युपपत्तेरविधायकत्वात् । नान्यात्मन्येवाऽऽत्मानं पश्येदिति तद्विजिज्ञासस्वेति वा विधिर्मुख्यार्थयोर्ज्ञानेच्छयोरविधेयत्वाद्विधौ च लक्षणाया अन्याय्यत्वात् । यदभिघारयेद्रुद्रायाऽऽस्ये पशूञ्छिन्द्यादितिवल्लिङो विधिशक्तिप्रतिबन्धाच्च । नियमपरिसंख्ययोश्चाऽऽत्मनः शब्दैकगम्यतया साधनान्तरप्राप्त्यभावेनायोगात् । अनेनान्यपरतया प्रतीतस्याप्युपरि हि देवेभ्यो धारयतीत्यादेरिव तद्विजिज्ञासस्वेत्यादेरपि विधित्वमिति निरस्तम् । प्रकृतस्य त्वत्पक्षे वस्तुनोऽन्यपरत्वात्तद्वत्प्रकृतेऽप्यानन्तर्याभावाच्चेति प्राप्ते—

ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १ ॥

जिज्ञास्यं ब्रह्मशब्देन गुणपूर्णमभिधायिना । अपूर्णत्वेनानुभूयात्जीवाद्भिन्नं

प्रतीयते ॥ जिज्ञास्यमेव ब्रह्म तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिश्रुतेः । श्रौतब्रह्मशब्दोक्त्या गुणपूर्त्याऽल्पगुणत्वेनानुभूयमानाज्जीवाद्भिन्नत्वेन संदिग्धत्वात् । श्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः गुणपूर्त्यल्पगुणत्वे मिथ्येति च न युज्यते । ओमित्येतदक्षरमुपासीत । तद्विजिज्ञासस्व । तद्ब्रह्मेत्यादिश्रुतावोंकारब्रह्मशब्दौ जिज्ञास्ये वस्तुनि श्रूयेते । ताभ्यां च तत्सकलजीवजडात्मकात्प्रपञ्चाद्विलक्षणमवगम्यते । ओंकारस्तावदोतत्वस्य गतत्वस्य प्रविष्टत्वस्य वा वाचको गत्याद्यर्थस्यावतेर्हि रूपमेतत् । अवतेष्टिलोपश्चेति सूत्रात्। ओमिति कस्य वकेतिप्रश्नपूर्वकमवतिर्नामाय धातुर्गतिकर्मा प्रवेशनकर्मा वेत्यन्यत्राप्येवमेव निरुक्तत्वात् । तथा च यद्यसौ कर्मणि तदा कर्तुर्यदि वा कर्तरि तदा कर्मणोऽपेक्षायामुपपदाद्यभावेऽपि योग्यतया श्रुतनारादिबलाद्वाऽत्रावोंकारगस्य जिज्ञास्यस्य गुणैरानन्दाद्यनन्तकल्याणैस्त्वोततां वक्ति । ब्रह्मशब्दस्यापि तादृश एवार्थः । बृहतेर्वृद्ध्यर्थस्य ह्येतद्रूपम् । तथा च पूर्ववद्योग्यतयाऽथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन्गुणा इत्यादिश्रुत्यन्तराद्वा गुणानां संबन्धः । न च मन्तव्य इत्यादेर्विष्णुरुपांशु यष्टव्य इत्यादिवदविधित्वम् । तत्र जामितादोषोपक्रमतन्निर्हरणान्तैकवाक्यमध्यस्थानां विष्णवादिवाक्यानां विधित्वे प्रतीतैकवाक्यताभङ्गादेरिव प्रकृते बाधकस्याभावात् । अन्यथा स्वाध्यायोऽध्येतव्य इत्यादेरप्यर्हत्वापत्तेः । न चेदं ब्रह्मपरम् । प्रयाजादिवाक्यस्य स्वयमवान्तरवाक्यतया विधायकस्यापि पुनर्दर्शपूर्णमासादिवाक्येनैकवाक्यतावत्प्रकृतेऽपि पृथग्विधायकस्यापि ब्रह्मवाक्येन वाक्यैकवाक्यतोपपत्तेः । अभिघार्यास्त्र्यम्बका नाभिघार्या इति मीमांसन्त इति मीमांसासमभिव्याहारेणेव यस्योभयं हविरार्तिमार्च्छेदित्यादौ निमित्ताभिधायकयच्छब्दादिनेव तद्विजिज्ञासस्वेत्यादौ केनचिद्विधिशक्तिप्रतिबन्धाभावाच्च । आत्मन्येवाऽऽत्मानं पश्येदित्यादावपि दर्शनस्य तल्लक्षितस्य विचारस्य वा विधिसंभवाच्च । सति बीजेऽर्धमन्तर्वेदीत्यादौ लक्षणायाः स्वीकृतत्वाच्चेति सिद्धान्तसंक्षेपः । अथशब्दो मङ्गलाधिकारानन्तर्यार्थः । ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति वचनात् ।

नन्वेतयोर्विघ्नविघातादिहेतुत्वेन समस्तशास्त्राङ्गतया प्रथमसूत्रावयवत्वं न स्यात् । तथा च प्रथमसूत्रं न्यूनं स्यात् । अधिकार्यादिबोधकपदस्यान्यस्याभावात् । तत्प्रतिपादनं त्वावश्यकमन्यथाऽधिकारिविषयादिवैधुर्येण शास्त्रस्यानारम्भणीयत्वशङ्का निराकृता न स्यादिति चेन्न । प्रथमसूत्रेऽधिकार्यादिप्रतिपादनायोपात्तयो-

रोंकाराथशब्दयोः शङ्खवीणावेणुध्वनिवच्छ्रुतयोरन्यार्थं नीयमानपूर्णघटादिवच्च माङ्गलिकत्वात्। स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत इत्याद्यर्थवादवशात्सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोंकारस्योहः कर्तव्य इति गम्यते। न चोह्यमानं वाक्यात्पृथगिति वाच्यम्। मन्त्रेष्वप्यूह्यमानस्य मन्त्रावयवत्ववदुपपत्तेः। ततश्च प्रतिसूत्रमाद्यन्तयोरुच्चारणे गौरवमित्यादावेवाधिकृतत्वेनोच्चार्यते। संहितायां प्रथमसूत्रावयव एव विज्ञायेत। तस्मा विज्ञायीति पृथगों क्रियते। यथा परकीयद्रव्यप्रतिपादकप्रक्षेपांशेन दृष्टार्थकत्वं त्यागांशेनादृष्टार्थकत्वं स्विष्टकृदादेस्तथा ॐकारोच्चारणस्याऽऽद्यसूत्रे दृष्टार्थकत्वेऽपि सूत्रान्तरेऽदृष्टार्थकत्वोपपत्तिरेवं नान्ते प्रयोगवैयर्थ्यम्। नाप्युत्तरसूत्रेष्वोंकारार्थस्यानन्वयो दोषः। तत्र दृष्टासंभवेन केवलादृष्टार्थत्वोपपत्तेः। न चैकस्यैकत्रोच्चारणे दृष्टार्थत्वेऽन्यत्रापि तथात्वनियमः। मन्त्राणां प्रयोगकाल उच्चारणस्य दृष्टार्थत्वेऽपि जपकाले तस्यादृष्टार्थकत्वदर्शनात्। अन्ते तु मातेत्यादावेकवचनस्यैकपशुके दृष्टार्थत्वेऽपि बहुपशुकेऽदृष्टार्थत्वदर्शनाच्च। ननु सूर्यायेत्यूहं मत्यग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावात्कथमूहः किंच मन्त्रेष्वप्यूह्यमानस्य तदवयवत्वमिष्टमेव। ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वादिति चेन्न। मन्त्रसंस्काराद्यूहवत्कर्मव्युत्पत्त्योहपदस्य विकारपरत्वाभावात्। किंत्वध्याहारस्तर्क ऊह इति प्रसिद्धभावव्युत्पत्त्याऽध्याहारवाचकः। न चौतत्वस्य जिज्ञासोपसर्जनीभूतब्रह्मण्यनन्वय इति वाच्यम्। जिज्ञासान्विततया प्रथमं प्रतीतस्यौतत्वस्य तत्रासंभवेन सप्तदशारत्निर्वाजपेयस्य यूप इत्यादाविवाङ्गावतारन्यायेन तदुपसर्जनब्रह्मान्वयात्। अर्थवादार्थप्राशस्त्यस्य यजेतेत्यत्रोपसर्जनीभूतयागविशेषणत्वदर्शनाच्च। दण्डी प्रैषानन्वाहेत्यादौ दण्डस्योपसर्जनस्य विध्यन्वयाच्च। उक्तं च वार्तिके—विशेषणप्रधानत्वे दण्डीत्यादिषु दर्शितमिति। न च ब्रह्मशब्देनैव विषयसूचनादोंकारवैयर्थ्यम्। न केवलं जिज्ञास्ये तद्विजिज्ञासस्व तद्ब्रह्मेत्यादौ ब्रह्मपदश्रवणादेव तस्य जीवाद्भिन्नत्वेन जिज्ञासा। किंत्वोमित्येतदक्षरमुद्गीथमुपासीतेत्यादौ जीवेष्वसंभावितगुणपूर्तिवाचकोंकारसत्त्वादिति युक्त्यन्तरसूचकत्वात्। अधिकारी च शान्तो दान्तस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्। परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्याद्युक्तो ज्ञेयः। भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नरः। अधमः शमादिसंयुक्तो मध्यमः समुदाहृतः॥ आब्रह्मस्तम्बपर्यन्तं

संसारे वाऽप्यनित्यकम्। विज्ञाय ज्ञानवैराग्यो विष्णुपादैकसंश्रय इतिभाष्योदाहृत-वाक्यादपि ज्ञेयः। समानाधिकरणानां वेदाध्ययनशमार्पितविष्णुपादैकसंश्रयत्वानां मध्ये शमादिविष्णुपादैकसंश्रयत्वादिके अप्रचुरे अध्ययनं तु प्रचुरं सोऽधमः। यस्य विष्णुपादैकसंश्रयादिकमेवाप्रचुरमध्ययनशमादिके तु प्रचुरे स मध्यमः। यस्य तु विष्णुपादैकसंश्रयादि प्रचुरमध्ययनशमादिके अप्रचुरे स उत्तम इत्यर्थः।

ननु यदज्ञानाद्बन्धः स एव सत्स्वरूप आत्माऽन्वेष्टव्यः। रजतादिनिवृत्त्यर्थिना शुक्तिरिवेत्यत आह—अत इति। यतस्तत्प्रसादादेव मोक्षोऽतः स परमात्मा जिज्ञास्यः। ईश्वरमहाप्रसादश्च तज्ज्ञानादेव भवति न कर्मादिना। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति भगवदुक्तेः। न च प्रसादस्य मुक्तिहेतुत्वे मानाभावः। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेनैष लभ्यः। यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेणेत्यादिश्रुतेः। मत्प्रसादादवाप्नोषि शाश्वतं पदमव्ययमित्यादिस्मृतेश्च मानत्वात्। मोचकश्चेश्वरप्रसादस्तवद्भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येनेतिवचनात्। प्रसादश्चेच्छाविशेषो गुणान्तरं वा। न चास्तु तथा। तथाऽपि जिज्ञासायाः क्वोपयोगः। भक्तेर्ज्ञानघटितत्वात्। ईश्वरभक्तिर्नाम निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकमन्तरायसहस्रेणाप्यप्रतिबद्धो निरन्तरप्रेमप्रवाहः। न च दृष्ट्वैव तं मुच्यत इति ज्ञानस्यैव साक्षान्मोक्षहेतुत्वमिति वाच्यम्। यथा हि दण्डेनैव घटो जन्यत इत्यादौ घटत्वाद्यवच्छेदेन दण्डादिहेतुकान्ययोगव्यवच्छेदो बोध्यते तथा मुक्तित्वावच्छेदेन दर्शनहेतुकान्ययोगव्यवच्छेदो बोध्यते। न हि तत्प्रसादस्याहेतुत्वं यागे पुरोडाशद्वारा व्रीहीणामिव प्रसादद्वारा ज्ञानस्यापि मोक्षहेतुत्वोपपत्तेः। न च प्रसादस्येश्वरेच्छाविशेषादेर्नित्यत्वेन द्वारत्वानुपपत्तिरिति वाच्यम्। नित्यस्याप्यधिव्यक्तिमापन्नत्वेन व्यापारत्वसंभवात्। यथा हि मायिनां नित्यायाश्चितो व्यापिकाया वृत्तिद्वारैव घटादिना संबन्धो न स्वतोऽन्येषां सर्वगतस्याश्चनादेः केशरादिमत्त्वावच्छेदेनैव व्यक्तौ संबन्धो न साक्षात्या अवच्छेदेन तथा नित्यस्यापि प्रसादस्य वेदान्तजन्यवृत्तिप्रागभावध्वंस एव संबन्धनियामकः। न च स्वप्रकाशज्ञानरूपस्य जीवस्य स्वस्वरूपभानवद् ब्रह्मभानमपि सदाऽस्तीति वाच्यम्। स्वस्वरूपस्य स्वधर्मस्य सुखादेरविद्यायाः स्वं प्रत्यनावरकत्वेऽपीशतद्धर्मादेर्जीवं प्रत्यावरकत्वात्। नाहं प्रकाशः सर्वस्य योगमायासमावृतः। मूढोऽयं

नाभिजानाति लोको मामजमव्ययमिति भगवदुक्तेः। न च धर्मिज्ञानाभावाभावाभ्यां न जिज्ञासेति वाच्यम्। आपाततो ज्ञानेऽपि विशेषजिज्ञासासंभवात्। अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः। परं भावमजानन्तो ममाव्ययमनुत्तमम्। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विता इति सामान्यज्ञानाविशेषज्ञानयोर्विशेषज्ञानस्य च भगवतैवोक्तत्वात्।

ननु बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जित इत्याद्यनुसारेण देहतत्संबन्धिष्वात्मात्मीयाभिमानरूपसंसारस्य चित्तैकाग्र्येण स्वस्वरूपयाथात्म्यभानेन निवृत्तिरतश्चित्तैकाग्र्यार्थमष्टाङ्गयोगादौ यतितव्यम्। किमीशजिज्ञासयेत्यत आह—अत इति। यतः परमेश्वरशक्तिरेव जीवस्वरूपावरणं मुख्यम्। अविद्या तु निमित्तमात्रम्। अविद्यायां निवृत्तायामपि न सम्यगानन्दाभिव्यक्तिर्यावदशिः प्रसन्नः सन् स्वीयां बन्धशक्तिं नाऽऽकर्षतीत्यतस्तत्प्रसादहेत्वापरोक्ष्यार्थं जिज्ञासैव कर्तव्या। न चाविद्यातिरिक्तावरणे मानम्। विमुक्तश्च विमुच्यत इत्यादिश्रुतेर्मानत्वात्। वस्तुतोऽविद्यातिरिक्तमावरणमस्तु मा वा। सर्वथा निःशेषावरणनिवृत्तेर्भगवदधीनत्वात्। उक्तं हि तेनैव—दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति। यद्वा—एतत्सूत्रनिर्णेतव्येन नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः, कर्मपाशादित्यादिविचारविधिवाक्येनोपस्थापितत्वाद्विचारस्य सप्रयोजनकत्वमतःशब्दार्थः। यद्वा——मुमुक्षारूपाधिकारानन्तरं विचारः कर्तव्य इत्यथजिज्ञासापदाभ्यामुक्ते सति विचारविध्यधिकारिविशेषणेच्छाविषयत्वेन लब्धं मोक्षप्रयोजनकत्वमत इति हेतू क्रियते। न चाधिकार्यादेरप्यतःशब्देनैव परामर्शसंभवादथशब्दादिवैयर्थ्यम्। शमादेरधिकारिविशेषणस्य सिद्धस्य प्रवृत्त्यङ्गत्वे प्रयोजनादेस्त्वसिद्धस्यापि बुद्धिस्थस्य तत्रापि विषयस्य नासिद्धत्वनियम इति ज्ञापनार्थत्वादिति सिद्धं जिज्ञासायाः प्रयोजनम्। न च ब्रह्मजिज्ञासेत्यत्र निर्विषयत्वशङ्कानिरासाय कर्मणि षष्ठी वाच्या। सा चायुक्ता। प्रतिपदविधाना च षष्ठी न समस्यत इति निषेधादिति वाच्यम्। कृद्योगलक्षणा च षष्ठी समस्यत इति प्रतिप्रसवात्। इच्छायाः स्वातन्त्र्याभावेन विधातुमशक्यत्वेन जिज्ञासापदं विचारे लाक्षणिकं मीमांसाशब्दवद्रूढं वा। न च जीवातिरिक्ते परमेश्वरे मानाभाव इति वाच्यम्। ब्रह्मशब्देनैवातिरिक्तबोधनात्। उक्तं हि श्रीपराशरेण—शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते। मैत्रेय भगवच्छब्दः

सर्वकारणकारणे । संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः । तेनाऽऽगमयिता स्रष्टा गकारार्थस्तथा मुने । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना । वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि । सर्वभूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः । एवमेष महाशब्दो भगवानिति सत्तम । परस्य ब्रह्मभूतस्य वासुदेवस्य नान्यत इति परमैश्वर्यवाचकवासुदेवभगवद्ब्रह्मशब्दानां सामानाधिकरण्यस्योक्तत्वात् । न च स भेदो व्यावहारिको मुमुक्षुज्ञेय इति वाच्यम् । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । तथाऽऽत्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति श्रुतेः । एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ । बुद्धश्चोक्तो यथा तत्त्वं यथा श्रुतिनिदर्शनात् । यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विज । तदा स केवलीभूतः षड्विंशमनुपश्यति । तेनैते नाभिनन्दन्ति पञ्चविंशकमच्युतम् । जन्ममृत्युभयाद्भीता योगाः सांख्याश्च काश्यप । षड्विंशमनुपश्यन्ति शुचयस्तत्परायणा इत्यादिस्मृतेश्च । स्वं भावि ब्रह्म वा जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं जीवानुसंहितदुःखाननुसंधातृत्वात् । व्यतिरेकेण जीववत् । अत्र जीवब्रह्मप्रतियोगिकयोर्व्यावहारिकघटसत्तासमानसत्ताकयोर्घटे प्रसिद्धत्वान्नाप्रसिद्धविशेषणत्वम् । जीवब्रह्मणोश्च पारमार्थिकत्वेन तत्सत्तासमसत्ताकत्वेन सिद्धसाधनम् । न च दुःखादेरन्तःकरणनिष्ठत्वादासिद्धिः । क्षेत्राद्युत्पन्नधनेन वृक्षाद्युत्पन्नदण्डादिना पुरुषस्य धनित्वदण्डित्ववत्संबन्धविशेषेण दुःखित्वोपपत्तेरनुसंधातृत्वोपपत्तेश्च । ब्रह्मणो दुःखानुसंधातृत्वे निरञ्जनः परमं साम्यमुपैति । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इत्याद्युक्ततत्साम्यलक्षणमुक्तेरपुमर्थत्वापत्तेः । यद्वा ब्रह्मप्रतियोगिको भेदो न जीवधर्मिकः । ब्रह्मधर्मिको भेदो वा न जीवप्रतियोगिको जीवानुसंहितदुःखाननुसंधातुर्भेदत्वात् । व्यतिरेकेण जीवधर्मिकजीवप्रतियोगिकैक्यवत् । जीवप्रतियोगिकमैक्यं वा न ब्रह्मधर्मिकं जीवधर्मिकमैक्यं वा न ब्रह्मप्रतियोगिकं ब्रह्माननुसंहितदुःखानुसंधातुर्भेदत्वात् । व्यतिरेकेण ब्रह्मधर्मिकब्रह्मप्रतियोगिकैक्यवत् । न च शुद्धस्याननुसंधातृत्वेनासिद्धिरवच्छिन्नस्य मिथ्यात्वेन तत्सत्ताकभेदसिद्धौ सिद्धसाधनमिति वाच्यम् । धर्मिपदेन विशेष्यमात्रस्य विवक्षितत्वात् । तस्य तन्मतेऽपि सत्यत्वात् । न चौपा-

धिकभेदमात्रेण दुःखानुसंधातृत्वतदभावयोरुपपत्त्या पारमार्थिकभेदसाधनेऽप्रयोजकत्वमिति वाच्यम्। औपाधिकभेदेऽपि योगिनो नानादेहजन्यदुःखाद्यनुसंधानदर्शनात्। न च तत्र जीवोपाधेर्भेदाभावात्तथोपपत्तिरिति वाच्यम्। उपाधेरेवासंभवात्। एकदेशावच्छेदे सदेशत्वापत्तेः। चिन्मात्रावच्छेदे तु ब्रह्ममात्रस्य जीवत्वापत्तेर्दुर्वारमनुसंधानम्। प्रतिबिम्बस्तु सर्वगतस्य स्वन्यूनसत्ताकोपाधावसंभवी। आकाशादेरपि जलाद्यन्तर्गतस्य स्वसमसत्ताके जलादौ प्रतिबिम्बो न तूपाध्यन्तर्गतस्यैव। तत्रोपाधौ स्वन्यूनसत्ताके मरीचिकाजले च प्रतिबिम्बोऽस्ति। बिम्बान्यूनसत्ताकनियमस्योपाधौ दर्शनाच्च। प्रत्यक्षमपि भेदे मानमीशधर्मिको जीवप्रतियोगिको भेद ईश्वरस्य प्रत्यक्षः। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इत्यादिस्मृतिप्रमाणात्। जीवधर्मिक ईशप्रतियोगिको भेदो जीवस्य प्रत्यक्षो नाहमीश्वर इत्यनुभवात्। न चाहं नाऽऽनन्द इतिवन्न भ्रम इति? भेदावगमात्। अप्रतिबुद्धो जडः। बुध्यमानो जीवो बुद्धः परमेशः। अनुमानमपि भेदे मानं जीवो ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं ब्रह्माननुसंहितदुःखानुसंधातृत्वात्। व्यतिरेकेण ब्रह्मवदिति वाच्यम्। सुषुप्तावानन्दस्वरूपतोपलम्भेनानानन्दानुभवस्य भ्रान्तित्ववत्। ईश्वरत्वादेः कदाऽप्यनुपलम्भेनानीशत्वानुभवस्य भ्रान्तित्वे मानाभावात्। न चेशप्रतियोगिकभेदोऽयोग्यः। योग्यधर्मावच्छिन्नप्रतियोगिताकभेदप्रत्यक्षेऽधिकरणयोग्यताया एवापेक्षणात्। ईश्वरत्वस्य ज्ञानेच्छाकृतिविशेषादेर्योग्यत्वात्। न च सर्वपदार्थप्रत्यक्षं विना सर्वविषयकज्ञानेच्छादेरैश्वर्यस्य प्रत्यक्षासंभव इति वाच्यम्। सर्वविषयकापरोक्षे सति सर्वपदार्थप्रत्यक्षं विना सर्वविषयकज्ञानेच्छादेरैश्वर्यस्य प्रसक्तेस्तुच्छत्वात्। धर्माद्यपरोक्षं विनाऽपि तद्बुद्धेरापरोक्षाच्च। न च भेदश्रुतीनामनुवादकतापत्तिः। जीवधर्मिकभेदस्य प्रत्यक्षेऽपीशधर्मिकभेदस्य जीवाप्रत्यक्षत्वात्। ईशप्रतियोगिकस्य स्वप्रतियोगि[क]स्य च भेदस्य जीवान्तरनिष्ठस्याप्रत्यक्षत्वात्। जीवान्तरप्रतियोगिकस्येशनिष्ठस्याप्रत्यक्षत्वाच्च। साक्षिसिद्धे सुखादौ संदेहाद्यभावेन तस्य प्रमाणज्येष्ठत्वाच्च। न च कर्तुरुदासीनद्रष्टृत्वरूपसाक्षित्वानुपपत्तिः। विश्वासार्थमौदासीन्यस्य लोक उपयोगेऽपि प्रकृते तदनुपयोगात्। प्रत्युत व्यवहर्तुरेव व्यवहर्तव्यभानाय साक्षाद्द्रष्टृत्वापेक्षणाच्च।

यत्तु देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं देहद्वयस्य साक्षादीक्षणान्निर्विकारत्वाच्च साक्षीति। तन्न। कूटस्थप्रकाशिते जीवस्य व्यवहारस्मृत्याद्यनापत्तेः। न चान्योन्याध्यासेन जीवैकत्वापत्त्या कूटस्थस्य जीवान्तर्गतत्वात्तदुपपत्तिरिति वाच्यम्।

तथा सति कूटस्थस्य कर्तुर्जीवेन तादात्म्येन कर्तृत्वापत्तेः । एतेन यथा नृत्यशालास्थो दीपः प्रभुं सभ्यांश्च नर्तकीं दीप्रप्रदेशविशेषेण तदभावेऽपि दीप्यते चिदाभासविशिष्टाहंकाररूपं जीवं विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वान्नृत्याभिमानिपुरुषप्रभुतुल्यं तत्परिसरवर्तिसभ्यपुरुषतुल्यान् विषयान्नानावृत्तित्वान्नर्तकीतुल्यां धियं च दीपयन् सुषुप्तावहंकाराद्यभावेऽपि दीप्यमानश्चिदाभासजीवाधिष्ठानं साक्षीति निरस्तम् । सुखमस्वाप्समित्यहमर्थस्यैव परामर्शात् । अन्योन्याध्यासेनोपपादने तु साक्षिणः कर्तृत्वस्याप्यापत्तेः । यत्त्वविद्योपाधिकजीव एव साक्षाद्द्रष्टृत्वादुदासीनत्वात्साक्षी जीवस्यान्तःकरणतादात्म्यापत्त्या कर्तृत्वेऽपि वस्तुतोऽकर्तृत्वादिति । तन्न । द्वा सुपर्णा सयुजा सखाया एकः स्वाद्वत्त्यन्योऽभिचाकशीति । विज्ञानं यज्ञं तनुते, कर्ता शास्त्रार्थवत्त्वादिति जीवस्य कर्तृत्वोक्तेः । अन्यथा शारीरश्चेत्यादिना तत्र तत्र वक्ष्यमाणजीवकर्तृत्वनिषेधासंगतेः । न चान्तःकरणोपहितस्य साक्षित्वं तद्विशिष्टस्य कर्तृत्वमिति वाच्यम् । धर्मिभेदे स्मृत्याद्यसंभवस्योक्तत्वात् । एकस्यैव रूपभेदेन तत्त्वे स्वरूपेण साक्षित्वं ज्ञानवत्त्वादिना कर्तृत्वमित्यङ्गीकारेऽस्माकमपि क्षतेरभावात् । अत एवान्तःकरणातिरिक्तोऽहामिति प्रतीयमानो जीवः परस्मान्न भिद्यते चेतनत्वात् तत्त्वंपदार्थत्वाद्वा ब्रह्मवत् । विपक्षे भेदग्राहकप्रमाणाभावादभेदश्रुत्यप्रामाण्यापत्तेश्चेति निरस्तम् । नाहमीश्वर इति साक्षिण एव मानत्वात् । अभेदे श्रुत्यभावाच्च । अज्ञानाविरोधिचेतनत्वस्य घटादावपि सत्त्वात् । तद्विरोधिनस्तु वृत्तावपि सत्त्वात् । निर्विशेषे चेतनत्वाभावाच्च । चेतनस्यैव तादात्म्येन हेतुत्वे स्वरूपासिद्धेः । जीवरूपचेतनस्य दृष्टान्ते परेशरूपस्य पक्षेऽभावेन दृष्टान्तासिद्धिस्वरूपासिद्ध्यापत्तेः । त्वंपदादिवाच्यत्वे दृष्टान्तासिद्धेः । लक्ष्यत्वे स्वरूपासिद्धेः । अन्यतरत्वे कदाचिल्लक्ष्ये देहादौ व्यभिचारात् । निर्विशेषे भावाच्च । जगत्कर्तृत्वादेरुपाधित्वाच्च । न च जगत्कर्तृत्वं दृष्टान्ते नास्तीति वाच्यम् । तर्हि जगत्कर्तुः सर्वज्ञस्य परस्याभेदसिद्ध्या दृष्टान्तासिद्धेः । ननु नेह नानाऽस्ति किंचन, नात्र काचन भिदा, मृत्योः स मृत्युमाप्नोति यदिह नानेव पश्यतीति विरोध इति चेन्न । अवतारादिप्रसक्तेशाभेदस्यैव निषेधात् । अत एव यदेवेह तदमुत्र, यदमुत्र तदनु इहेत्यादिना पूर्वत्रेशाभेद उक्तः संगच्छते । सलिल एको द्रष्टा द्वैतो भवत्येष ब्रह्मलोक एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यनेकद्वैतप्रतिपादकवाक्यसंवलिताद्वैतपदस्याभेदपरत्वमसंभावि । न च

सलिल इव सलिलः स्वच्छ इत्यर्थ इति वाच्यम् । सलिलपदस्य प्रथमान्तत्वे नपुंसकत्वापत्तेः । संभवत्यां गतौ छान्दसत्वकल्पनस्यान्याय्यत्वात् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्य तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोबन्नानां सृष्टिमुक्त्वा सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादिकमपि कालादिद्वैतबोधकानेकपदसंवलितं नाद्वैतपरम्। किंतु जामिना एतद्यज्ञस्य यदन्वञ्चौ पुरोडाशौ क्रियेते। उपांशु याजमन्तरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति पूर्वोत्तरवाक्यानुसारेण विष्णवादिवाक्यवदद्वैतवाक्यस्य व्याख्येयत्वात् । शङ्खः पाण्डुर एवेति विशेषणसंगतैवकारेण शङ्खत्वव्यापकपाण्डुरत्वबोधवद् ब्रह्मत्वव्यापकमुख्यत्वादिबोधत्वात् । एके मुख्यान्यकेवला इत्यभिधानात् । अद्वितीयपदं समानद्वितीयनिषेधकं न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इत्यनुसारात् । कालादिबोधकाग्न्यादिपदानुरोधेन संकोचस्य तवाप्यावश्यकत्वात् । ननु यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति श्रुतिरद्वैते मानमिति चेन्न । एतद्वाक्यस्य सुषुप्तिपरत्वात् । तत्र ज्ञानविषयसाधनादिकं स्वयमेवाभूदित्यर्थात् । अतोऽन्यदार्तमिति त्वन्यस्य जीवस्य दुःखित्वं बोधयति न तु नाशम् । आर्तं वाऽभिदीक्षन्त इति श्रुतेः । तेनैनेन दुःखिनो भवन्ति । परकाष्ठकायामभिदीक्षन्त इत्यर्थात् । आर्तो जिज्ञासुरर्थार्थीति स्मृतेश्च। परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते । नैवैष माहिमा येन व्याप्तमेतच्चराचरम् । अनाशी परमार्थ इति वक्ष्यमाणत्वेन सदैकरूपरूपायेत्युक्तत्वात् । परमार्थो निर्विकारस्त्वमेव । जीवस्य स्वरूपेण निर्विकारत्वेऽप्यविद्यासंबन्धात्सविकारत्वम् । यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः । तव संबन्धि मूर्तं जगद्रूपमयोगिनो विपरीतं स्वतन्त्रं स्वीयत्वेन पश्यन्ति न विष्णवधीनम् । ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे । ज्ञायतेऽनेन ज्ञानं करणे ल्युट् । अन्वयव्यतिरेकाभ्यामन्तर्यामिविषयकज्ञानसाधनम् । विश्वमर्थ्यते याच्यत इत्यर्थः । पुरुषार्थो ज्ञानं साधनं पुरुषार्थत्वेन मन्यन्त इति भावः । ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर । ज्ञानसाधनयाथात्म्यविदः । रूप्यतेऽनेन रूपं ज्ञानात्मकं ज्ञानसाधनं करणे ल्युट् । विस्तारः सर्वभूतस्य विष्णो-

विश्वमिदं जगत् । द्रष्टव्यमात्मनस्तस्मादभेदेन विचक्षणैः । यतः सर्वभूतविस्तार आत्मनो विष्णोर्भवति तस्माद्विचक्षणैर्विश्वमभेदेन द्वेषराहित्येन द्रष्टव्यम् । अन्तर्यामिप्रेरितानि चेष्टन्ते तत्र द्वेषादिनिमित्तं नास्तीति भावः । अत एवोत्तरत्र समुत्सृज्याऽऽसुरं भावं यथा यूयं तथा वयम् । फलं परं करिष्यामो यथा प्राप्स्याम निर्वृतिम् । सर्वत्र दैत्याः समतामुपेताः समत्वमाराधनमच्युतस्येत्ययमर्थः स्पष्टः । आत्मनो विष्णोरभेदेन शरीरशरीरिभावेन । तथा च श्रुतिः—यस्याऽऽत्मा शरीरं यस्य पृथिवी शरीरमित्यादि । नीलोत्पलमित्यादिवद् गुणगुणिभावेन वेति केचित् । ज्ञानात्मकमिदं विश्वं न विद्यते ततः परम् । ज्ञानमात्माऽऽन्तर्यामी यस्य तत्तथा । अत एव पूर्वं—यथा शैत्यं जले वातो बिभर्ति कणिकागतम् । जगच्छक्तिस्तथा विष्णोः प्रधानपुरुषात्मकम् । यथा जले स्थितं शैत्यं कणिकाद्वाराऽऽगतं वातो बिभर्ति न तु स्वस्मिञ्शैत्यविकारोऽस्ति तथा जलस्थानीयप्रधानपुरुषौ शैत्यस्थानीयं जगत् कणिकास्थानीयमहदादिद्वारेणाऽऽगतं वातस्थानीयविष्णोः शक्तिर्बिभर्तीति भेद एवोपक्रान्तः । यद्वा ज्ञानात्मकं साधनमन्वयव्यतिरेकाभ्यां सर्वं जगदन्तर्याम्यनुमापकं सर्वस्य तदधीनत्वात्ततो भिन्नं न भवतीत्यर्थः । ज्योतींषि विष्णुर्भुवनानि विष्णुर्गिरयो दिशश्च । नद्यः समुद्राश्च स एव सर्वो यदस्ति यन्नास्ति च विप्रवर्य । सर्वं त्वमाप्नोषि ततोऽसि सर्व इत्यनुसारात् । ज्योतिरादिव्यापकत्वात्तत्पदवाच्यो विष्णुः । यदस्ति विद्यमानं यन्नास्त्यतीतमनागतं च तत्पूर्वस्य व्यापक इत्यर्थः । सर्वशरीरको वा । तत्स्वरूपमाह । ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । असौ ज्ञानस्वरूपो यतोऽतोऽशेषमूर्तिर्ज्योतिरादिर्न भवति । कथंभूतोऽसौ । वस्तुभूतोऽपरिणामी निर्विकार इत्यर्थः । अथवा शेषो मूर्तिः प्रतिमास्थानीया यस्य न तु वस्तुभूतस्तदभिन्न इत्यर्थः । ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानित्यादिना स ऐक्षतेत्याद्यनुसारात् । विष्ण्वीक्षणविलसितं तदधीनमित्युच्यते । त्वंपदार्थस्वरूपमाह । यदा तु शुद्धं निजरूपि सर्वं कर्मक्षये ज्ञानमपास्तदोषम् । तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः । सर्वं जीवजातं प्रारब्धादिक्षये निरविद्यं भवति यदा तदैतदीयसंकल्पाद् भगवतो वा सर्वाणि फलानि भवन्ति । सोऽश्नुते सर्वान्कामानिति श्रुतेः । अवस्तुषु परिणामिषु देहादिषु वस्तुभेदा वस्तुबुद्धयो न भवन्ति । सततैकरूपं विज्ञानं वस्तुपदवाच्यम् । तद्विपरीतं जडमतत्पदवाच्यमित्याह—वस्त्वस्ति । किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्य-

थात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्। तस्यात्र विज्ञानमृतेऽस्ति नित्यं किंचित्कदाचिद्द्विज वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् । विज्ञानं विना जडमेकाकारं नास्ति विकारित्वात्। ननु विज्ञानस्वरूपो जीवो देवादिभेदं प्राप्नोतीत्यत आह–विज्ञानमित्यादि । तथा वाऽज्ञानादिकर्मप्रवाहरूपाविद्याभिन्नचित्तैरभ्युपेतं नतु स्वाभाविकं देवत्वमित्यर्थः । नन्वस्तु देवादिव्यतिरिक्त एवाऽऽत्माऽहंपदवाच्य इत्याशङ्क्याऽऽह । तस्य सर्वभूतेषु स्थितस्य ज्ञानादिरूपेणैकाकारत्वाद्व्यावर्तकधर्माभावात्सोऽहमिति प्रश्नप्रतिवचने न युज्येते इत्याह । यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥ १० ॥ यदा समस्तदेहेषु पुमानेको व्यवस्थितः । तदा हि को भवान् सोऽहमित्येतद्विफलं वच इति। परो विलक्षणो जात्यादिना सर्वदेहेषु देवादिदेहेष्वेक एकाकारं व्यक्तिनानात्वं स्वीकृत्याऽऽकारभेद एव निषिध्यते। अन्यथैकस्मिन्नन्यपदप्रयोगो न स्यात्। निरञ्जनः परमं साम्यमुपैतीति श्रुत्यनुसारात्। ईशस्यापि ज्ञानानन्दत्वादिनैकाकारत्वादिति भावः । तदेवाऽऽह–पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु य एते कर्मयोनय इति। ध्यानं चैवाऽऽत्मनो भूप न परार्थाभिशब्दितम् । भेदकारि परेभ्यस्तु परमार्थो न भेदवान् ॥ ११ ॥ ध्यानं विशदविशदतरत्वादिना भेदापन्नं सत्परेभ्यः स्वभेदकारि भेदज्ञानजनकम्। परमार्थस्तु तथा न परमात्मनोर्योगः । परमार्थ इतीक्षतां मिथ्यैतदन्यद्द्रव्यं हि नैति तदन्यतां यत इति। योगस्तादात्म्यं जीवेशयोः। तदपि न परमार्थः मिथ्यात्वात्। नकारानुषङ्गात्। यतोऽन्यद्द्रव्यमन्यतां नैति। अन्यद्द्रव्याभिन्नतां न याति। एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतो नृप ॥ १२ ॥ परज्ञानमयो सद्भिर्जातिनामादिभिर्विभुः । न योगवान्न युक्तो भून्नैव पार्थिव योक्ष्यति ॥ १३ ॥ तस्याऽऽत्मपरदेहेषु सतोऽप्येकमयं हि तत् । विज्ञानं परमार्थोऽसौ द्वैतिनो तथ्यदर्शिनः ॥ १४ ॥ ज्ञानस्वरूपो भगवान् परमात्मा सद्भिरसाधुभिर्धर्मैः कालत्रययुक्तो न भवति। सत्त्वादयो न सन्तीश यत्र च प्राकृता गुणा इत्याद्यनुसारात् । तत्र विज्ञाने परमात्मन्यवताराान्तर्यामित्वादिना ये भेददर्शिनस्ते मिथ्याज्ञानिन इत्यर्थः । क्व निवास इत्यादिप्रश्नप्रतिक्षेपमिषेण तत्पदार्थं निरूपयति । पुमान्सर्वत्रगो व्यापीत्याकाशवदयं यतः । कुतः कुत्र क्व गन्ताऽसीत्येतदप्यर्थवत्कथम् ॥ १५ ॥ एवंभूते परमात्मन्येव विहरामि तं विहाय गमनादिकं न संभवतीति भावः ।

त्वंपदार्थं निरूपयति—सोऽहं न गन्ता न चाऽऽगन्ता नैकदेशनिकेतनः। त्वं चान्ये च न च त्वं त्वं नान्येऽन्येनाहमप्यहम् । सोऽहमन्नादिजन्यतृप्तिशून्यो ज्ञानानन्दस्वरूपस्तृप्त्याद्यर्थं गमनादिकर्ता न भवामि पूर्णत्वात् । अत एवा-निकेतनः। त्वमपि तथाऽन्ये त्वं त्वं ब्राह्मणादिर्न किंतु ज्ञानानन्दपरिपूर्ण-स्वरूपः। तथाऽन्ये। तथाऽहमपि परमार्थसारभूतं यदद्वैतमशेषत इति समाभ्यधि-करहितपरमार्थस्वरूपमद्वितीयमित्यर्थः । निदाघो ह्युपदेशेन तेनाद्वैतपरोऽभवत्। अद्वितीयविष्णुपरोऽभवदित्यर्थः । पूर्वं वासुदेवस्यैवाद्वितीयत्वमुक्तम् । तथा हि। एवमेकमिदं विद्धि न भेदि सकलं जगत्। वासुदेवाभिधेयस्य स्वरूपं परमात्मन इति वासुदेवस्वरूपमेकं सदैकरूपरूपायेत्युपक्रान्तं सदैकाकारं विद्धि। न सकलं जगदेकाकारं विकारित्वात् । किंतु भेदि नानावस्थावत्। त्वंपदार्थमुपसंहरति—सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तिदृष्टिभि-रात्माऽपि तथैव स पृथक् पृथगिति सत्त्वादिगुणादियोगेन भ्रान्तैरविद्यावद्भि-र्देवब्राह्मणादिरूपेण पृथग्दृश्यते । तत्पदार्थमुपसंहरति—एकः समस्तं यदि-हास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहमिति । अच्युते स्थितत्वादच्युत इत्यु-च्यते। तदुक्तं मोक्षधर्मे—अन्यश्च परमो राजंस्तथाऽन्यः पञ्चविंशकः। तत्स्थत्वा-दनुपश्यन्ति ह्येक एवेति साधव इति । अहं त्वमेतत्सर्वमात्मस्वरूपं जीवस्वरूपं तत्र स्थितत्वात्ततो जातत्वाद्वा । ब्राह्मणोऽस्य मुखमिति भेदव्यपदेश उच्यते। अस्तु वा सर्वत्र प्रथमायाः सप्तम्यर्थे लक्षणा । पदद्वयलक्षणापेक्षया लघु-त्वात्। अतः शत्रुमित्रबान्धवादिभेदमोहं देहगेहादावहं ममेति वैचित्र्यं त्यक्त्वा परमार्थपरो भव सर्वत्र भगवद्दृष्टिपरो भवेत्यर्थः । तद्भावभावनापन्नस्ततोऽसौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेदिति । परमात्मनो भावस्य चिन्तने तत्परो यः स आविर्भूतगुणकोऽभेदी भवति । अभेदस्तादात्म्यं तन्निष्ठो धर्मस्तद्वान् भवति। यथा भृङ्गभावनया कीटो भृङ्गो भवति। भेदः संसारित्वासंसारित्वादि पूर्णत्वापूर्णत्वाद्यवच्छिन्नप्रतियोगिताकः परमार्थविषय-कापरोक्ष्याभावकृतः । तमेवं विद्वानमृत इह भवतीति श्रुतेः। तच्छब्देन सहस्रशीर्षत्वादिविशिष्टस्यैव परामर्शात् परमात्मनोऽभेदं व्युत्पाद्य जीवजातस्यापि परस्परं तादृशाभेदं व्युत्पादयति—विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यतीति । बृहद्गुणतां प्राप्तस्य

जीवजातस्यामाधुर्यो स्वाभाविको देवादिरूपस्तं कः करिष्यति । अथवा परमात्मन एव कैः पूर्वोक्तो भेदस्तिमित्यर्थः । विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ॥ प्रापणीयस्तथैवाऽऽत्मा प्रक्षीणाशेषभावनः ॥ १८ ॥ क्षेत्रज्ञः करणी ज्ञानं करणं तेन तस्य तत् । निष्पाद्यं मुक्तिकार्यं वै कृतकृत्यो निवर्तते ॥ १९ ॥ इत्यशेषभावनाहीनस्य निरनिष्ठस्य पूर्वं भेदप्रतिपादनात् । अन्यथा ज्ञाज्ञावजावीशानीशौ पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्ते(स्ते)नामृतत्वमेतीत्यादिश्रुतिविरोधः स्यात् । न चात्र भेदबोधकपदाभावः । भेदव्याप्तद्वित्वादिसंख्याबोधेनैव भेदबोधोपपत्तेः । आमनमस्यामनस्य देवास्तिस्र आहुतीर्जुहोतीत्यादिवद्भेदोपपत्तेः । पृथगितिपदसत्त्वाच्च । न च मोक्षे भेदाभावः । यो वेद परमे व्योमन् सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चितेति मोक्षेऽपि तत्सत्त्वात् । ब्रह्मणा चतुर्मुखेण । ब्रह्मणो मुक्तिकाले कामानानन्दा[न्] प्राप्नोतीत्यर्थः। ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । तस्यान्ते च कृतात्मानः प्रविशन्ति परं पदमिति स्मृतेः । सर्वे नारदादयः सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रस्तरेण सह प्रस्तरप्रहरणकाले शाखां प्रहरतीति विभक्तिव्यत्ययेन वार्तिकादौ व्याख्यातत्वात् । निरञ्जनः परमं साम्यमुपैतीति श्रुतेर्मम साधर्म्यमागता इति स्मृतेश्च मुक्तौ स्पष्टो भेदः। यत्तु कर्तृत्वभोक्तृत्वक्रियाकारकफललक्षणबन्धस्याऽऽत्मन्यारोपितत्वेन मिथ्यात्वं स्वभाष्यादौ वर्णितम् । तन्न । सूत्रानारूढत्वादनुपयोगाच्च । ननु प्रथावत्प्रवृत्त्यङ्गतयाऽर्थतः सूचितस्य प्रयोजनादेरुपपादकं मिथ्यात्वम् । तथा हि ज्ञानमज्ञानस्यैव निवर्तकं तद्यदि कर्तृत्वभोक्तृत्वाद्यनर्थस्तन्मूलकस्तदा निवर्तेत । एवं विध्याक्षिप्तेष्वधिकारिविषयादिषु सत्सु सूत्राक्षिप्तप्रयोजनविषययोरुपपादकं बन्धमिथ्यात्वं प्रतिपादयद्युष्मदित्यादिभाष्यं सूत्रार्थसंगतमिति चेन्न । प्रथमप्रतिपन्नश्रौतार्थमुल्लङ्घ्य चरमप्रतिपन्नार्थवर्णनेऽकुशलत्वात् । सेतुदर्शननिवर्त्यहत्यादेरिव बन्धस्य सत्यस्यैव निवृत्त्युपपत्तेः । ननु दूरगमनादिविशिष्टं निवर्तकं न तु दर्शनमात्रमिति चेत्तुल्यं प्रकृतेऽपि नियमाधीतवेदान्तजन्यस्य श्रवणादिनियमविशिष्टस्यैव निवर्तकत्वात् । न च कारणात्मना हत्यादेः स्वस्थानान्न निःशेषनिवृत्तिरिति वाच्यम् । प्रकृतेऽपि तुल्यत्वात् । न चाधिष्ठानज्ञानेन निःशेषनिवृत्तिः । बन्धमिथ्यात्वसिद्धौ भ्रमविषयत्वरूपाधिष्ठानत्वसिद्धिस्तत्सिद्धौ चाऽधिष्ठानज्ञाननिवर्त्यत्वेन मिथ्यात्वसिद्धिरित्यन्योन्याश्रयात् । शुक्तिरूप्यं नष्टमित्यप्रतीतेश्च कल्पितस्य निवृत्तौ नित्यनैमित्तिककर्मजन्यान्तःकरणशुद्धेर्नियमपूर्वकमननादिजनि-

नसंस्कारादेरनपेक्षणाच्च । अपि च संस्कारसापेक्षगरुडभ्रमरादिज्ञानसंतानानिवर्त्यविषकीटत्वादौ सत्यनाया दर्शनेन श्रवणादिजनितसंस्कारापेक्षज्ञानेन श्रुतिप्रामाण्यात् सत्यस्यैव निवृत्तेश्च । न च ज्ञाननाशकज्ञानत्वं वा ज्ञानसमानविषयकप्रमात्वं वाऽधिष्ठानज्ञानत्वमिति चेन्न । अज्ञाननाशकस्यैवेदानीं विचार्यत्वात् । घटपटाविति ज्ञानेन घटाज्ञाननिवृत्त्यनापत्तेः । न चाज्ञानतत्कार्यान्यतरविषयकत्वं तदिति वाच्यम् । इदं रजतमित्यादौ प्रमेयमिदमित्येव ज्ञानेन शुक्त्यज्ञानतत्कार्यरूपविषयकेनाधिष्ठानज्ञानेन रूप्यनिवृत्त्यापत्तेर्दण्डी पुरुषोऽयमिति भ्रमस्य पुरुषोऽयमिति प्रमया निवृत्त्यापत्तेश्च । अज्ञानतत्कार्ययोर्विशिष्यैव ग्राह्यत्वादन्यथा शुक्तिज्ञानेन रजतादिनिवृत्त्यनापत्तेः । त्वदभिमतब्रह्माज्ञानकार्यस्य शुक्त्यादेरेव भानात् । न च ध्यानं न ज्ञानं तज्जन्यज्ञानेनैव विषयादेर्निवृत्तेः । गङ्गासेत्वादिदर्शनेन तत्रत्यम्लेच्छानामपि यत्किंचिद्दुरितनिवृत्तेः शास्त्रसिद्धत्वात् । तथा च ज्ञानमज्ञानस्यैव निवर्तकमित्यस्तु नाम बन्धमिथ्यात्वं मुक्तिर्नापेक्षते बन्धस्याज्ञानतत्कार्यान्यतरत्वमेव वर्णनीयमध्यासवर्णनस्य का संगतिः । तस्मात्क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन । तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते । तमाश्रिताद् ब्रह्मतरोरनन्तान्निःश्रेयसं पक्कफलं प्रयातः । एवं ज्ञातो भगवाननादिः पुरुषोत्तमः प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षय इत्यादिमानात्सत्यस्यैव बन्धस्य निवृत्तिः । यत्तु बृहत्वाद्बृंहणत्वादात्मैव ब्रह्म स चाऽऽकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणिमात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेनाहमित्यसंदिग्धाविपर्ययापरोक्ष इति न जिज्ञास्यम् । न चाहमनहं वा कोऽपि संदिग्धे । नाहमेवेति विपर्यस्यति वा । न चाहं स्थूल इति देहालम्बनोऽयमहंकार इति वाच्यम् । योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरो नप्तॄननुभवामीति प्रत्यभिज्ञानेन बाधात् । अपि च स्वप्ने दिव्यशरीरमादाय तदुचितभोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन्नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । तस्माद्विषयाभावान्न विचारणीया वेदान्ता इति पूर्वपक्षयित्वा समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितियमात्मतत्त्वं हि श्रुत्यादिसिद्धमहमर्थानुभवे न भासते प्रादेशिकानेकविधशोकदुःखादिप्रपञ्चोपप्लुतं हि भासत इत्यारभ्यो विचार इति भामत्यां सिद्धान्तितम् । तन्न । अनवच्छिन्नज्ञाने विशेष्यभानावश्यकत्वात् ।

तदतिरिक्तस्य त्वन्मते विचारजन्याखण्डचिद्विषयकज्ञानेऽप्यभानात् । विशेष्यमात्रस्य संदेहाद्यभावेन निरर्थको विचारः । न हीदं रूप्यमिति भ्रमविषयीकृतशुक्त्यादेर्ज्ञानाय भ्रमविषयातिरिक्ताविषयकविचारोऽपेक्ष्यते । न वा भ्रमाविषयकाविषयकं ज्ञानं क्वापि भ्रमविरोधि । अहमिति प्रत्यक्षस्य भ्रमत्वोपपादनं त्वनुपयुक्तं विशेष्यांशे प्रमात्वात् । अहमर्थो नाऽऽत्मेति न युक्तं हन्ताहमिमास्तिस्रो देवताः । अहं ब्रह्म । अहमात्मा गुडाकेश । मत्तः परतरं नान्यत् । मामेकं शरणं व्रजेत्यादिश्रुतिस्मृतिविरोधात् । यच्च भामत्यां यथा षड्जादयो गाधर्वशास्त्राभ्यासात् प्रागविस्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते व्यज्यन्ते तु शास्त्रवासनावासितेन तेनैवैवं वेदान्तवाक्यजन्यब्रह्मैक्याकारवासितान्तःकरणेन तद्भावाभिव्यक्तिर्न प्रागित्युक्तम् । तन्न । प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जत्वादिविशेषस्येव प्रकृतेऽभावात् । स्वरूपातिरिक्तधर्माभावेन तस्यास्फुरणेऽधिष्ठानज्ञानाभावादारोपो न स्यात् । स्फुरण आरोपायोगाच्च । न चैतन्नाऽऽवरणविरोधि किंतु वृत्तिरेवेति वाच्यम् । सर्वप्रत्ययवेद्यत्वेन घटादिज्ञानस्य चिज्ज्ञानत्वेनाऽऽवरणासंभवात् । कारणविशेषजन्यवृत्तिविशेषस्य तन्निवर्तकत्वाङ्गीकारेऽदृष्टविधया निवर्तकत्वापत्तेर्मिथ्यात्वासिद्धेः । एतेन प्रत्यगब्रह्मैक्यं न विषयः । कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेनैक्यायोगात् । नापि तन्निवृत्तिः प्रयोजनम् । ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य ज्ञानान्निवृत्त्ययोगादिति भाति । सत्यम् । कर्तृत्वभोक्तृत्वादिप्रपञ्चस्य सत्यत्वे विषयादि न सिध्यति । प्रपञ्चस्तु मिथ्येति विवरणोक्तं निरस्तम् । तत्त्वंपदलक्ष्यचिन्मात्राभेदबोधाय कर्तृत्वादिमिथ्यात्ववर्णनस्यासंगतत्वात् । श्रुतिप्रामाण्याद्भेदबोधकप्रत्यक्षाद्यभासीकृत्य सत्यकर्तृत्वादिविशिष्टयोरेवाभेदबोधनोपपत्त्या वृथा ह्यध्यासकथा । ननु स्थूलोऽहं कृशोऽहं बधिरोऽहमन्धोऽहं सुखी दुःखीत्याद्याकारोऽहंप्रत्ययस्य स्थूलत्वाद्यंशे भ्रमत्वदर्शनेन कर्तृत्वाद्यंशेऽप्यप्रामाण्यशङ्काकलुषितत्वेन नैक्यश्रुतिविरोध इति चेन्न । मम देहो मम चक्षुर्मम श्रोत्रमिति जीवात्परस्परं च भिन्नत्वेन भासमानानां युगपदेकजीवाध्यासासंभवेन कर्दमलिप्ते वस्त्रे कृष्णं वस्त्रमितिवद्गौणत्वेन सामानाधिकरण्योपपत्तेः । अतः प्रबलप्रत्यक्षेणेशप्रतियोगिकभेदस्य स्वस्मिन् गृहीतत्वेन न श्रुतिरभेदपरा । यत्तु स्थूलोऽहमित्याद्यध्यास एव न गौणः । यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः

स च भेदप्रत्ययपुरःसरः । यथा माणवके सिंहादनुभवसिद्धभेदे सिंहशब्दः । तथा च गौणत्वे कदाचिद्वस्त्रं, न कृष्णमित्यादिवत्कदाचिदपि नाहं स्थूल इत्यादिलौकिकसाधारणप्रत्ययस्याऽऽपत्तेरिति । तन्न । आपादकाभावात् । नहि गौणव्यवहारो भेदप्रतीतिव्याप्यः । अनुकूलतर्काभावात् । नाहं गौरो नाहं देहः किंत्वतिरिक्त इत्यबाधितज्ञानवतामपि स्थूलोऽहमित्यादिव्यवहारस्य सत्त्वात्तस्याध्यासत्वासंभवेन गौणत्वकल्पनात् । भेदज्ञाने सत्यप्यभेदाध्यासस्य श्रुत्या निरासासंभवाच्च । त्वन्मते निःप्रकारस्य श्रौतज्ञानस्याभेदारोपनिरासकत्वासंभवाच्च । यत्तु मम देह इत्यादिषष्ठ्याः संबन्धार्थकत्वेन न ततो भेदलाभः संबन्धस्य चापवादकभेदप्रत्ययरहितसामानाधिकरण्यानुरोधेनाभेदाविरोधेनैव कल्पनीयत्वात् । कार्यकारणाभेदवादिनां ब्रह्मप्रकृत्यादिकारणकं जगदभिन्नं सौवर्णं कुण्डलं कालः सदाऽस्ति देशः सर्वत्रास्तीत्यादावभेदेऽपि कार्यकारणभावादिसंबन्धस्य संप्रतिपन्नत्वाच्चेति । तन्न । नाहं देहो नाहं गौरो नाहं स्थूल इत्याद्यपवादकभेदप्रतीतेः सत्त्वेन षष्ठ्या अभेदार्थत्वानुपपत्तेः । न चोक्तभेदप्रत्ययवतां नाभेदप्रत्ययः श्रवणमननाद्यध्यासजन्मविरोधिसंस्कारेणैवाभेदप्रत्ययस्य निवर्तनीयत्वात् । कार्यकारणयोः कालादीनां च भेदग्राहकमानाभावेनाभेदग्राहकस्य सत्त्वाच्चाभेदेऽपि भेदप्रतिनिध्यादिना तथा व्यवहारोपपत्तेः । किंच योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरो नप्तॄन् पश्यामि । योऽहं स्वप्ने व्याघ्रदेहवान्सोऽहं मनुष्यदेहवानित्यननुगतदेहादनुगतात्मनो भिन्नत्वेन प्रतीतेश्च । नन्वाद्यस्य योऽयं बाल्ये मम देहः पुष्ट आसीत्स एवाद्य वार्धक्ये कृशो जात इत्यनुभवात् । वस्तुतो बालस्थविरदेहैक्येन तदैक्याध्यासेन वोपपत्तेः । द्वितीयस्य कल्पिताकल्पितत्वव्याघ्रत्वमनुष्यत्वगोचरस्य योऽयं स्थाणुरयं पुमानिति कल्पिताकल्पितस्थाणुत्वपुरुषत्वगोचरानुभवस्य पुरुषेऽहमर्थाभेद इव मनुष्यदेहात्माभेदेऽप्युपपत्तिरिति चेन्न । यो मम बाल्ये पुष्टो देहः स्थितः स इदानीं नास्त्यन्य एव वार्धक्ये कृशो देह इति भेदप्रतीतेः सत्त्वेनोक्ताभेदप्रतीतेः स एवायं गङ्गाप्रवाह इत्यादिवदौपचारिकत्वात् । न च दृष्टान्त औपचारिकत्वमसिद्धम् । स प्रवाहः । तज्जलमिदानीं नास्तीति भेदप्रतीतेः सत्त्वात् । द्वितीयस्येत्याद्ययुक्तम् । अव्यावृत्तेदमर्थाभिन्नतया भातस्य पुरुषस्य स्थाण्वादितादात्म्यतया भानेऽपि व्यावृत्तमनुष्यादिदेहाभिन्नतया भातस्य

ष्याघ्रादितादात्म्यभानासंभवात् । अन्यथा ब्राह्मणोऽयं पुरुषः स्थाणुरयमिति ब्राह्मणतादात्म्यतया प्रतीतस्य कदाचित्स्थाणुतादात्म्यप्रतीत्यापत्तेः । ननु मनुष्यव्याघ्रादिदेहभेदज्ञानेऽपि स्थूलोऽहमित्याद्यध्यासो नानुपपन्नः । केनचिद्रूपेण भेदज्ञानेऽपि स्वरूपान्तरेण तदुपपत्तेः । स्फटिकोऽयं न जपाकुसुममिति निश्चयवतोऽपि स्फटिके लौहित्यात्मनाऽध्यासदर्शनादिति चेन्न । मनुष्यदेहाभिन्नतया गृहीतस्य ततो व्यावृत्तव्याघ्रादिदेहेनाभेदारोपासंभववत्स्थूलोऽहमिति स्थूलादितादात्म्येन गृहीतस्य कृशादिनाऽभेदभानासंभवात् । स्फटिके लौहित्यारोपस्य सोपाधिकत्वेनोपाधिनिवृत्तिं विना स्फटिकं न लोहितमिति ज्ञानेनापि निवृत्त्यसंभवाच्च । कर्ता शास्त्रार्थवत्त्वात् । कुरु कर्मैव तस्मात्त्वम् । मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसीत्याद्यनुरोधेन कर्तृत्वस्य जीवे वास्तवत्वात् । नह्याप्तो भगवानारोपमुपादिशति । यत्तु योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवेत्यादिश्रुतेः । विज्ञानमयजीवस्य संसरणे बुद्धिप्रधानत्वं बुद्धौ ध्यायन्त्यां ध्यायतीव च लेलायन्त्यां च लेलायतीव न तु स्वत इति ध्यानादिकमपि बुद्धिधर्मो जीव आरोपित इति तन्न । एतच्छ्रुतेरीशविषयकत्वात् । उभौ लोकौ जीवं संसारयतीत्यर्थात् । एवमग्रेऽपि णिजर्थगर्भत्वात् । न च लक्षणा प्रयोज्यप्रयोजकसाधारणस्य कर्तृमात्रस्य कर्तृत्वमात्रस्य वा तिङर्थत्वात् । ननु तस्य जीवसंसारकत्वे वैषम्याद्यापत्तिरित्यत इवेति । तथा चादृष्टसापेक्षतया कारयति लीलादिकमिति भावः । किंचैक्यस्यातिरिक्तत्वेऽद्वैतहानिः । मिथ्यात्वे भेदस्य सत्यत्वापत्तिः । अनतिरिक्तत्वे विशिष्टभाने भातत्वान्न शास्त्रविषयत्वम् । तज्ज्ञानस्य भेदज्ञानाविरोधित्वं चेत्यनुपपन्ना परोक्तिः । वस्तुतस्तूपक्रमाद्यनुसारात्स आत्मा अतत्वमसीत्येव च्छेदः । नञः सदृशार्थत्वेन ज्ञानानन्दादिना तत्सदृशोऽसीत्यर्थादध्यासकथाऽपार्था ।

ननु तत्त्वमसीति छेदेनाभेदसंभवात्कथं निर्णय इति चेत् सत्यम् । तथाऽप्यसंदिग्धभेदविषयदृष्टान्तानुगुण्येन भेदोपदेश एवायमिति निश्चीयते । यदा त्वेकमपि भेदविषयत्वेनासंदिग्धं दृष्टान्ताभिधानं संदिग्धप्रतिज्ञावाक्यार्थनिर्णयायालं किं पुनर्नवस्वपि प्रकरणेषु । न वाऽसंदिग्धार्थानि भेदविषयाणि दृष्टान्ताभिधानानि । तत्राऽऽदौ जीवेश्वरयोरत्यन्तभेदबोधनायासहायस्यैव भगवतस्तेजोबन्नादिसमस्तजगत्कारणत्वादिरूपं जीवेष्वसंभाव्यमानं मह-

न्माहात्म्यमुक्तम् । तच्चाऽऽगममात्रवेद्यं नानुभाविकमित्यतो जागरे जीवस्य स्वातन्त्र्याभिमानात् स्वापे तत्तदभावात्तत्र जीवस्येशाश्रयत्वमानुभाविकं कर्तुं स्वमान्तं सोम्य विजानीहीत्युपक्रान्तम् । तत्र जागरस्वप्नयोः शरीरेन्द्रियमनसामितस्ततो विक्षेपेण श्रान्तस्य जीवस्य श्रमापनोदाय स्वापे परेशाश्रयणमभिधाय तत्र दृष्टान्त उच्यते । स यथा शकुनिः सूत्रेण प्रतिबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयत एवं खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते । प्राणबन्धनं सोम्य मनः स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यम् । स आत्मा तत्त्वमसि श्वेतकेतो । तथा प्रसिद्धाऽशनायापिपासादियोगेन जीवानामीशाधीनत्वं प्रतिपाद्योपसंह्रियते । सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठा इति । एवमाद्येन प्रकरणेन जीवानामीशाश्रितत्वे कथिते न मत्तोऽन्योऽन्यस्मिन्देहेऽस्ति मया भेदेनानुपलभ्यमानत्वादित्याशयवता पुत्रेण भूय एव मा विज्ञापयत्विति पृष्टः पितोवाच । यथा सोम्य मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां रसं गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति । स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो । मधुकृतो भ्रमरा मधु निस्तिष्ठन्ति निर्मिमे कथं नानात्ययानां नानागतीनां परस्परविलक्षणानां वृक्षाणां रसानां समाहारं समूहमेकतां मिश्रतां गमयन्ति । यथा ते नानावृक्षरसास्तत्र विद्यमानं विवेकं न जानन्ति—अमुष्याऽऽम्रस्याहं रसोऽस्म्ययमन्यस्येति । एवमेवं परस्परं भेदं सोम्येमाः सर्वाः प्रजा जीवाः परमेश्वरशक्तिभिरेव स्वे स्वे शरीरे संपद्य तेन मिश्रीभावं प्राप्य सति संपद्यामह इति न विदुः । इह लोके प्रसिद्धो व्याघ्रो वेत्यादियद्भवन्ति तत्तत्परमेश्वराश्रितत्वाज्ञानादपराधादिति भवत्वचेतनानामुक्तरसानां मया चेतनत्वेन हेतुर्विशेष्यत इत्यभिप्रायेण पुनः पृष्टे पितोवाच । इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्पन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवाभियन्ति समुद्र एव भवन्ति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति । स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो । गङ्गाद्या नदीदेवताः प्रागञ्चनात्प्राचीशब्दवाच्याः पुरस्तात्स्पन्दन्ते स्रवन्ति तथा प्रत्यञ्चनात्प्रतीचीपदवाच्याः पश्चात्स्पन्दन्ते । एवं विलक्षणास्ता मेघादिद्वारेण समुद्रादुत्पन्ना उत्पन्नजलत्वात्समुद्रमेवाभियन्ति विश-

न्ति तथाऽपि समुद्रः समुद्र एव भवतीति। ता नदीदेवता यथा तत्र समुद्र इयं गङ्गाऽहमस्मीयं तु यमुना पश्चसमुद्रमेवापियन्ति विशन्ति तथाऽपि समुद्रमेवमन्या अपि न विदुरेवमेवेमाः प्रजाः परेशादागत्योत्पद्यापि सत आगच्छामह उत्पद्यामह उत्पन्ना इति न विदुः। एवं तत्र स्थिता अपि तमाश्रिता इति न विदुः। अस्त्वीशो भिन्नस्तथाऽपि जीवस्य तदधीनत्वं कुत इत्यभिप्रायवता पुनः पृष्टोऽब्रवीत्। अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति। अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति। द्वितीयां जहात्यथ सा शुष्यति। तृतीयां जहात्यथ सा शुष्यति। सर्वं जहाति सर्वं शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं हि म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्स आत्मा तत्त्वमसि श्वेतकेतो। अङ्कुरस्याभ्याघातेऽवस्थानासंभवान्महत इत्युक्तं यो यः कश्चिद्यदीत्यर्थः। जीवञ्जीवेन परमेश्वरेणाधिष्ठितश्चेत्तदा स्रवेद्रसमेवोद्गिरेन्न तु म्रियते। एवं स एष वृक्षो जीवोऽनेन प्रकृतेन जीवेनाऽऽत्मना परमेश्वरेणानुप्रभूतोऽधिष्ठितदेहः पेपीयमानः पुनः पुनर्भृशं वाऽपि। अनेनेदमुक्तं भवति। यथा वृक्षस्य सुखिनैव मयाऽऽस्थेयमितीच्छाऽस्ति विघातिनि सत्यपीशानुग्रहात्तथावस्थानं तदभावे च विघातिन्यसत्यपि स्वशरीरशोषणादिना नष्टं भवति तथा मानुषादिशरीरे परमेशाधीनत्वम्। एवं जीवस्य सत्तादिप्रदः परमात्माऽत्रैव शरीरे वर्तमानो जीवेन कुतो [न] दृश्यते। सौक्ष्म्यादिति चेन्न। जीवस्य सूक्ष्मस्वात्मदर्शनसद्भावादित्याशयेन पृष्टोऽब्रवीत्। सौम्येतमणिमानं न निभालय-एतस्य वै सौम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति। श्रद्धत्स्व सोम्येति स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो। न्यग्रोधफलमत आहरेति पिता आहूय न्यग्रोधफलमाहृतं भगवो भगवन्निति पुत्रः। मतुवसोरु संबुद्धौ छन्दसि। इदं फलं भिन्धीति पिता अब्रवीत्। अत्र भिन्ने फले किं पश्यसीति पिता अवदत्। सूक्ष्मा इमा धाना बीजानि पश्यामीति पुत्रः। अङ्गाऽऽसां धानानां मध्य एकां धानां भिन्धीति पिता। भित्त्वा भिन्नेति पुत्रः। अत्र भिन्नायां धानायां किं पश्यसीति पिता। किंचन पश्यामीति पुत्रः। एवमुक्तवन्तं तमुवाच पिता। यमेतमणिमानं भावभवित्रोरभेदात्परमसूक्ष्मं परमात्मानं न निभालयसे न पश्यसि। अस्याणिम्नः सामर्थ्यादेवापरिदृश्यमानप्रकारेण महान्न्यग्रोधस्तिष्ठतीति। अत्र वृक्षः प्रपञ्चः फलं शरीरं धाना जीवः। तत्र यथा

सूक्ष्मे वटबीजे दृश्यमानेऽपि यत्प्रभावाद्वटावस्थानं स जीवान्तर्गतः परमात्मा परमसूक्ष्मत्वान्न दृश्यते। तथा जीवादपि सूक्ष्मत्वात्तदन्तर्गत इत्युक्तं भवति। ननु वटावस्थानादिना कार्येणेश्वरसामर्थ्यं तावत्प्रत्यक्षमिव प्रतीयते। एवं तत्सामर्थ्ये दृश्यमानेऽपि तस्यादर्शनमित्येतत्कथं जानीयामिति प्रार्थितः प्रोवाच पिता। यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति सत्सौम्य न निभालयसेऽत्रैव किलेति स य एषोऽणिमैतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि श्वेतकेतो। अवधाय निक्षिप्य तथा चकार पुत्रः। तं होवाच पिता। यद्दोषा लवणमुदकेऽवाधा यल्लवणं दोषावद्ग्रहण उदकेऽवाधा निक्षिप्तवांस्तल्लवणमुदके हस्तेनावमृश्य न विवेद पुत्रः। यथा विलीनमेवारन्ध्रनष्टं वस्तु न विदन्ति तथाऽङ्गास्योदकस्यान्तात्पूर्वदिगवस्थितादवयवादुधृत्यैकदेशमाचामेति पिता। आचान्तवन्तं कथं तिष्ठतीति पप्रच्छ पिता। लवणं लवणरसोपेतमाह पुत्रः। एवं मध्यादन्त्यात्। पश्चिमदिगवस्थिताच्चैतदुदकमभिप्रास्य निरस्याथ मामुपसीदथा इति पिता तथा चकार पुत्रः। यथा लवणगुणे दृश्यमाने न लवणं दृश्यते तथा सामर्थ्ये दृश्यमानेऽपि न भगवानित्युक्तम्। एवं भूतोऽपि हरिरविद्यापटलपिहितनयनेनानेन कथं दृश्यते प्राप्यते चेति जिज्ञासायामाह पिता। यथा सोम्य पुरुषं गन्धारेभ्यो पिनद्धाक्षमानीय तं ततोऽभिजने विसृजेत्स यथा तत्राऽऽनीतोऽभिनद्धाक्षो विसृष्टस्तस्य यथाऽभिहननं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति। स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाऽऽचार्यवान्पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति। स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यम्। स आत्मा तत्त्वमसि श्वेतकेतो। यथा सोम्य पुरुषमित्यादि विसृजेदित्यन्तपरं वाक्यं स यथा तत्राभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टस्तस्य यथाऽभिहननं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवाऽऽचार्यवान् पुरुषो वेदेति। पुरुषं धनिकं गन्धारसंज्ञकेभ्यो जनपदेभ्यः। अभिनद्धाक्षोऽक्षिणी बद्ध्वेति यावत्ततोऽनन्तरमभिजने जनरहितेऽरण्ये विसृजेच्चौरः स विसृष्टः प्राङेति सर्वदिगभिमुखं प्राध्मापीत उच्चैःशब्दं कुर्यात्। किमित्यभिनद्धाक्ष इत्याद्यस्मीति शेषः। यथा सम्यक् तद्वाक्यं

श्रुत्वा कश्चित्कृपावान् प्रब्रूयात् । एतां दिशमस्यां दिशि गन्धाराः सन्ति । व्यत्ययो बहुलमिति स्मृतेः । सदुपदिष्टाद् ग्रामान्निर्गत्यापरं ग्रामं पृच्छन् पण्डितः प्राज्ञो मेधावी स्मृतिमानेवमेवेति । अनाद्यविद्याभिराच्छादितनिजज्ञानो जीवः संसारे पतितः । ईशानुग्रहाज्जातजिज्ञासो गुरूपदेशं लब्ध्वा क्रमापन्नानि श्रवणादीनि साधनान्यनुष्ठाय स्वजन्मभूमिं भगवन्तं पश्यति प्राप्नोति चेत्युक्तं भवति । अवगतं वृक्षशरीरे भगवदधीनत्वं जीवस्य मानुषशरीर एव तापयेत्यर्थितः पितोवाच पुरुषं सोम्योपतापिनं ज्ञातयः पर्युदासते जानासि मां जानासि मामिति तस्य यावद्वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो । उपतापिनं रोगिणं पर्युदासते परित उपविशन्ति जानासि मामिति वदन्तः संपद्यते ग्रस्तव्यापारो भवति यथा रोगी ग्रस्तेन्द्रियव्यापारः पार्श्वस्थान्न वेद तथा सुषुप्त्यादौ परेण संपन्नो जीवो बाह्यमाभ्यन्तरं च न वेद । प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं वेद नाऽऽन्तरमिति श्रुत्यन्तरादिति । एवं सर्वप्रेरकं महानुभावं भगवन्तं योऽत्यन्तभेदेन जानाति यश्च स एवाहमस्मीति तयोः कीदृशं फलमिति जिज्ञासायामाह पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तेन एवानृतमात्मनि कुरुते सोऽनृताभिसंधो न तेनाऽऽत्मानमन्तर्धाय परशुतप्तं प्रतिगृह्णाति स यदि तस्य कर्ता भवति तेन एवानृतमात्मनि कुरुते सोऽनृताभिसंधो नरो नाऽऽत्मानमन्तर्धाय परशुतप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते । अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते । स सत्याभिसंधः सत्येनाऽऽत्मानमन्तर्धाय परशुतप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते । तत्र नादाह्येतैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो । राजद्रव्येऽपगते सति शङ्कास्पदं पुरुषमानयन्ति राजभटाः । अयमपहार्षीदपाहार्षीत् पश्यतो हरत्वमपहारः । अन्यत्स्तेयमिति वदन्त इति शेषः । ततः स्तेनेन नेदं मया कृतमित्युक्ते भटान् प्रति राजा वक्ति परशुमस्मा अस्य परीक्षार्थं संगृहीतो यदि तस्यापहारादेः कर्ता भवत्यथ च नेति ब्रूते । अनृतेऽभिसंधाऽभिसंधाऽभिसंधिरस्येति । तथोक्तोऽन्तर्धायाऽऽच्छाद्य एवमेव खलु सोम्याऽऽचार्यवानिति वाक्यं

स्थानान्तरस्थमपीदं सर्वत्र संबध्यत इति ज्ञापयितुमन्ते पठितम् । एवं स्थाननवकेऽपि भेद एव दृष्टान्ता अभिहिता नत्वेकोऽपि दृष्टान्तोऽभेदविषयेऽभिहित इति नवदृष्टान्तानां भेदपरत्वं स्पष्टम् । अत एव प्रयोजनमपि न । न च कण्ठस्थविस्मृतमणिप्राप्तिरिव प्रयोजनोपपत्तिरिति वाच्यम् । तत्र दुःखनिवृत्तेः सुखावाप्तेरिव च प्रकृते स्वरूपातिरिक्तस्याभावात् । अत एव मुमुक्षाऽपि न युक्ता । सिद्ध इच्छाविरहात् । ननु सर्वोऽपि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणो भवतामप्यारोपित एव । तदुक्तं भाष्ये—प्रमादात्मकत्वाद्बन्धस्येति । अतः कथं तन्मिथ्यात्वनिरास इति चेत्सत्यम् क्रियाज्ञानं प्रति कारकान्तराप्रयोज्यत्वादिलक्षणकर्तृत्वं भोक्तृत्वं च परमेश्वरायत्तमात्मनि स्वतो विद्यत एव । तस्य स्वायत्तत्वाभासोऽविद्यानिमित्तको भ्रमः। अविद्यादिकं च स्वरूपेणाऽऽत्मसंबन्धित्वेन च सदेव पिशाचादिवत् । एवं बुद्धीन्द्रियशरीरविषयाः स्वरूपतः सत एवेश्वरपरवशा अप्यविद्यादिवशादात्मीयितयाऽध्यस्यते परायत्ताऽऽत्मीयताऽप्यस्त्येव तांश्चाऽऽत्मनो विविक्ताऽपि विस्पष्टतयाऽनुपलभमानस्तद्धर्मान् दुःखादीन्सत्यानेवानात्मीयत्वेनापश्यंस्तत्कृते नीचोच्चत्वलक्षणे कर्मणि विकृतीत्येव प्रपद्यते । ततो रागादिना प्रयुक्तस्तद्विनिवृत्तये यत्करोति तदप्येतादृगेवाऽऽननोतीत्यनेकयोनिषु भ्रमतीति क्वाप्यात्यन्तिकं तदुपशमं न लभते विना परमपुरुषाराधनात् । ब्रह्मशब्दस्तु विष्णावेवायमन्तःसमुद्रे कवयो वयन्ति तदक्षरं परमं प्रजाः सतः प्रसूता जगतः प्रसूती तोयेन जीवान् ससर्ज भूम्यामित्युक्ता तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामिति श्रुतेः परं ब्रह्म परं धामेति बृहत्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितमिति स्मृतेश्च । तस्माद्वेदान्तादिनाऽऽपातप्रतीते ब्रह्मणि सगुणनिर्गुणाल्पगुणत्वादिना विप्रतिपत्तेर्जिज्ञास्यत्वमिति ।

**ॐ जन्माद्यस्य यतः । ॐ २ । १ । १ ।**

जिज्ञासाकारणगुणपूर्तिप्रसिद्धये जीवादिभेदकं विष्णोर्विश्वकर्तृत्वमुच्यते । पूर्वोक्तजिज्ञासाक्षेपेणेह पूर्वपक्षोत्थानादाक्षेपिकी संगतिः । यद्वाऽऽद्ये साधनादिसहितं ब्रह्म विचार्यमित्युक्तम् । तच्च लक्षणप्रमाणाभ्याम् । तत्र लक्षणविशिष्टे प्रमाणाकाङ्क्षेति लक्षणस्य प्राथम्यमिति तदुच्यते । अत्र तद्विजिज्ञासस्वेति वाक्यस्थं किं जीव उत विष्णुरिति तत्र जीव एव बृहज्जातिजीवकमलासनशब्दराशिष्वित्यभिधानाद् ब्रह्मशब्दस्य रूढेः । विष्णौ तु यौगिकत्वात् । रूढेश्चावयवार्थनिरपेक्षायास्तत्सापेक्षयोगाद्बलीयस्त्वस्य रथकारादिषु स्थितत्वात् । न चाऽस्यासंदिग्धजीवपरतया जिज्ञास्यत्वमेवासिद्धमिति वाच्यम् । जीवस्यापि देहा-

द्न्यतया हि संदिग्धत्वेन जिज्ञास्यत्वमस्त्येव । न च जीवपरत्वे यतो वेत्यादि-पूर्ववाक्योक्तकारणत्वं बाधकम् । विधिगतब्रह्मपदस्वारस्याय जीवस्याप्यदृष्टद्वारा वा जीवकल्पितत्वेन वा तत्र हेतुत्वोपपत्तेः। इमानीत्यनेन जीवकर्तृककार्यजातमिति भगवदुक्तस्यैव निर्देशोपपत्तेश्च। अत एवाऽऽत्मा वाऽरे द्रष्टव्य इत्यत्रोपक्रमानुरोधेन जीवस्य द्रष्टव्यत्वविधानेन जिज्ञासाविधायकवाक्ये प्रसिद्धपदप्रयोगः । ब्रह्मणो निष्क्रियत्वेन कर्तृत्वस्य निर्विकारत्वेनोपादानत्वस्य चासंभवेन कारणत्वस्य ब्रह्मपक्ष एव बाध्यत्वाच्चेति प्राप्ते यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यमभिसंविशन्तीत्यनुरोधेन विष्णुरेव ब्रह्मपदाभिधेयः। उत्पत्ति-स्थितिसंहारा नियतिर्ज्ञानमावृत्तिर्बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडिति स्कान्दोक्तेः। आदिपदगृहीता नियत्यादयोऽपि यतो भवन्ति स जिज्ञास्यः। न च जीवे ते संभवन्ति । मुक्तप्राप्तिरूपसंवेशोऽपि नास्ति । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति भगवदुक्तेः । मत्तः स्मृतिर्ज्ञानमपोहनं चेति ज्ञाना-दिकर्तृत्वोक्तेः। अपोहनं ज्ञानाभावः।

ननु कथं जगत्सृष्ट्यादिकारणत्वं हरेरेव । हिरण्यगर्भः समवर्तताग्रे । एको रुद्रो न द्वितीयाय तस्थे । इमाँल्लोकानीशते ईशनीभिः । ज्ञात्वा शिवं शान्तिमत्यन्तमेतीत्यादौ तदन्येषामपि प्रतीयत इति चेन्न । नामानि सर्वाणि यमाविशन्तीति श्रुतेर्विष्णुरेव तत्तन्नाम्नाऽभिधीयते यतः । न च विनिगमनाविरहः । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय । वेदैश्च सर्वैरहमेव वेद्यः । मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरमिति विनिग-मकसत्त्वात् । तत्त्वं नारायणः परः । आत्मा नारायणः परः । एको ह वै नारायण आसीन्न ब्रह्मा नेशानः । विष्णुस्तदाऽसीद्धरिरेव निष्कलः। नैव ह किंचनाग्र आसीत् । दिव्यो देव एको नारायणः । नाराय-णाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादि श्रुतेश्च । यन्न देवा न मुनयो न वाऽहं न च शंकरः। जानन्ति परमेशस्य तद्विष्णोः परमं पदम् । स तु नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः। प्रकृतिर्या मयाऽऽख्याता व्यक्ता-व्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः । स विष्णुनामा वेदेषु वेदान्तेषु च गीयत इत्यादिस्मृतेश्च। जन्मादिकं प्रत्येकलक्षणं न तु समुदितमेकमेव। व्यावर्त्याभावात्।

न हि जगज्जन्मादिकारणं स्थित्याद्यकारणं च किंचिदस्ति । विषयोपपादकगुणपूर्तिसिद्धये जीवाद्भेदके प्रसिद्धे जन्मादित्रितयहेतुत्वेऽभिहितेऽपि प्रयोजनसिद्धये मोक्षदत्वस्यापि वक्तव्यत्वात्तस्य बन्धकत्वं विना योगात्तयोश्च तद्धेतुज्ञानाज्ञानदत्वं विनाऽनुपपत्तेस्त्रितयहेतुत्वस्यापि वक्तव्यत्वात्पुनश्च दीपस्तम इव ज्ञानं बन्धकाज्ञानं स्वभावादेव हन्ति किमीश्वरेणेति शङ्कायां दीपज्ञानादेः स्वभावोऽपि भगवन्नियत इति वाच्यत्वात्प्रकृतोपयोगितयाऽष्टकोक्तिः । तथा च स्रष्टृत्वादावेकैकस्यैव लक्षणत्वोपपत्तावपि त्रितयोक्तिः । स्थितिहेतुरन्य इति शङ्कानिरासार्थं वाऽनेकलक्षणसूचनार्थं वा तथाऽष्टकोक्तिरप्येतदर्थमस्तु । तद्गुणसंविज्ञानो बहुव्रीहिर्यतो वेत्यनुरोधात् । लाघवाय नपुंसकत्वनिर्देशः । न च सूत्र एकवचनात्प्रत्येकलक्षणमयुक्तम् । यत्र सास्नादयः सा गौः । हलोऽनन्तराः संयोग इत्यादौ बहुवचनेऽपि समुदाये लक्षणत्वं संयोगादेः । यस्य च्छत्रादिकं स राजा । अजाद्यतष्टाबित्यादावेकवचनेऽपि प्रत्येकं लक्षणत्वादेर्दर्शनात् । यत्तु जन्मादिकारणत्वं तटस्थलक्षणमानन्दादिरेव स्वरूपलक्षणमिति । तत्र न तावल्लक्ष्यगतागतिः ते । आनन्दादेः स्वरूपातिरिक्तस्य त्वयाऽनङ्गीकारात् । स्वरूपस्य तु लक्षणत्वायोगात् । कल्पितोऽतिरिक्त आनन्दादिरस्तीति चेत् । जन्मादिकर्तृत्वस्यापि तादृशस्य सत्त्वेन विशेषोऽसिद्धः । किंच शाखास्थूलतारादिकं न चन्द्रारुन्धत्यादिलक्षणत्वेनोच्यते । किंतु व्यक्तिं दृष्ट्वा स चन्द्र इत्यादिकं च वक्तुं शाखा प्रदर्श्यते । प्रकृते तु न तथा । शब्दैकगम्यशुद्धरूपस्य मानान्तरायोग्यत्वात् । शाखादिज्ञाप्यप्रकृष्टप्रकाशस्थानीयस्य स्वरूपव्यतिरिक्तस्य व्यक्तिसमसत्त्वस्य धर्मस्य तेऽभावाच्च । नापि यावत्स्वप्रत्याप्यव्यावृत्तिभाव्यभाविनी ते । वास्तवस्य स्वरूपातिरिक्तस्य व्यावृत्तिव्यावर्तकादेरभावात् । अन्यादृशस्य कर्तृत्वादेरपि सत्त्वात् । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छतीति कर्तृत्वादिज्ञानस्य मोचकत्वोक्तेश्च ।

ननु प्रश्नोपनिषदि षोडशकलं पुरुषं प्रस्तुत्य तं त्वां पृच्छामि क्वासौ पुरुष इति. भारद्वाजप्रश्ने तस्मै स होवाच । इहैवान्तःशरीरे स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्ति । स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिंश्च प्रतिष्ठिते प्रतिष्ठामीति । स

प्राणमसृजत प्राणाच्छ्रद्धां खं वायुं ज्योतिरपः पृथिवीमिन्द्रियं मनोऽन्नाद्वीर्यं तपोमन्त्रान् । कर्मलोकेषु नाम चेति जीवस्य प्राणादिस्रष्टृत्वं श्रूयते । तदस्मदादेरसंभवेऽपि हिरण्यगर्भस्य संभवात्स एव सर्वजगत्सृष्ट्यादिकर्तेति प्राप्ते परेशः प्रथमं वियदादीनुत्पाद्य त्रिवृत्करणानन्तरं तैरण्डं निर्ममे । ततो हि तत्र हिरण्यगर्भं निर्ममे । यो ब्रह्माणं विदधाति । हिरण्यगर्भः समवर्तताग्र इत्याद्यनुरोधेन प्रश्नोपनिषदुक्तः षोडशकलादिस्रष्टा परमात्मैवेति सिद्धान्त इति केचित् । किंच जन्मादिकारणत्वस्य तटस्थलक्षणत्वे वैयर्थ्यम् । यत्तु पूर्वसूत्राल्लक्ष्यसमर्पकं ब्रह्मपदमनुवर्तते तच्च प्रत्यगभिन्नंनिष्प्रपञ्चवस्तुपरम् । उपपदादिसंकोचाभावेन तस्य त्रिविधपरिच्छेदशून्यपरत्वात् । ब्रह्मत्वमात्रबाधितेऽपि वैपुल्यापरपर्यायस्य ब्रह्मत्वस्य यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीति श्रुत्या वस्तुपरिच्छेदशून्यलक्षणस्योक्तत्वाच्च । तच्च ब्रह्मणः प्रत्यगभिन्नत्वे प्रपञ्चस्य सत्त्वे च न घटते । तदाधारत्वनियन्तृत्वादिधर्माणां ब्रह्मणि सत्यतापत्त्या नान्यदित्याद्यसंभवापत्तेः । एवं च परब्रह्मशब्दार्थतया प्राप्तस्य निष्प्रपञ्चत्वस्य यद्रजतमभात्सा शुक्तिरितिवदध्यारोपापवादन्यायेन सिद्ध्यर्थं तटस्थलक्षणं स्वरूपविशेषप्रतिपत्त्यर्थः स्वरूपलक्षणमिति न कस्यापि वैयर्थ्यमिति । तन्न । ब्रह्मपदस्य प्रत्यगभिन्नाद्यर्थकत्वस्य त्वन्मनोरथमात्रत्वात्तत्र योगस्य रूढेश्चाभावात् । बृहत्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितं तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारवदिति श्रीवैष्णवोक्तेः । बृहत्वं देशतः कालतो गुणतश्च बृंहणत्वादितरेषां संवर्धकत्वात् । एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः । परं च सर्वभूतेभ्यस्तस्माद्वृद्धतमोऽच्युत इति भारतादौ प्रकृतित्वकर्तृत्वादिविशिष्टस्यैव वृद्धशब्दार्थोक्तेश्च । ब्रह्मत्वमात्रेत्याद्ययुक्तं गुणादिवैपुल्यस्यैव भूमपदार्थत्वेन तवानिष्टत्वात् । यत्रेत्यादि शोभते । एवं पश्यन्नेवं मन्वान एवं विजानन्सर्वेषु लोकेषु कामचारो भवतीति तत्रैव दर्शनादेरप्युक्तेः । संयोगादिनाऽऽधाराधेयत्वादिना संबन्धेन समस्याधिकस्यैव च नान्यदित्यादिना दर्शनादिनिषेधात् । तस्यैव निरवधिकवैपुल्यविरोधित्वात् । दृष्टं हि कालतो विपुलस्य वटत्वादेर्घटादौ देशतो विपुलस्य च्छत्रादेः शङ्खादौ गुणतो विपुलस्य चिन्तामण्यादेर्मञ्जूषादौ विद्यमानत्वम् । अन्यपदस्य तद्भिन्नतत्सदृशसंनिहितवाचित्वं समानमितरस्थोनेनेत्यत्रोक्तम् । तथा हि ।

इषुर्नामैकाहस्तत्र वषट्कारानिधनादयोऽपूर्वे पदार्थाः सामाद्युद्देशेन केचन विहिताः । अप्राकृतत्वेन तत्सदृशाः । श्येने येऽपूर्वे कण्टकवितोदनादयो विहितास्त इषौ कार्या इति । अथवाऽतिदेशेनेषौ संनिहितान्युद्देश्य- तथा पूर्वोक्तानि यानि प्राकृताङ्गानि तद्भिन्नतत्सदृशसंनिहितानि प्राकृ- तान्येवेतरपदेनोपादाय तत्र श्येनधर्मसादृश्यं विधीयते । श्येने प्राकृतं यद्यदङ्गोद्देशेन यद्यद्विहितं तत्तदुद्देशेनेषौ कार्यम् । उष्णीषाद्युद्देशेन लौहित्या- दयः श्येने विहितास्त इषौ कार्या इति भावः । यदि न्यायेन प्रतियोगितया ब्रह्मान्वय इति परस्यापि संमतम् । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । यस्मिन्नित्ये ततेऽनन्ते दृढे स्रगिव तिष्ठति । सद्- सद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्माणि । अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिमित्यादिद्युभ्वाद्यधिकरणादिविरोधात्त्वदुक्तः स्वरूपेणेतरनिषेधस्त्वयुक्तः । किंच ब्रह्मपदस्य निष्प्रपञ्चवस्तुपरत्वे तेनैव त्वदिष्टसिद्धौ सत्यादिपदवै- यर्थ्यापत्तेः । यद्जनेत्याद्युक्तं लक्षणवाक्यं हि लक्ष्यसमसत्ताकं लक्षणं तत्र बोधयदितरव्यावृत्तिबुद्धिं जनयति । या रजततयाऽभात्सा शुक्ति- रिति वाक्यस्य किं शुक्तेर्लक्षणमित्याकाङ्क्षानिवर्तकत्वात् । निर्विशेषे विभा- गाभावेन स्वरूपलक्षणवैयर्थ्यापरिहाराच्च । यत्तूक्तं विवरणे विषयानवच्छि- न्नमादित्यादिवदर्थप्रकाशनसमर्थं ज्ञानं स्वरूपलक्षणमिति । तन्न । स्वरू- पातिरिक्तस्याभावात् । स्वरूपस्यालक्षणत्वात् । कल्पितस्य कर्तृत्वादितुल्य- त्वात् । एतेन सोपाधिकनिरूपाधिके ते इति निरस्तम् । ज्ञानादेरतिरि- क्तत्वे सोपाधिकत्वादनतिरिक्तत्वेऽलक्षणत्वात् । किंचासाधारणो धर्मि- समसत्ताको धर्मो हि लक्षणम् । तच्च निर्धर्मकब्रह्मवादिनां न युज्यते । धर्म्यसमसत्ताककर्तृत्वादेः प्रकृतावपि संभवात् । किंच जन्महेतुत्वेनोपल- क्षणेनोपलक्ष्यज्ञानसिद्धेः । स्थितिहेतुत्वाद्युपलक्षणान्तरवैयर्थ्यम् । अस्मन्मते तु जन्महेतुत्ववत् स्थितिहेतुत्वादेरपि मुमुक्षुज्ञेयत्वात् । अतो यावल्लक्ष्यभावि स्वरूपलक्षणमेवेदम् । एष नित्यो महिमा ब्राह्मणस्य स्वाभाविकी ज्ञानबल- क्रिया चेत्यादिश्रुतेः । निर्गुणत्वादिश्रुतिस्तु सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा इत्याद्यनुसारात्प्राकृतगुणाभावपरा । निष्क्रियत्वादिश्रुतिरपि न मां तानि कर्माणि निबध्नन्ति धनंजयेत्याद्यनुसारान्निर्लेपपरा । न च निमित्तकारणे लयो न दृष्टः । लूतादौ तद्दर्शनात् । न च सोपादानं

तन्नाशेऽपि तन्तुस्थितिदर्शनात् । न चाऽऽत्मा द्रष्टव्य इत्यत्र जीवस्योपक्रमः । उपक्रमस्येशपरताया वक्ष्यमाणत्वात् ।

ननु जगत्कर्तृत्वादिकं तदाक्षिप्तसर्वज्ञत्वादिकं लक्षणं लक्ष्याद्भिन्नमभिन्नं भिन्नाभिन्नं वा । नाऽऽद्यः । मेरुमन्दरवल्लक्ष्यलक्षणभावस्य गुणगुणिभावस्य चानुपपत्तेः । संबन्धसद्भावान्नेति चेन्न । तस्यापि संबन्धिभ्यामन्यत्वानन्यत्वानिरूपणात् । न द्वितीयः । अनेकैरभिन्नस्य ब्रह्मणोऽप्यनेकत्वापत्तेः । तथा चैकमेवेति विरोधाल्लक्ष्यलक्षणभावो गुणगुणिभावश्चाभेदे नोपपद्यते । न तृतीयः । परस्परविरोधात् । अतोऽशक्यनिरूपणत्वान्नेदं ब्रह्मस्वरूपगतं लक्षणं किंतु तटस्थमेव । न च तेन सद्वितीयत्वम् । यद्रजतमित्यभात्सा शुक्तिरितिवन्मिथ्याभूतेनापि प्रपञ्चकारणत्वेनोपलक्षणयोगादिति । अत्रोच्यते । तवाप्यैक्यं ब्रह्माभिन्नं भिन्नं भिन्नाभिन्नं वा । नाऽऽद्यः । स्वरूपस्य ज्ञातत्वेन शास्त्रवैयर्थ्यात् । अज्ञातत्वे त्वाधिष्ठानाभानादितरारोपानापत्तेर्जगदान्ध्यापत्तेश्च । न द्वितीयः । वेदान्तानामखण्डार्थकत्वहानेस्तद्भेदोऽपि भिन्न इत्यनवस्थापत्तेश्च । न तृतीयः । विरोधादिदोषात् । किंच सत्यज्ञानादिकं परस्परं ब्रह्मणा चात्यन्ताभिन्नं भिन्नं भिन्नाभिन्नं वा । नाऽऽद्यः । स्वप्रकाशस्वरूपात्मकेन शास्त्राप्रतिपाद्यत्वापत्तेः । सत्यादिपदानां पर्यायतापत्तेश्च । एकपदेनैव स्वरूपज्ञानादितरवैयर्थ्यात् । अखण्डे ज्ञाताज्ञातविभागाभावेनाविचार्यत्वाच्च । न द्वितीयः । तात्त्विकत्वेऽद्वैतहानिरतात्त्विकत्वे कल्पितत्वेन मूलाज्ञानाविषयत्वेन सदाप्रकाशाच्छास्त्रवैयर्थ्यादनवस्थापत्तेश्च । न तृतीयः । विरोधादिदोषात् । न चाभिन्नमेव सत्यादिकं कल्पितसत्यत्वादिना चापर्यायत्वमिति वाच्यम् । तस्याज्ञानकल्पितस्याज्ञानाविषयत्वेन तद्विषयतानवच्छेकत्वेन च तेन रूपेण ब्रह्मणो ज्ञातत्वासंभवाद् वेदान्तानामखण्डार्थकत्वहानेश्च । तद्वज्जगत्कर्तृतादेरपि स्वीकारापत्तेश्च न चासदादिव्यावृत्तय एवापर्यायत्वोपपादिकाः । उक्तदोषात् । सिद्धान्ते सत्यत्वादिजगत्कर्तृत्वादीनां परस्परं ब्रह्मणा वा भिन्नत्वेऽपि भेदप्रतिनिधिविशेषस्वीकारेण न पर्यायत्वम् । न चोक्तविकल्पः । तस्य स्वपरनिर्वाहकत्वेनैवाङ्गीकारात् । केचित्तु भिन्नमेव ज्ञानादिकं परस्परं ब्रह्मणा वा । न च स्वरूपस्य जडत्वाद्यापत्तिः । ज्ञानत्वाद्यवच्छिन्नभेदाभावात् । न च ज्ञानयोर्विशेष्यविशेषणभावानुपपत्तिः । दण्डी पुरुष इत्यादौ पार्थिवस्य दण्डादेः

पार्थिवे पुरुषादौ विशेषणत्वदर्शनात् । दण्डत्वपुरुषत्वयोरिव गुणत्वेच्छादिमत्त्वयोर्भेदकयोः सत्त्वात् । न च स्वरूपप्रकाशेनैवोपपत्तावतिरिक्तज्ञानादौ प्रयोजनाभावः । प्रमाणस्य प्रयोजनमुखानिरीक्षकत्वात् । प्रमाणं च, सत्यं ज्ञानमनन्तं ब्रह्म । विज्ञानमानन्दं ब्रह्म । सत्यं यस्मिन् प्रतिष्ठितम् । यः सर्वज्ञः सर्ववित् । आनन्दं ब्रह्मणो विद्वानित्यादौ । विज्ञानं यज्ञं तनुते । सर्वं ह पश्यः पश्यतीत्यादि जीवेऽप्यस्ति । त्रिकालाबाध्यत्वरूपस्य सदेकाकाररूपस्य च सत्त्वस्येशतद्गुणयोः सत्त्वात् । जीवतद्धर्मयोरबाध्यत्वेऽपि कर्मरूपाविद्यावशाद्धर्मांशे संकोचादिस्वीकारात् । निरञ्जनः परमं साम्यमुपैति । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इत्यादिना धर्माविर्भावेन साम्यस्योक्तत्वात् । ननु सत्यत्वादीनामन्योन्यानधिकरणत्वे जडत्वाद्यापत्तिस्तथा च सत्यकामः सत्यसंकल्पः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यत इति श्रुतिविरोधः । अधिकरणत्वे तु तेषामपि ब्रह्मत्वापत्त्या ब्रह्मैक्यावगमविरोध इति चेन्न । अन्योन्याधिकरणत्वेऽपि सत्यत्वादीनां स्वस्वानधिकरणत्वेनाब्रह्मत्वोपपत्तेः । न चैवं धर्मान्पृथग्विधान् । एकधैवानुद्रष्टव्य इति विरोधः । गुणानां यावद्द्रव्यभावित्वविधानात् । प्रकारभेदेन ब्रह्मणो भेदनिषेधाच्च । न च सत्त्वस्य स्वस्य स्वानधिकरणत्वेऽसत्त्वापत्तिः । प्रमेयत्वं प्रमेयमित्यादिवत्स्वनिर्वाहकत्वाङ्गीकारादित्याहुः। अतो विचारजन्यमुक्तलक्षणभक्तिपूर्वकं महाप्रसादद्वारकं भगवदपरोक्षज्ञानं भगवच्छक्तिरूपाविद्यां निवर्तयत्स्वरूपानन्दाविर्भावरूपमोक्षहेतुरिति । जगत्कर्तृत्वाद्यनन्तधर्मविशिष्टो नारायणो जिज्ञास्य इति सिद्धम् ।

ॐ शास्त्रयोनित्वात् ॐ ॥ १ । १ । ३ ॥

उक्तलक्षणातिव्याप्तिनिरासाय प्रमाणमुच्यत इत्यवान्तरसंगतिः । न चैतत्स्मृत्यनवकाशदोष इति स्मृत्यधिकरणेन पुनरुक्तम्। अत्रानुमानेन पूर्वपक्षे तदयोग्यत्वेन सिद्धान्तः । तन्न । शैवाद्यागमेन पूर्वपक्षे तदप्रामाण्येन सिद्धान्त इति भेदात् । अत्र जगत्कारणत्वमन्यस्यापि विष्णोरेव वेति चिन्ता । तदर्थमुक्तकारणत्वमनुमानयोग्यमुतायोग्यम्। तत्रानुमानेन रुद्रादीनामपि कारणतासिद्धेरतिव्याप्तिः । शिवो जगज्जन्मादिकर्ता सर्वसंहर्तृत्वादित्यादि व्यतिरेकिणा तत्सिद्धेः । जगत्पालकत्वं न तज्जन्महेत्वेकनिष्ठम् । पालनशक्तित्वाद्घटादिपालनशक्तिवत् । तथा जगत्संहर्तृत्वं न स्रष्ट्रेकनिष्ठम् । संहारशक्तित्वात् ।

घटसंहारशक्तिवदिति स्रष्ट्रादिभेदसिद्धिरिति प्राप्ते । नावेदविन्मनुते । औपनिषद[ मि ]त्यादिना ब्रह्मणः शास्त्रैकगम्यत्वसिद्ध्या तन्निष्ठकारणत्वादिकमपि शास्त्रैकगम्यम् । न च रुद्रादेरेवास्तु जन्मादिहेतुत्वमिति वाच्यम् । वासुदेवावताराय सर्गस्थित्यन्तकारिणे । अनेकरूपरूपाय स्थूलसूक्ष्माय ते नमः । अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे । विष्णुं ग्रसिष्णुं सर्वस्य स्थितिसर्गे तथा प्रभुम् । प्रणम्य जगतामीशमजमक्षरमव्ययमिति कारणत्वादेर्विष्ण्वेकनिष्ठत्वोक्तेः । चतुर्मुखादिरूपेण नारायणस्य कर्तृत्वं स्मर्यते । प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः । नारायणः परोऽचिन्त्यः परेषामपि स प्रभुः । ब्रह्मस्वरूपी भगवाननादिः सर्वसंभवः । सर्गस्थितिविनाशांस्तु भगवान्मधुसूदनः । तैस्तै रूपैरचिन्त्यात्मा करोत्यव्याहतान् विभुः । जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः । ब्रह्मा भूत्वाऽस्य जगतो विसृष्टौ संप्रवर्तते । सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना । सत्त्वभुग्भगवान् विष्णुरप्रमेयपराक्रमः । तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः । मैत्रेयाखिलभूतानि भक्षयत्यतिभीषण इति । अन्यत्रापि—बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् । चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः । प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिरेति स्मर्यते । तथा च विष्ण्वेकनिष्ठकर्तृत्वबोधकागमेन बाधान्नोक्तानुमानं प्रमाणम् । अन्यथा पशुत्वादिना शशस्य विषाणित्वसिद्ध्यापत्तेः ।

ननु शिवागमे शिवस्यापि जगत्कर्तृत्वमिति चेन्न । तस्याशास्त्रत्वात् । वेद एव हि शास्त्रपदेनोच्यते । न च वैष्णवागमस्याशास्त्रत्वं शङ्क्यम् । तस्य वेदसमत्वात् । इदं महोपनिषदं चतुर्वेदसमन्वितम् । सांख्ययोगं कृतान्तेन पञ्चरात्रानुशब्दितम् । नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः । ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् । ये त्वत्र ब्रह्मसदने सिद्धसंघाः समागताः । तेभ्यस्तु श्रावयमास पुराणं वेदसंमितम् । अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् । सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानाव्रतानि वै । पञ्चरात्रस्य शास्त्रस्य वक्ता तु भगवान् स्वयम् । तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः । निष्टा नारायणमृषिमिति शास्त्रपदवाच्यत्ववेदसमत्वयोः पञ्चरात्रस्य महाभारतेऽभिहितत्वात् । अतः शास्त्रं योनिरभिव्यक्तिकारणं यस्य स विष्णुर्जिज्ञास्य इत्यर्थः ।

यत्तु जगत्कारणत्वेन सिद्धे सर्वज्ञे शास्त्रयोनित्वं हेत्वन्तरमुच्यते—वेदः स्वविषयादधिकविषयकज्ञानवत्प्रणीतः । प्रमाणवाक्यत्वात् । पाणिन्यादिशास्त्रवदिति । तन्न । एकार्थमात्रज्ञेन प्रयुक्तस्यानेकार्थस्य शब्दस्याबाधितानेकार्थबोधकत्वदर्शनात् । वेदस्य पौरुषेयापत्तेश्च । पुरुषस्य शङ्कितदोषत्वेन बुद्धप्रणीतागमवदप्रामाण्यापत्तेश्च । न च भारतादीनां भवतामप्यप्रामाण्यापत्तिः । स्वतः प्रमाणानादिवेदमूलकत्वेनैव प्रामाण्योपपत्तेः । यत्तु यथा दीपगता प्रकाशनशक्तिस्तदुपादाने वह्नौ तथा वेदगता सर्वप्रकाशनशक्तिस्तदुपादाने । कार्योपादानयोरेकशक्तिकत्वादिति । तन्न । कार्यगतनाशादेरप्युपादानगतत्वापत्तेः । न चेष्टापत्तिः । नश्वरस्य मुमुक्षुज्ञेयत्वेनाविचार्यत्वात् । विवर्तवादिनोऽधिष्ठानाध्यवसाययोरेकशक्तिकत्वासिद्धेश्च । बाह्यागमानामपि ब्रह्मविवर्ततया तदर्थज्ञाने ब्रह्मणो भ्रान्तत्वप्रसङ्गाच्च । यत्तु जगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं वेदकारणत्वेन दृढी क्रियते वेदस्य नित्यत्वान्न सर्वकारणं ब्रह्मेति शङ्काऽपि निराक्रियत इति । तन्न । वेदस्यापि सर्वजगदन्तर्गतत्वेन पूर्वेण गतार्थत्वात् । न हि सर्वमृन्मयपात्रकर्तृत्वेन कुलालस्य दाक्षिण्यं न सिद्धं करककर्तृत्वेन सिद्धमिति संभवति । न च यो यद्ग्रन्थकर्ता स ततोऽधिकज्ञानवानिति नियमः । एकमर्थमवबुध्यापि बह्वर्थकशब्दप्रणयनदर्शनात् । वेदकर्तृत्वज्ञानेऽपि वर्णानामनादित्वमङ्गीकुर्वतस्त उक्तशङ्कया अनिरासाच्च । व्यावर्त्याभावाच्च । न च हिरण्यगर्भो व्यावर्त्यस्तत्सार्वज्ञ्यस्येशाधीनवेदग्रहणादिति वाच्यम् । सर्वजगत्कर्तृत्वेनैव व्यावर्तनात् । सर्वज्ञत्वविशिष्टस्य मिथ्यात्वेन मुमुक्षुज्ञेयस्य हिरण्यगर्भतुल्यत्वेन व्यावृत्तेः प्रयोजनाभावाद् । कल्पितसार्वज्ञस्य हिरण्यगर्भेऽपि सत्त्वाच्च । यच्च ब्रह्मणोऽन्यदीपक्रमाद्यनपेक्षणेन पूर्वं स्वकृतेनैव स्वरवर्णादिकर्तृत्वमिति न पौरुषेयत्वम् । भारतादि न तथा । तत्रान्यदीयक्रमाद्यपेक्षणादिति । तन्न बुद्धप्रणीतागमस्याप्यपौरुषेयत्वापत्तेर्वेदत्वापत्तेश्च । वेदविरुद्धस्यांशस्य कपिलप्रणीतस्य तत्त्वापत्तेश्च। यत्तु वेदगता सर्वार्थप्रकाशनशक्तिस्तदुपादानगता कार्यगतप्रकाशनशक्तित्वाद्दीपगतप्रकाशनशक्तिवदिति विशिष्यानुमीयतेऽतः कार्यगतजलाहरणादिशक्तेरुपादानगतत्वेऽपि न दोषः । प्रकाशशक्तिश्चाविद्यावरणनिवृत्त्यनुकूला शक्तिः । सा च परम्परया तदनुकूले वेदे दीपे चास्तीति नाऽऽश्रयासिद्ध्यादिः । अविद्यायामपि निवृत्तिप्रतियोगिभूतायां तदनुकूला

शक्तिरस्तीति । न तस्या अविद्यागतत्वेन बाध इति । तन्न । जले सूर्यस्य प्रतिबिम्ब इत्यजानता जलादुत्पन्नः सूर्य इत्यारोपितो यः सूर्यस्तद्गत-प्रकाशशक्तौ व्यभिचारात् । अग्निगतप्रकाशनशक्तेर्वायावभावेन व्यभिचा-राच्च । अविद्यावदसर्वज्ञत्वोपपत्तावर्थान्तराच्च । वेदवद्दीपवच्च ब्रह्मणो जीवा-न्यत्येवाविद्यानिवर्तकत्वसिद्ध्या सार्वज्ञ्यासिद्धेश्च ।

ननु स्वप्रकाशसर्वव्याप्तचैतन्यरूपत्वेन श्रुतिसिद्धे ब्रह्मण्यावरणनिवृ-त्त्यनुकूलायाः शक्तेः पक्षधर्मताबलात्तदनुकूलत्वेनैव सिद्धिः । न हि ज्ञान-मिच्छादिद्वारैव कार्यानुकूलं दृष्टमिति क्षित्यादिकार्यानुकूल्यमपि न द्वारेति चेन्न । स्वप्रकाशत्वादिकं हि यदि स्वं प्रत्यविद्यावरणविरोधित्वं तदोक्त-मनुमानं व्यर्थम् । अन्यादृशस्य तु न पक्षधर्मताबलत्वं स्वप्रकाशत्वादेरि-तरज्ञानहेतुत्वे बाधकत्वाभावाच्च दृष्टान्तवत्परम्परयाऽऽवरणनिवृत्त्यनुकूलवेदगतश-क्तेर्ब्रह्मगतत्वसिद्ध्या त्वदिष्टासिद्धेश्च । तेजोनिष्ठप्रकाशनशक्तेर्वायुगतत्वाभावेन व्यभिचाराच्च न हीत्याद्ययुक्तम् । इच्छाद्वेषसंस्कारभयादिजनकतायां ज्ञानस्ये-च्छादिद्वारकत्वाभावात् । यच्च तदुपादानगतत्वमात्रं साध्यं न तु याव-दुपादानगतत्वम् । तच्चाबाधितं ब्रह्मगतत्वमादायेति । तन्न । अविद्याग-तत्वमादायार्थान्तरत्वापत्तेः । उपादानसमानसत्ताकोपादेयवृत्तित्वस्योपाधित्वाच्च । न च व्यर्थविशेषणम् । अखण्डाभावस्यातिरिक्तत्वात् । यत्तु बुद्धप्रणी तागमस्यावेदत्वापादनमयुक्तम् । तदर्थस्यासत्त्वेन स्वसंसृष्टयावदर्थप्रकाशरूपस्य चैतन्यस्य तद्विषयत्वाप्रसङ्गादिति । तन्न । त्रैकालिकस्वसमानाधिकरणनि-षेधप्रतियोगित्वस्य तवापि सत्त्वात् । व्यावहारिकत्वापरपर्यायसंवृत्तिरूपस्य तेनापि स्वीकारात् । अनाप्तवाक्यप्रतिपाद्यप्रातिभासिकार्थज्ञत्वेन भ्रान्तत्वस्य दुर्वारत्वाच्च । किंच स्वसंसृष्टप्रकाशतया सर्वज्ञत्वे तस्यातीतानागतज्ञत्वं न स्यात् । न च तस्य स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नत्वेन कार्यत्वेन ज्ञानसूक्ष्मावस्थारूपसंस्कारादतीतस्मृतिः । सृष्टेः प्रागमायायाः सृज्यमानानिखिल-पदार्थरूपेण विवर्तमानत्वात् । तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तज्जन्यत्वमिति वाच्यम् । सृष्टेः पूर्वं स्मृतिजनकस्याभावेन सर्वज्ञत्वासिद्ध्या सर्वस्रष्टृत्वानापत्तेः । प्रलये सदृशचिन्तादेरदृष्टादेश्च द्वितीयस्यैकमेवेत्याद्यनुरोधेनाभावेनोद्बोधकाभा-वाच्च । अन्तःकरणाभावेन जन्यज्ञानासंभवाच्च । सृष्टेरित्याद्ययुक्तम् । घटत्वा-द्यवच्छिन्नावस्थाविशेषाणां सृष्टेः प्रागभावात् । मायाद्वारकस्यापि संसर्ग-

स्याभावेन तज्ज्ञत्वानापत्तेः । एतेन स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात्सर्वज्ञत्वमतीतानागतयोरविद्याचित्तभित्तौ विमृष्टानुन्मीलितचित्रवत्संस्कारात्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेरिति निरस्तम् । सामान्यलक्षणास्वीकर्तृमते प्रमेयत्वादिना जीवस्यापि सर्वज्ञत्वाच्च । न हि तत्तदवस्थाविशेषविशिष्टा घटादयः सन्ति सृष्टौ व्यापारवैयर्थ्यापत्तेः । व्यक्तिर्नास्तीति चेत्तज्ज्ञत्वमेव न स्यात् । यत्तु शास्त्रं योनिरभिव्यक्तिकारणं यस्येति वर्णकान्तरमिति । तत्र चिन्मात्रस्य सदाभिव्यक्तत्वात् । अतिरिक्तस्य मिथ्याभूतस्य धर्मस्य मुमुक्ष्वज्ञेयत्वात् ॥ ३ ॥

**ॐ तत्तु समन्वयात् ॐ । १ । १ । ४ ।**

शास्त्रयोनित्वेन कारणत्वस्य नातिव्याप्तिरिति पूर्वाधिकरणफलाक्षेपात् पूर्वाधिकरणस्य शास्त्रयोनित्वं विष्णोरन्यस्य वेति चिन्ताद्वाराऽनन्तरसंगतिः । अत्र शास्त्रयोनित्वं किमन्यस्यापि विष्णोरेवेति चिन्ता तदर्थं वेदतात्पर्यनिश्चयः। किं शैवसांख्यादिस्मृत्यादिना किंवोपक्रमादिनेति तत्र कारणत्वस्य शास्त्रयोनित्वेऽप्यतिव्याप्तिः । शैवाद्यागमाद् वेदव्याख्यानरूपाद्वेदप्रतीत्यनुगुणान्मानान्तराविरुद्धाद्रुद्रादेः कारणत्वे वेदतात्पर्यनिश्चयात् । तदुक्तं ह्यागमेषु शिवं ज्ञात्वा शान्तिमत्यन्तमेतीत्यादि । शास्त्रं शिवस्य मोक्षदत्वपरं सर्वे वेदा यत्पदमामनन्तीत्यपि शिवपरम् । न च विष्णोरपि मोक्षदत्वं श्रूयत इति वाच्यम् । तथाऽपि विष्णोरेवेत्यवधारणासिद्धेरिति प्राप्ते । व्याख्यतृवचनानां यैर्लिङ्गैस्तात्पर्यनिर्णयस्तैरेव श्रुतीनामपि । उक्तं हि—उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इति । उपक्रमादयोऽपि सावकाशत्वनिरवकाशत्वालोचितास्तात्पर्यप्रापकाः । तात्पर्यज्ञानं च साक्षात्प्रतिबन्धनिरासेन शाब्दधीहेतुः । एकप्रकाराऽसकृदुक्तिरभ्यासः । पुरुषगताज्ञानादिविरोधिना स्वानुपजीविमानान्तरेण ग्राह्यार्थकत्वमपूर्वता । पूर्वाबाधेनोत्तरस्यानुत्थानादुपसंहारस्य प्राबल्यम् । श्रद्धां जुह्वतीत्युपक्रम्य पञ्चम्यामाहुतावाप इत्युपसंहार उपसंहारस्थापशब्दानुसारेण श्रद्धाशब्दस्य लक्षणा वक्ष्यते । न चैवं वेदोपक्रमाधिकरणविरोधः । उच्चैर्ऋचा क्रियत इत्युपसंहारस्थऋगादिशब्दस्त्रयो वेदा इत्युपक्रमस्थवेदशब्दमात्राद्धि न लाक्षणिकः । किंत्वग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इति वेदशब्दाभ्यासात् । न च प्रतिग्रहेष्टिन्यायविरोधः । तन्त्रसारे मैत्रायणीयशाखायां दातुरुपक्रमतोऽप्युत्ते कर्माङ्गत्ववशादेव दातुरिष्टिः प्रतीयत इत्युपक्रमं विनैव दातुरिष्टिरित्युक्तत्वात् । उपसंहा-

शब्दाभ्यासस्य प्राबल्यम् । बहुबाधस्यान्याय्यत्वात् । यथाऽऽनन्दमयाधिकरणे तस्यैष एव शारीर आत्मा । यः पूर्वस्येति जीवप्रापकोपसंहाराद्ब्रह्मशब्दाभ्यासस्य । अभ्यासादपूर्वतायाः प्राबल्यम् । यथा—इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरित्यत्र जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचला जीवे तु लयं गच्छन्तीति जीवशब्दाभ्यासाद्ब्रह्मपरत्वेऽपूर्वतायाः । अपूर्वतातोऽपि फलस्य प्राबल्यम । यथा—असंभवस्तु सतोऽनुपपत्तेरित्यत्रासद्वा इदमग्र आसीत् । ततो वै सदजायतेत्यस्मात्सतोऽपि ब्रह्मणोऽसतः सकाशादुत्पत्तिरूपदोषप्रतिपादकादपूर्वतायुक्ताद्वाक्यात्सदेव सौम्येदमग्र आसीदिति ब्रह्मणोऽनुत्पत्तिप्रतिपादकस्य सफलस्य वाक्यस्य । एवं फलमात्रात् करणाकरणयोरिष्टानिष्टकथनादिरूपार्थवादस्य प्राबल्यम् । यथा—उत्क्रमिष्यत एवं भावादित्यौडुलोमिरिति काम्यकर्मसु श्रुतात् पश्वादिफलात्कर्मणा ज्ञानमतनोति । ज्ञानेनामृती भवति । अथामृतानि कर्माणि । प्लवा ह्येते अदृढा यज्ञरूपा इत्यर्थवादस्य । न हि कर्मणाऽल्पेन वेत्यादिना निन्दितकाम्यरूपेण कर्तव्यता, किंतु कर्मण्येवाधिकारस्ते मा फलेष्वित्याद्यनुसारेण । एवं सार्थवादस्याप्यनुपपन्नेऽर्थे तात्पर्यादर्शनादुपपत्तेरर्थवादादपि प्राबल्यम् । यथा—पृथगुपदेशादित्यत्र सार्थवादाभेदश्रुतितो भिन्नश्चिन्त्यः ।- परो जीवसंघात् पूर्णः परो जीवसंघ इति सोपपत्तिकभेदश्रुतेः । सूत्राक्षरार्थस्तु तद् ब्रह्मैव शास्त्रयोनि सावकाशत्वनिरवकाशत्वादिना विचारितत्वरूपसम्यक्त्वयुक्तादन्वीयतेऽनेनेत्यन्वयशब्दवाच्यादुपपत्त्यादिलिङ्गादिति । न च तद्ब्रह्म शिवादिरेवास्तु । महादधिशयोऽन्तक इति स्मृत्युपबृंहितया तमन्तः समुद्र इत्यादिश्रुत्या तस्य विष्णुत्वनिर्णयात् । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् । मत्तः परतरं नान्यत् किंचिदस्ति धनंजय । ज्ञात्वा मां शान्तिमृच्छति । मामेकं शरणं व्रज । मम साधर्म्यमागताः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं चेत्यादिना सकलवेदवेद्यत्वस्य सर्वोत्तमत्वस्य मुमुक्षुज्ञेयत्वस्य मुक्तप्राप्यत्वस्य विष्णोरेवोक्तत्वात् । यत्तु वेदान्ता न ब्रह्मणि प्रमाणं सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलाभावादिति प्राप्ते । द्विविधं हीप्सितम् । किंचिदप्राप्तं यथा ग्रामादि । किंचिच्च प्राप्तमपि विभ्रमवशादप्राप्तमित्यवगतम् । यथा कण्ठमण्यादिकमेवं जिहासितं किंचिदहीनं जिहासाति । यथा वलयितचरणफणिनम् । किंचिच्च हीनमेव । यथा चरणाभरणनूपुर आरोपित-

णिनम् । तत्र ब्रह्मात्मैक्यज्ञानात् प्राप्तब्रह्मप्राप्तिः । कल्पितत्वेन नित्य-हीनसंसारहानिश्च संभवतीति । तत्र निष्कलत्वसमाधानस्याद्यसूत्रे निरासात् । ऐक्यादेः स्वप्रकाशचिन्मात्ररूपस्य कण्ठस्थमण्यादेरिवाज्ञातत्वाद्यसंभवात् । नहि कोऽप्यहं न वेति संदिग्धे नाहमेवेति विपर्यस्यति वा । न वैत-द्व्यतिरिक्तं विवादजन्यज्ञानेऽपि भासते । अत एव निवृत्तेरसंभवः । न हीदं रजतमिति भ्रमविषयरजतनिवृत्तिरिदंमात्रज्ञानाद्भवति ।

ननु, सिद्धस्य ग्रामादेरुपदेशस्य वैयर्थ्येऽपि प्राप्तस्य भ्रमवशादप्राप्त-त्वेनावभासमानस्य कण्ठस्थितचामीकरादेरिव बोधनं सफलम् । न च चामी-करोपदेशस्य न चामीकरमात्रं फलं, किंतु तज्ज्ञानजन्यसुखस्य दुःखाभा-वस्य प्रागप्राप्तस्य प्राप्तिः फलमिति वाच्यम् । सिद्धवस्तुबोधनस्य पुरु-षार्थपर्यवसायित्वमात्रे हि दृष्टान्तो न तु बोध्यमानस्यैव स्वतः पुरुषार्थ-त्वेन । तत्र प्रागनभिव्यक्तं चामीकरमुपदेशेनाभिव्यक्तमपि न स्वतः पुरु-षार्थ इति पुरुषार्थान्तरे पर्यवसानमिति । इह तु तत्त्वमसीत्युपदेशेन निरतिशयब्रह्मभावाभिव्यक्तौ तावतैव कृतकृत्यतेति न पुरुषार्थान्तरपर्यवसान-मिति विशेषः । परम्परया पुरुषार्थपर्यवसायिनोऽपि सप्रयोजनत्वे साक्षादेव पुरुषार्थपर्यवसायिनः किमुतेति चेन्न । उपदेशवैयर्थ्यानुद्धारात् । न वा बोधनमेव पुरुषार्थं सुखदुःखाभावभिन्नत्वात् । पर्यवसितं च तव तदेव पुरु-षार्थम् । निर्विशेषे ब्रह्मण्यतिशयाभावादभिव्यक्तावपि तदभावाच्च । विशि-ष्टस्वरूपभाने विशेष्यरूपस्य सुखस्य भानाच्च । प्राप्ते ज्ञायमाने च वस्तुनि पुरु-षार्थत्वे मानाभावात् । अन्यथा स्वर्गाद्यर्थिनां बह्वायाससाध्ययागादौ निष्कम्पा प्रवृत्तिर्न स्यात् । प्राप्तस्यापि स्वर्गस्याज्ञायमानत्वेनावस्थितिसंदेहात् । निषाद-कुलवर्धितराजसूनोरुपदेशस्यापि तज्ज्ञानजन्योत्साहसुखादिकमेव प्रागप्राप्तं फलम् । द्वैतनिवृत्तेरपि नित्यप्राप्तचिन्मात्रानतिरिक्तत्वात् । अतिरिक्तत्वे सत्यत्वेऽद्वैतहानिः । मिथ्यात्वे द्वैतस्य सत्यत्वापत्तिः । किंच त्वन्मते सकृच्छ्रवणादिजन्यज्ञानेनैवाविद्यानिवृत्त्या तदभ्यासो व्यर्थः । न च मन-ननिदिध्यासननिवर्त्यासंभावनादिप्रतिबद्धस्यापातज्ञानसरूपस्य श्रमणसाध्यज्ञान-स्याविद्याविवर्तनाक्षमत्वम् । निर्विशेषे वस्तुनि सकृज्ज्ञातेऽसंभावनाद्यसंभ-वात् । न हि धर्मिणि संशयविपर्ययादिकमस्ति । तमआलोकवज्ज्ञाना-ज्ञानयोः स्वाभाविकविरोधित्वात् । न च विशेषदर्शनभ्रमयोरत्यन्तविरोधित्वेऽ-

ध्युपाधिना प्रतिबन्धात्सत्यपि विशेषदर्शने प्रतिबिम्बभ्रमा न निवर्तेत इति तदनुवृत्तिवदविद्यानुवृत्तिरिति वाच्यम् । दोषविशेषाजन्यनिरुपाधिकद्वैतभ्रमस्य सकृज्ज्ञानेन निवृत्तिसंभवात् । प्रतिबिम्बस्य ज्ञाननिवर्त्यत्वे मानाभावाच्च । न च सत्तावधारणरूपमेव ज्ञानमविद्यानिवर्तकं न ज्ञानमात्रं संशयादपि निवृत्त्यापत्तेः । तच्च न सकृच्छ्रवणमात्रादिति वाच्यम् । निर्विशेषचिन्मात्रस्य सकृज्ज्ञानेनैवावधृतत्वात् । अतिरिक्तस्य विशेषस्य ज्ञेयस्य त्वन्मतेऽप्यसत्त्वात् । किंचाऽऽरोपागृहीतविशेषप्रकारकमेव हि ज्ञानं भ्रमादिनिवर्तकम् । तच्च निर्विशेषवादिनस्तवासंभवीति दिक् ॥ ४ ॥

**ॐ ईक्षतेर्नाशब्दम् ॐ । १ । १ । ५ ।**

सर्वशास्त्रस्थशब्दप्रवृत्तिनिमित्ते सर्वगुणपूर्तिसिद्धये वचनवृत्त्या सर्वशास्त्रतात्पर्यविषयतायामुक्तायां संशब्दार्थस्य वाच्यत्वस्य कार्त्स्न्यस्य चेहाक्षिप्य समाधानादनन्तरसंगतिः । अत्र ब्रह्मणि समन्वयो न युक्तो वेति चिन्तायां समन्वयो न युक्तः । यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह । अशब्दमित्यादिश्रुतेः । वाच्यता च द्रव्यगुणक्रियाजातिनिमित्ता । न ब्रह्मणस्तद्योगोऽस्ति । केवलो निर्गुणश्च । निष्कलं निष्क्रियं शान्तमिति श्रुतेरतो न, सर्वशास्त्रप्रामाण्याज्जगज्जन्मादिकारणं ब्रह्म सिध्यतीति प्राप्ते ब्रह्मावाच्यं न । ईक्षणकर्मत्वाद्घटादिवत् । ईक्षणीयत्वे च तस्य स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते । आत्मन्येवाऽऽत्मानं पश्येदौपनिषदमित्यादिश्रुतिसिद्धम् । अत्रेक्षणकर्मत्वं विषयतासंबन्धेनेक्षणमेव वा हेतुः । वाच्यमिति वक्तव्ये नावाच्यमितिवचनं द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतीति वचनादवधारणार्थम् । तत्त्वनिर्णयश्च स्वपरपक्षसाधनोपक्षेपाभ्यां भवतीत्यवधारणस्याऽऽवश्यकत्वात् । ब्रह्म प्रकारान्तराभावे सति यद्यवाच्यं स्यात् तर्हीक्षणीयं न स्यात् । यद्यत्कारकाविषयस्तत्त्न क्रियाविषयो यथा कुठाराद्यविषयो गगनं न च्छिदाविषय इति सामान्यव्याप्तेः । न चावाच्यत्वेऽपि लक्षणयेक्षणीयत्वोपपत्त्या न वाच्यत्वसिद्धिरिति वाच्यम् । शब्दसामान्यावाच्यस्य लक्षणाया असंभवाददर्शनाच्च । सर्वथाऽज्ञेये तल्लक्षणासंभवेनौपनिषदस्य पदार्थोपस्थित्यर्थं लक्षणाज्ञानार्थं च ज्ञानावश्यकत्वात् । लक्षणयैव ज्ञेयत्वे त्वनवस्थानापत्तेः । अधोक्षजसमाख्ययेन्द्रियावेद्यत्वात् । अनुमानस्य स्वतन्त्राप्रमाणत्वात् । न च यत इत्यादिविरोधः । यच्छब्देनैव वाच्यत्वेन मूकोऽहमित्यादिवद् व्याघातात् ।

ननु द्वे ब्रह्मणी । सगुणं निर्गुणं च । तत्र निर्गुणं नित्यशुद्धं सर्वशब्दावाच्यम् । मिथ्याभूतं मायाशबलितं वस्तुतः कूटस्थमपि परात्परमित्यादावीक्षणीयत्वेनोच्यते । न चानुमानेन निर्गुणस्य वाच्यत्वसिद्धिः । पक्षीकृते लिङ्गाभावात् । विशिष्टे गृहीतसंगतयः सर्वे वेदा यत्पदमामनन्तीत्यर्थोपपत्तेरित्यत आह—

ॐ गौणश्चेन्नाऽऽत्मशब्दात् ॐ ॥ १ । १ । ६ ॥

आत्मा वाऽरे द्रष्टव्य इत्यात्मात्मशब्दात् । उपलक्षणमेतदीक्षणीये पूर्णत्वाभिधायिनाम् । ब्रह्मविद् ब्रह्मैव भवति । तरति शोकमात्मवित् । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विहाय निरञ्जनः परमं साम्यमुपैतीति श्रुतौ, शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दिते । मैत्रेय भगवच्छब्दः सर्वकारणकारण इत्यादिस्मृतौ चेक्षणीये शब्दानां श्रवणात् ॥ ६ ॥

नन्वस्त्वात्मादिशब्दः पूर्णवाची तथाऽपि यत्र दृश्ये वाच्ये च प्रयुज्यते तत्र सगुणपर एवेति नियमे को दोष इत्यत आह—

ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ १ । १ । ७ ॥

नायं नियमो युज्यते यस्यानुवित्तः प्रतिबुद्ध आत्मा । तरति शोकमात्मवित् । अयमात्मा ब्रह्मेत्यादौ दृश्यात्मनिष्ठस्य मोक्षोपदेशात् । नहि गौणात्मनिष्ठस्य मोक्ष उपपद्यते ॥ ७ ॥

गौणात्माङ्गीकारे बाधकान्तरमाह—

ॐ हेयत्वावचनाच्च ॐ ॥ १ । १ । ८ ॥

तमेवैकं जानथ । आत्मानमन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुरिति । स्मर्यते तु निर्गुणत्वं तस्य । बहूनां पुरुषाणां तु यथैका योनिरुच्यते तथा तं पुरुषं विश्वं परमं सुमहत्तमम् । निर्गुणं निर्गुणी भूत्वा प्रविशन्ति सनातनम् । एकात्मानं तथाऽऽत्मानमपरे ज्ञानचिन्तकाः । तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः । इति प्राकृतगुणराहित्यमेव । स्मर्यते हि । सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । एवंप्रकारममलं नित्यं व्यापकमक्षयम् । समस्तहेयरहितं विष्णवाख्यं परमं पदमिति श्रुतिस्मृतिभिरीक्षणीये ॥ ७ ॥

ॐ हेयत्वस्यावचनात् ॥ ॐ १ । १ । ८ ॥

अप्रतिपादनात् तदभावस्य प्रतिपादनाच्च । एवमात्मशब्दस्य निर्गुणविषयत्वमुपपाद्य निर्गुणस्य वाच्यत्वं समर्थितं हेत्वन्तरेणाप्युपपादयति--

(?) ॐ स्वाप्ययात् ॐ ॥ १ । १ । ९ ॥

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुद्रिच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । स आत्मन आत्मानमुद्धृत्याऽऽत्मन्येव विलापयत्यथाऽऽत्मैव भवतीति श्रुतौ स्वस्य स्वस्मिन्नेवाप्ययो नान्यत्र लीनत्वमित्युक्तम् । स्वाप्ययशब्दश्चोपलक्षणम् । पूर्णत्वमप्युदाहर्तव्यम् । न चाप्ययो नाशः । किंतु सृष्टिकालेऽन्तर्यामितया नियम्ये भेदेन स्थितस्यापि प्रलये नियम्यभेदाभावेन स्वस्मिन्नेवैकीभावोक्तेः । श्रुत्यर्थस्तु—अदो मूलरूपं पूर्णमिदमवताररूपं च पूर्णं तत्पूर्णं सृष्टिकाले पूर्णान्मूलभूतादुद्रिच्यते प्रलये पूर्णं स्वस्वपूर्णमवताररूपं स्वीकृत्यैकीभूय मूलरूपमन्यत्रालीनं स्वयमवशिष्यते । न हि सगुणस्य निर्गुण एकीभावः संभवति ।

ननु शास्त्रानन्तत्वान्न सर्वशास्त्रप्रतिपाद्यत्वं निर्गुणस्य निश्चेतुं शक्यमित्यत आह—

ॐ गतिसामान्यात् ॐ ॥ १ । १ । १० ॥

'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिभिः सर्ववेदस्यैकाकारज्ञानजनकत्वोक्तेः ॥ १० ॥

उपपत्त्यन्तरेण निर्गुणस्य वाच्यत्वमाह—

ॐ श्रुतत्वाच्च ॐ ॥ १ । १ । ११ ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेत्यादौ निर्गुणस्य ब्रह्मणः श्रुतत्वाच्चास्य वाच्यत्वमुपपन्नम् । अवाच्यत्वं तु साकल्यादिनोपपन्नम् । यत्तु सदेव सोम्येदमग्र आसीदित्यादिकारणवाक्यं सांख्यादिस्मृतिसिद्धाचेतनकारणानुवादीति प्राप्ते स ऐक्षतेतीक्षणेन चेतनकारणमिति सिद्धान्त इति । तन्न । तात्त्विकेक्षणस्य तत्राभावात् । कल्पितस्य प्रधानेऽपि संभवात् । अशब्दमिति रूढं योगो वा । नाऽऽद्यः । कोशादौ लोके च व्यवहाराभावात् । न द्वितीयः । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजन्तीमित्यजादिशब्दवाच्यत्वात् । आत्मपदवाच्यत्वं हेतुश्चासिद्धः । लक्ष्यत्वस्य प्रधानेऽपि संभवात् । तन्निष्ठस्येत्यत्र प्रधानैक्यमनुपपन्नं तज्ज्ञस्य मोक्षानुपपत्तिर्वा । नाऽऽद्यः । ब्रह्मै-

क्यस्याप्यनुपपन्नत्वात् । न द्वितीयः । आत्मविवेकार्थमनात्मज्ञानस्याऽऽवश्यकत्वात् । हेयत्वावचनादित्यस्य परिचोदनैवानुपपन्ना । न हि सांख्योऽद्वैतज्ञानार्थं प्रधानोपदेशं मन्यते । एकीभावस्याप्ययस्य ब्रह्मपदेऽप्यसंभवात् । परिष्वङ्गमात्रस्य प्रधानेऽपि संभवादिति । यत्तु सदादिशब्दावाच्यं प्रधानं न जगत्कारणमीक्षतेरिति । तन्न । शुद्धस्य सर्वशब्दावाच्यत्वेन विशिष्टस्य च मिथ्यात्वेन सदादिशब्दावाच्यत्वात् । लक्ष्यत्वस्य प्रधानेऽपि सत्त्वात् । यत्तु गौणश्चेन्नाऽऽत्मशब्दात् । नेक्षतिः प्रधाने गौणोऽनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति सच्छब्दाभिहितं जगत्कारणं प्रतिजीवस्य स्वरूपप्रतिपादनादैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीति सच्छब्दाभिहितस्य जीवाभेदप्रतिपादनाच्चेति । तन्न । श्रुतिप्रामाण्यादसर्वज्ञसर्वज्ञयोरभेदस्येव चिज्जडयोरेवाभेदस्य सिद्ध्यापत्तेः । विरुद्धांशत्यागेन चित्त्वमादाय जहदजहल्लक्षणावच्चिज्जडत्वादित्यागेन वस्तुत्वाद्युपादानेन लक्षणोपपत्तेः । यत्तु तन्निष्ठस्य मोक्षोपदेशाच्छ्वेतकेतो तत्त्वमसीति सदात्मत्वमुपदिश्याऽऽचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति सदात्मसाक्षात्कारवतो मोक्षोपदेशान्न प्रधानं सच्छब्दवाच्यमिति । तन्न । सांख्यैः प्रकृतिपुरुषविवेकज्ञानस्य मोक्षहेतुत्वाङ्गीकारेण प्रधानज्ञानस्यापि तन्मते मोक्षहेतुत्वात् ।

यत्तु—ननु तत्त्वमसीति न सदात्मत्वोपदेशः किंतु स्थूलारुन्धतीन्यायेन । तत्तु प्रधानस्य सच्छब्दार्थत्वेऽपि न विरुध्यत इति शङ्कां निरस्यति—हेयत्वावचनाच्च । तदा मोक्षयितव्यः श्वेतकेतुस्तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षुणा स्थूलायामरुन्धतीतादात्म्यस्येवेह सदात्मत्वस्य हेयताया वक्तव्यत्वापत्तेस्तस्य चावचनात्सदात्मैवोपदिश्यत इति । तन्न । जगत्कर्तृत्वादिविशिष्टस्य त्वन्मते मिथ्यात्वेन हेयत्वात् । तदुपलक्ष्यत्वे वक्तव्ये स्थूलारुन्धतीन्यायस्याऽऽवश्यकत्वात् । यत्तु येनाश्रुतमित्याद्येकविज्ञानेन सर्वविज्ञानं ब्रह्मवाद एव संभवति सर्वस्य ब्रह्मण्यध्यस्तत्वात् । न प्रधानवादे । प्रपञ्चस्य सत्यत्वादिति । तन्न । अधिष्ठानतत्त्वज्ञानेनाध्यस्तस्य नाशात् । दृष्टान्तासंगतेश्च । न हि मृत्पिण्डे घटस्य नखनिकृन्तने लोहमयस्याध्यासोऽस्ति । प्रधानज्ञानेन सत्यत्वादिसादृश्येन सर्वेषां ज्ञानसंभवात् । यत्तु स्वाप्ययात् । यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति । तस्मादेनं स्वपितीत्याच-

क्षते स्वं ह्यपीतो भवतीति । प्रकृतं सत् स्वशब्देनोक्त्वा तत्र जीवस्याप्ययप्रतिपादनादपि न सच्छब्दवाच्यं प्रधानमिति । तन्न । जीवस्य नित्यस्य ब्रह्मणि मुख्यलयस्य त्वन्मतेऽसंभवादौपचारिकस्य प्रधानेऽपि संभवात् । न चाध्यस्ताकारनिवृत्तौ तदनुवृत्ताधिष्ठानरूपस्याध्यस्तोपाधिकृतभेदनिवृत्त्या तदभेदप्राप्तिरप्ययशब्दितो लयः । अस्ति च सुषुप्तौ ब्रह्माध्यस्तस्थूलसूक्ष्मदेहद्वयौपाधिकाकारानिवृत्तौ सत्यां तदनुवृत्ताधिष्ठानरूपस्य तत्कृतभेदनिवृत्त्याऽभेदप्राप्तिरिति वाच्यम् । अविद्योपाधिकृतस्य सूक्ष्मान्तःकरणोपाधिभिश्च कृतस्य भेदस्य सत्त्वात् । न च स्थूलोपाधिको भेदो निवृत्तः । भेदाभावस्याभेदस्य च लयशब्दावाच्यत्वात् । स्पष्टभेदग्रहाभावस्य प्रधानेऽपि संभवाच्च । यत्तु गतिसामान्यात् सर्वेषु वेदान्तेषु चेतनकारणत्वावगतिसाम्यादपि न सच्छब्दवाच्यं प्रधानमिति । तन्न । निमित्तकारणत्वेन चेतनस्य गतिसामान्योपपत्त्योपादानकारणस्य प्रधानस्य सच्छब्दवाच्यत्वोपपत्तेः । अत एव श्रुतत्वाच्च श्वेताश्वतरोपनिषदि—स कारणं करणाधिपाधिपो न चास्य कश्चित् जनिता न चाधिप इति चक्षुरादिकरणाधिपानां जीवानामधिपस्य ब्रह्मणः साक्षादेव कारणत्वश्रवणाच्च न प्रधानं सच्छब्दवाच्यमिति निरस्तम् ॥ ११ ॥

## ॐ आनन्दमयोऽभ्यासात ॐ ॥ १ । १ । १२ ॥

अथातो ब्रह्मजिज्ञासेति यस्य ब्रह्मणो जिज्ञासा विहिता तत्स्वरूपं जन्माद्यस्य यतः शास्त्रयोनित्वादिति लक्षणप्रमाणाभ्यां स्वेतरसमस्तव्यावर्ततयाऽवधारितम् । प्रमाणस्यान्यपरत्वशङ्कया लक्षणस्यातिव्याप्तिः समन्वयसूत्रेण निराकृता । ब्रह्मणश्च सकलशास्त्रप्रमाणकत्वासंभवाशङ्का जिज्ञासाधिकरणे निराकृता । वस्तुतस्तु लक्षणप्रमाणाभ्यामेव वस्तुव्यवस्थेत्यतो ब्रह्मस्वरूपे निरूपणेऽवशेषाभावाद्यद्यप्यानन्दमयोऽभ्यासादित्यादिनाऽध्यायेन विचार्यं नास्ति तथाऽपि तत्तु समन्वयादित्युपक्रमादितात्पर्यलिङ्गैः शास्त्रस्य समस्तस्य ब्रह्मणि मुख्यवृत्त्या समन्वयोऽभिहितस्तमेव विभागेन प्रपञ्चेनाऽऽनन्दमयेत्यादिनाऽध्यायेनाऽऽह भगवान् । वैदिकाः शब्दाश्चतुर्विधाः । अन्यत्रैव प्रसिद्धाः । उभयत्र प्रसिद्धाः । अन्यत्र प्रसिद्धाः । तत्र प्रसिद्धा इति । नन्वन्यत्रैव प्रसिद्धवत्तत्रैव प्रसिद्धा अपि पृथग् वाच्या इति । उच्यते । येषां प्रसिद्धिरन्यत्र केवलैव विरोधिनी । समन्वयस्योभयत्र

प्रसिद्धास्ते हि कीर्तिताः । येषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धिश्चान्यवस्तुषु । विरोधिन्यो हि तेऽन्यत्र प्रसिद्धाः कथिता इह । येषामुक्तद्वयं ब्रह्मपरत्वस्यात्यशक्यता । इति तिस्रो विरोधिन्यस्तेऽन्यत्रैव प्रसिद्धाः । सर्वेऽपि नामलिङ्गात्मतया प्रत्येकं द्विविधाः । तेषु तत्र प्रसिद्धानां नान्वयो वाच्यः । तेष्वन्यत्रैव प्रसिद्धशब्दसमन्वयस्य प्रथममबुद्ध्यारोहाच्चतुर्थे तदुक्तिः । उभयत्र प्रसिद्धानामन्यत्र प्रसिद्धिपराकरणमात्रमन्यत्र प्रसिद्धानां चान्यत्र प्रसिद्धिनिरासपूर्वकं भगवत्परत्वं प्रतिपाद्यम् । तथा चान्यपरत्वनिरासमात्रस्य भगवत्परत्वापेक्षया मुख्यत्वेन प्राथम्यायोगात्तृतीये तदुक्तिः । अन्यपराणां मध्ये लिङ्गात्मकानां शब्दानां धर्मवाचित्वान्नामात्मकेभ्यो धर्मिवाचिभ्योऽमुख्यत्वेनाप्राथम्यात्तत्समन्वयोक्तिर्द्वितीये । ततोऽन्यत्र प्रसिद्धानां नामात्मकानां भगवति समन्वय उच्यते । अस्मिन्पादे तैत्तिरीयके स वा एष पुरुषोऽन्नरसमय इत्यादिनाऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पठ्यन्ते । तत्र किमेतेऽन्नमयादयः परमात्मैव, उतान्यः चतुर्मुखप्रकृत्यादिः । सर्वत्र ब्रह्मशब्दश्रवणात् । तस्य विष्णाविवान्यत्रापि प्रयोगात् । तत्रान्य एवान्नमयादिर्मयटो विकारे तु शासनात् । तस्य शरीरादिकोशे संभवात् । सर्वविकारात्मकत्वेन प्रकृतौ च संभवात् । जीवानां विकाराभिमानिनामन्नमयत्वादिकमुक्तम् । न चेशस्य विकारोऽस्ति । निर्विकारोऽक्षरः सदैकरूपरूपायेति विरोधात् । यद्यपि प्राचुर्येऽपि मयडस्ति तथाऽप्यन्नमयादिशब्दा विकारार्था औषधीभ्योऽन्नमन्नात्पुरुष उत्पन्नः । विकारशरीरमधिकृत्य स वा एष पुरुषोऽन्नरसमय इत्युक्तत्वात् । तथा च द्वैविध्यकल्पनानुपपत्तेः सर्वत्र विकारार्थ एव । किंच पञ्चैते ब्रह्म त्वेकमित्येतैः कथमुच्येत । अपि चैते परस्परमन्यतया शरीरशरीरितयाऽन्तरत्वेनोच्यन्ते । न चैवं ब्रह्म भवितुमर्हति । किंच ब्रह्मविदाप्नोति परमिति प्रकृतं परं ब्रह्माप्यानन्दमयस्य ब्रह्म पुच्छं प्रतिष्ठेत्यवयवतया प्रतीयते । न चावयव एवावयवी । विरोधात् । अतोऽन्नमयादयो ब्रह्मभिन्ना एवेति प्राप्ते । आनन्दादयः शब्दा ब्रह्माभिधायकाः । येऽन्नं ब्रह्मोपासते । ये प्राणं ब्रह्मोपासते । आनन्दं ब्रह्मणो विद्वान् । विज्ञानं ब्रह्म चेद्वेद । असद्ब्रह्मेति वेद चेदित्यन्नमयादिविषयतया ब्रह्मशब्दस्याभ्यासात् । यथा हि ज्योतिष्टोमाधिकारे वसन्ते वसन्ते ज्योतिषेत्यत्र ज्योतिः-

पदमेव ज्योतिष्टोमाभ्यासकालविशेषविधिपरं तथाऽऽनन्दमयाधिकार आनन्दादिसमभिव्याहारेण पठितमभ्यस्यमानं ब्रह्मपदमानन्दमयादेर्ब्रह्मत्वविधिपरम् ।

नन्वस्त्वानन्दमयादिर्ब्रह्म । स विष्णुरिति कुत इति चेन्न । महोदधिशयोऽन्तक इति स्मृत्युपबृंहितया । तदेव ब्रह्म परमं कवीनामिति श्रुत्या । परमं यो महद्ब्रह्म परमं यः परायणम् । परं ब्रह्म परं धाम पवित्रं परमं भवान् । शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दिते । मैत्रेय भगवच्छब्दः सर्वकारणकारण इत्यादिस्मृतिभिश्च तत्सिद्धेः । न चाऽऽनन्दमय इत्येव सूत्रमस्ति । तत्कथमन्नमयादीनां ग्रहणमिति वाच्यम् । समानन्यायेष्वानन्दमयपदस्योपलक्षणत्वात् । न चाऽऽनन्दमयस्यास्तु ब्रह्मत्वम् । अन्नमयादीनां तु कथमानन्दमयस्य ब्रह्मत्वे हेतोर्ब्रह्मशब्दाभ्यासस्यान्नमयादावपि सत्त्वात् । न चाऽऽनन्दमयस्य कथं ब्रह्मत्वं ब्रह्म पुच्छमिति ब्रह्मणस्तत्पुच्छत्वोक्तेरिति वाच्यम् । अवयवस्य पूर्णत्वेऽवयविनः सुतरां पूर्णत्वसिद्धेः । अवयवापेक्षयाऽवयविनो महत्त्वदृष्टेः । न चावयवस्यापूर्णत्वम् । ब्रह्मपदेनैव पूर्णत्वोक्तेः । अवयवावयविनोरभेदस्यैव सिद्धान्तेऽङ्गीकाराच्च । विशेषबलाद् भेदव्यवहारात् कृष्णकेशरूपावयवस्य श्रीकृष्णस्य पूर्णत्वं जगदाधारत्वं द्याव्यापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वा इत्यादिनोक्तम् । स्मर्यते च पारिजातापहारप्रसङ्ग इन्द्रेण—यस्मिन् जगत्सकलमेतदनादिमध्यं यस्माद्यतश्च न भविष्यति भूतजातम् । तेनोद्भवनपालनकारणेन व्रीडा कथं भवति देवि निराकृतस्येति । सकलभुवनसूतिर्मूर्तिरल्पानुसूक्ष्मा विदितसकलवेद्यैर्ज्ञायते यस्य नान्यैः । तमजमकृतमीशं शाश्वतं स्वेच्छयैनं जगदुपकृतिमर्त्यं को विजेतुं समर्थ इति । जगदुत्पत्त्यादिकर्तुः श्रीकृष्णात्पराजयेऽपि मम व्रीडा नास्तीत्यंशस्यापि पूर्णत्वं स्पष्टम् ।

ननु तापनीये—ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतो विरूपाक्षं शंकरं नीललोहितमिति रुद्रेऽपि ब्रह्मपदश्रवणादिति चेन्न । पूर्वार्धस्य विष्णुपरत्वात् । अन्यथा कृष्णनीलयोः पिङ्गललोहितपदयोरेकार्थत्वेन सह प्रयोगानापत्तेः । तत्त्वं नारायणः परः । एक एव नारायण आसीत् । न ब्रह्मा न च शंकरः । तथा चाऽऽह शिवं प्रति ब्रह्मा—शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।

न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम । ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्कचित् । मत्तः परतरं नान्यत्किंचिदस्ति धनंजयेत्यादिश्रुतिस्मृतिविरोधात् । किंच ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरित्युत्तरवाक्ये ब्रह्माऽधिपतिर्यस्य रुद्रस्यासौ ब्रह्माधिपतिरिति रुद्रस्य साधिपतिकत्वेन परब्रह्मत्वायोगाच्च । स्वरेण समासनिर्णयात् । बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्मृतेः । तदुक्तं महाभाष्ये—'स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र स्थूलपृषतीशब्दे तत्पुरुषबहुव्रीहिसंदेहं व्युत्पाद्य यदि पूर्वपदप्रकृतिस्वरत्वं तदा बहुव्रीहिः। यदि च समासान्तोदात्तत्वं तदा तत्पुरुष इत्यादिः । किंच नारायणाद् रुद्रो जायत इत्यादिनोत्पन्नत्वादब्रह्मत्वम् । न च विष्णोरपि रामकृष्णादिरूपोत्पत्तिरिति वाच्यम् । 'देवक्यां प्रादुरभूत्प्राच्यामिन्दुरिव' इत्याविर्भावस्यैवोक्तत्वात् । अन्यथा प्रकृतिर्या ममाऽऽख्यातेत्याद्युदाहृतस्मृत्युक्तप्रलये प्रकृतिपुरुषयोराधारत्वेनावस्थानं विरुध्येत । न च स्वरूपस्य प्रलये सत्त्वेऽपि शरीरलाभरूपोत्पत्तिः किं न स्यादिति वाच्यम् । स्वरूपस्य शंकरादिसाधारणत्वेन न च शंकर इति शंकरनिषेधासंगतेः ॥ १२ ॥

नन्वन्नमयादिर्न परमात्मा विकारार्थकप्रत्ययश्रवणादित्यत आह—

**ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ १ । १ । १३ ॥**

तत्प्रकृतवचने मयडित्यनुशासनेन प्राचुर्येऽपि विधानात् । निरवकाशब्रह्मशब्दबलात् । निरवकाशस्य मयटः प्राचुर्यार्थकत्वोपपत्तेः। एतेन विकारप्रवाहपठितानन्दमयशब्दो न प्राचुर्यार्थ इति निरस्तम् । न चान्नप्राचुर्यमपीशे बाधितम् । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इति श्रुत्या प्रसिद्धान्नत्वनिरासात् । अदेः कर्मणि कर्तरि च क्तप्रत्यये हीदं रूपम् । अत्राद्यत्वं गौणीवृत्त्या भोग्यत्वमेव । भोग्यत्वं च हरेः सर्वभूतोपजीवितया युज्यते । प्राणयति चेष्टते प्रतीति प्राणोऽथवा प्राणनं चेष्टनं व्यापारविशेषस्तद्रूपत्वं भगवत्येव । मनु अवबोधन इत्यस्माद्धातोर्भावेऽसुन् । मनो बोधस्तद्रूपत्वमपि तत्रैव । विज्ञानभूयस्त्वमानन्दभूयस्त्वं च । मनोविज्ञानयोः सामान्यविशेषाभ्यां भेदः । न चाभिन्ने भगवति कथं भेदः । भेदाभावेऽपि भेदप्रतिनिधिविशेषेण भेदव्यवहारात् । एतेन तस्माद्वा एतस्मादन्नमयाद् । अन्योऽन्तर आत्मा प्राणमयः । तस्मादन्योऽन्तर आत्मा मनोमय इत्यादिनाऽन्नमयादीनां भेदश्रवणात्कथं परमात्मत्वमिति समाहितम् ।

ननु ब्राह्मणमयो ग्राम इतिवत्प्रतियोग्यानन्दापेक्षयैव प्राचुर्यमिति चेन्न। प्रचुरसुखः पुरुष इत्यादौ तन्निष्ठदुःखाननुभवात् । व्यधिकरणसुखापेक्षया तन्निष्ठसुख उत्कर्षानुभवात् । तथा च जीवानन्दापेक्षया भगवदानन्दे भूयस्त्वोपपत्तेः । न च यतो वाचो निवर्तन्त इत्यादिनैव भूयस्त्वसिद्धिः किमनेनेति वाच्यम् । व्याख्यातव्याख्येयभावेनोपपत्तेः । न चात्रान्नमयादिशब्दाः श्रूयन्तेऽग्रे त्वन्नमयादिशब्दा एवेत्यवश्यं निमित्तभेदः स्यादिति वाच्यम् । यथा हि ज्योतिष्टोमाधिकारे वसन्ते वसन्ते ज्योतिषा यजेतेति कालविशेषविधिपरे वाक्ये ज्योतिःशब्दो ज्योतिष्टोमस्याभिधायकस्तथा प्रकृतेऽप्युपपत्तेः ॥ १३ ॥

एवं सूत्रद्वयेनान्नमयादीनामीशवाचित्वं मयटश्च प्राचुर्यार्थत्वमुपपाद्याऽऽनन्दमयस्य विष्णुवाचित्वं मयटः प्राचुर्यार्थकत्वं हेत्वन्तरेणाऽऽह—

ॐ तद्धेतुव्यपदेशाच्चेति ॐ ॥ १ । १ । १४ ॥

को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादिति । चतुर्विधा प्रवृत्तिः सुखोद्रेकाद्दुःखोद्रेकात् सुखरागाद् दुःखद्वेषाच्च । आद्योन्मत्तादीनाम । द्वितीया नारकिर्कादीनाम् । तृतीया सुखरागाद्भोजनेऽस्मदादेः । चतुर्थी दुःखद्वेषात्तन्निवृत्त्यर्थं कण्टकोद्धरणायेति । सुखोद्रेकादेव हरेः प्रवृत्तिः । ईशः सुखी प्रवृत्तिहेतुत्रयरहितत्वे सति प्रवृत्तिमत्त्वादुन्मत्तादिवदिति। तस्य विष्णोरानन्दमयत्वेऽननप्राणनकर्तृत्वं हेतुरुक्तः । कार्यस्य महत्त्वेन कारणस्य महत्त्वसिद्धिरिति महानन्दो हरौ प्रसिद्धः । यदा वै सुखं लभते अथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोतीति श्रुत्येशव्यापारस्याऽऽनन्दाविनाभूतत्वमुक्तम् ॥ १४ ॥

अन्नमयादीनां पञ्चानामपि युक्त्यन्तरेण परब्रह्मत्वं प्रतिपादयति—

ॐ मान्त्रवर्णिकमेव च गीयत इति ॐ ॥ १ । १ । १५ ॥

यो वेद निहितं गुहायां परमे व्योमन् । सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रप्रतिपादितमेव वस्त्वन्नमयादिना गीयत इत्यर्थः । अहमात्मा गुडाकेश सर्वभूताशयस्थितः । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । इत्यादिना मुक्तप्राप्यत्वं सर्वभूताशयस्थत्वं ह्यानन्दमयस्योक्तम् । सच्छब्दः—सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इत्यनुरोधाच्च सद्भावपरः । सद्भावो जन्म स्थितिश्च । जन्मादिवाचिकर्मण्युपपदे यातेरन्तर्णीतण्यर्थादातोऽनुपसर्गे क इत्यपस्मयादीनि च्छन्दसीत्युपपदस्य भसंज्ञायां सत्यामिति जगदुत्पत्यादिकर्ता

सत्यशब्दार्थः । जीवनं प्राणधारणरूपं सच्छब्दार्थः । देवदत्तोऽस्ति जीवतीति प्रत्ययाद्भावप्रधाननिर्देशः । सत्त्वं यापयतीति सत्यपदप्रवृत्तिनिमित्तम् । अन्नमयत्वमुपजीव्यत्वरूपमन्नमये भगवत्यस्ति प्राणन्ति प्रवर्तन्ते जीवन्ति वाऽनेनासौ प्राणः। सर्वेषामायुर्जीवनहेतुश्चातोऽसौ प्राण उच्यत इति श्रुतेः । वन षण संभक्तौ। गमः क्वाविति सूत्रे गमादीनामिति वक्तव्यम्। आदिशब्दः प्रकारार्थे । तेनानुनासिकान्तत्वेन गमसदृशानामित्यर्थः । तेषामनुनासिकलोपः स्यात् क्वौ । तेन परीतत्–संवदित्यादिसिद्धिः । ततो ह्रस्वस्य पिति कृति तुक् । अस्तेः शता । भावप्रधानं सद्वचनाविशेषं प्रवर्तनं जीवनं च यापयतीति सत्यज्ञानशब्देन मनोमयो विज्ञानमयश्चोच्यते । अनन्तपदेनाऽऽनन्दमयः । यो भूमा तत्सुखम्। नाल्पे सुखमस्तीति श्रुतेः ॥ १५ ॥

एवं स्वपक्षसाधनं विधाय परपक्षं निराचष्टे--

**ॐ नेतरोऽनुपपत्तेरिति ॐ ॥ १ । १ । १६ ॥**

इतरो जीवो कोशो वा प्रकृतिर्वा नान्नमयादिः । उपपत्तेः । सर्वे वैतेऽन्नं प्राप्नुवन्ति येऽन्नं ब्रह्मोपासते सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासत इत्यादिनाऽन्नमयादिज्ञानान्मोक्षप्रतीतेः । न च जीवादिज्ञानात्। स कदाऽपि मरणाभावो हि सर्वमायुर्न च मुक्तिं विना सोऽस्ति। तमेव विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनायेति श्रुतेः । भूतं भूताभिमानी तच्छरीरं परमेशश्च। चत्वार आकाशादिपदवाच्याः । चतुर्विधाकाशाच्चतुर्विधो वायुस्ततश्चतुर्विधं तेजः ततश्चतुर्विधं जलं ततश्चतुर्विधा पृथिवीत्यादि । तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुर्वायोरग्निरग्नेराप इत्यादिना सृष्ट्युक्तेः । आकाशादिप्रवृत्तिनिमित्तानां भगवति मुख्यत्वेन तत्रैव शक्तिः । अन्यत्र व्यवहारार्थमुपचारः । न च भगवत उत्पत्तिर्विरुद्धेति वाच्यम्। प्रादुर्भावस्यैवोत्पत्तिपदार्थत्वात्। आ समन्तात् काशत इत्याकाशः । वशब्दो बलवाची । सत्या सत्यभामेतिवत् । ततो मत्वर्थीयोऽप्रत्ययः । आयुरिति ज्ञानम्। अयतेरित्यर्थत्वात्। गत्यर्थानां ज्ञानार्थकत्वात् । वश्चासौ आयुरिति बलवान् ज्ञानस्वरूपो वायुर्हरिः । अग्निरन्तर्भावितण्यर्थः । अङ्गयति नाशं प्रापयति विश्वं प्रवर्तयति वाऽग्निर्हरिः। आप्नोतेः क्विप् । आपो हरिः । पृथु विस्तारे प्रथयति स्वयं पृथुर्वा पृथिवी हरिः । पृथिव्या औषधयश्चतुर्विधाः । उष दाहे । उर्ष्टाः ।

ओषा कर्मणि घञ् । जठराग्निनोष्टान्दधाति पुष्णाति औषधी हरिः । ततश्चतुर्विधमन्नं व्याख्यातम् । ततः पुरुषश्चतुर्विधः । उपपदस्योकारः । धातुशकारस्य षकारः । पुरि शेतेऽन्तर्यामी हरिः । न च तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । इत्यादिनाऽऽनन्दमयस्य परोक्षस्यापरोक्षानिर्देशो न युक्त इति वाच्यम् । वस्त्रप्रावृते घटे घटोऽयमितिवदुपपत्तेः । न चेशोऽपि स्वरूपायोग्यः कृपयाऽऽपरोक्ष्यासंभवात् ।

ननु जीव एवान्नमयादिः सविकारशरीरावच्छिन्नः प्राणमनोबुद्ध्यावच्छिन्नश्च घटमठावच्छिन्नाकाश इवेदमिति निर्देशश्च मुख्यः । ब्रह्म पुच्छं प्रतिष्ठेत्येतदपि समञ्जसम् । न च कोश एवास्तु । कोशे ब्रह्मपदाद्यनुपपत्तेः । अन्यत्वादिकं चोपाध्यपेक्षेण ॥ १६ ॥

न च ब्रह्मशब्दः परमात्मना विना नोपपद्यते । जीवस्य परेशाभेदाभिप्रायेणोपपत्तेरित्याशङ्कां परिहरति—

**ॐ भेदव्यपदेशाच्च ॐ ॥ १ । १ । १७ ॥**

स यश्चायं पुरुषे । यश्चासावादित्ये । स एक इति पुरुषादित्योपलक्षितापकृष्टोत्कृष्टसकलजीवानां नियम्यतयाऽविकरणत्वेनेशस्य नियामकतयाऽधिष्ठातृत्वेन भेदस्यैवोपदेशात् । तथा रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति लब्धृलब्धव्यतया भीषाऽस्मादिति नियम्यनियामकतया भेदव्यपदेशः ॥१७॥

ननु विप्रतिपन्नानीन्द्रियाणि ममैव करणानीन्द्रियत्वात्संमतवत् । अहमर्थातिरिक्तोऽहमिति प्रतीयमानो जीवः परेशान्न भिद्यते चेतनत्वात्त्वंपदार्थत्वाद्वा ब्रह्मवदित्यनुमानादभेदसिद्धेरित्यत आह—

**ॐ कामाच्च नानुमानापेक्षेति ॐ ॥ १ । १ । १८ ॥**

अनुमानं कामचारं पुरुषेच्छाधीनम् । आत्मा जडो वस्तुत्वाद्घटवत् । आकाशो घनं प्रमेयत्वात्पाषाणवत् । घटादि चेतनं मेयत्वादात्मवदित्यनुमानतुल्यं ब्राह्मणेन सुरा पेया पेयद्रव्यत्वात्क्षीरवदित्यादितुल्यं च । स्वेच्छाधीनत्वादनुमानस्य जीवेशाभेदसिद्धौ स्वातन्त्र्येणापेक्षा नास्तीत्यर्थः । न च जिज्ञासासूत्रे जीवेशाभेदो निराकृतोऽत्र किं पुनरुच्यत इति वाच्यम् । अत्र शास्त्रे तत्र तत्र प्रकरणे त्वैक्यशङ्कायां तत्र तत्र भेदवाक्यद्योतनेन सूत्रेषु भेदसमर्थनमतस्तात्पर्यभेदान्न पुनरुक्तिः ॥ १८ ॥

विशेषरूपेण भेदं साधयति—

**ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ १ । १ । १९ ॥**

अस्मिन्नन्नादिमयेऽस्य जीवस्य योगं साम्यरूपं मोक्षं शास्ति । एतमन्नमयमात्मानमुपसंक्रामतीति । एतमानन्दमयमात्मानमुपसंक्रम्येत्यादि सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता निरञ्जनः परमं साम्यमुपैतीति । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति श्रुतिस्मृतिभिर्मोक्षेऽपि भेद उक्तः । अत्र वदन्ति—अन्नमयादयः चत्वारस्तावत्कोशा एवान्नादिविकाराः । आनन्दमयोऽपि कोशोऽन्नमयादौ मयटो विकारार्थकत्वेनाऽऽनन्दमयेति तदर्थकत्वमर्धजरतीयन्यायस्यानुचितत्वात् ।

ननु मान्त्रवर्णिकब्रह्माधिकारविरोध इति चेन्न । स वा एष पुरुषोऽन्नरसमयः । तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयस्तस्मादन्योऽन्तर आत्मा मनोमयस्तस्मादन्योऽन्तर आत्मा विज्ञानमयस्तस्मादन्योऽन्तर आत्माऽऽनन्दमय इत्यन्तराऽन्यत्वादिना श्रुतानामन्नमयादीनामपि ब्रह्मत्वापत्तेः । सत्यज्ञानमयादीनामिवाऽऽनन्दमयस्य पुच्छत्वेनोक्तं ब्रह्म कथं स्वप्रधानमिति चेन्न । स्वप्रधानेन प्रकृतत्वात् । न चाऽऽनन्दमयस्य ब्रह्मत्वादेव तदवयवत्वेन प्रतीतस्य ब्रह्मत्वहानिः । एकस्यावयवत्वावयवित्वयोर्विरुद्धत्वादन्यतरग्रहणे च पुच्छस्य तद्युक्तम् । ब्रह्मपदश्रवणात् । आनन्दमये तदश्रवणाच्च । असन्नेव स भवति । असद्ब्रह्मेति चेद्वेद । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति श्लोके ब्रह्मपुच्छमित्युक्तमेव विषयो नत्वानन्दमयः । पुच्छवत्पुच्छमाधारमित्यर्थः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तर पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयः सविशेषो ब्रह्म तु निर्विशेषम् । यतो वाचो निवर्वन्तेऽवाङ्मनसगोचरमिति श्रुतेः । मयटः प्राचुर्यार्थत्वे स्वल्पदुःखस्याऽऽपत्तिः । प्रियादीनां प्रतिशरीरं भेदेनाऽऽनन्दभेदाद्ब्रह्मापि भिद्येत । न चैवं भार्गवी वारुणी विरुध्येत । यदेष आकाश आनन्दो न स्यात् । सैषाऽऽनन्दस्य मीमांसा भवत्यानन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति प्रातिपदिकस्यैवाभ्यासात् । तथा चाऽऽनन्दस्य ब्रह्मत्वं नत्वानन्दमयस्य ।

ननु सूत्राण्यानन्दमयस्य ब्रह्मत्वं प्रतिपादयन्तीति चेन्न । श्रुतिविरोधात् । यथाकथंचिद्धि योज्यानीति । अत्र केचित्—आद्यानां न कोशत्वम् । द्वौ तु जीवेशौ । आनन्दमयानन्तरमुपदेशात् । मयटः प्राचुर्यार्थकस्य भगवतैवोक्तत्वात् ।

विनिगमनाविरहात्प्रमाणानुसारान्मयटो वैरूप्यस्वीकारात्। निरवयवस्यापि ब्रह्मणो बुभुत्सोर्बुद्ध्यवतरणाय शिरःपक्षाद्यवयववर्णनम्। अत एवान्यत्वाद्युपदेशोऽपि संगच्छेतेत्याहुः। नन्वानन्दमयवाक्ये श्रुतं पुच्छं ब्रह्म प्राधान्येन प्रतिपाद्यम्। असन्नेव स भवतीति श्लोके ब्रह्मशब्दाभ्यासात्। ब्रह्म पुच्छमभ्यासादित्यार्जवेन सूत्रे कर्तव्य आनन्दमयोऽभ्यासादितिकरणस्यैतत्प्रयोजनम्। यदीक्षतिसूत्रान्नञनुवर्तनेन निषेधाध्याहारेण चाऽऽनन्दमयो न निगमनश्लोकप्रतिपाद्योऽभ्यासादिति चेन्न। को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्। सैषाऽऽनन्दस्य मीमांसेत्यादिनाऽऽनन्दस्यैव ब्रह्मत्वप्रतिपादनात्। मुमुक्षोर्बुद्ध्यवतरणायाऽऽनन्दमयस्यैव ब्रह्मणः पक्षपुच्छादिमत्त्वादिना पक्षिरूपतया वर्णनात्। अन्यथाऽवयव्यपेक्षयाऽवयवस्य पुच्छरूपस्य ब्रह्मणोऽपकृष्टपरिमाणत्वापत्तेः। अनुकर्षाध्याहारादौ मानाभावात्। यत्तु विकारशब्दान्नेति चेन्न प्राचुर्यात्। विकारपदमवयवपरम्। अवयववाचिपुच्छशब्दान्न ब्रह्म प्राधान्येन प्रतिपाद्यमिति चेन्न। प्राचुर्यादवयवप्रायवचनात्। पुच्छशब्दोपपत्तेः। अयं भावः—अन्नमयादीनां शिरआदिषु पुच्छान्तेष्ववयवेष्वानन्दमयस्यापि शिरःपक्षाद्यवयवान्तरोक्त्यनन्तरं प्रायपाठानुसारेण कस्मिंश्चिदर्थे निर्देष्टव्य आनन्दमयं प्रत्याधारत्वेन ब्रह्मणि च प्रतिपादनीये तदुभयानुग्रहाय ब्रह्म पुच्छं प्रतिष्ठेत्याह श्रुतिर्नावयवविवक्षयेति। तन्न। विकारप्राचुर्याद्यर्थकमयट्प्रादायैव यथाश्रुतसूत्रोपपत्तौ विकारपदे प्राचुर्यपदे वाऽऽधुनिकलक्षणायां मानाभावात्। आनन्द आत्मेत्यात्मत्वेनोक्तस्याऽऽनन्दस्याऽऽधारापेक्षाभावात्तं प्रति ब्रह्मण आधारकल्पनाया निर्मूलत्वात्। अवयवत्वविवक्षां विना पुच्छरूपस्याऽऽधारत्वे मानाभावात्। अवयविस्थान्यानन्दं प्रत्यवयवानां पक्षशिरआदीनामाधारत्वेन कृत्स्नानन्दाधारत्वस्य पुच्छेऽसंभवाच्च। न हि पुच्छमवयवान्तराणामाधारः। न च प्रतिष्ठाशब्दात्सर्वाधारत्वं लभ्यम्। पक्षिणां सर्वावयवेषु पुच्छस्य प्राधान्याभिप्रायेण हि प्रतिष्ठाशब्दः। तस्मात्सर्ववयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छमित्यैतरेयोक्तेः। अतोऽवयवावयविनोरभेदाभिप्रायेणाऽऽनन्दस्यैव ब्रह्माभिन्नस्य पक्षपुच्छाद्यवयवयुतपक्षाकारेण वर्णनम्। अत एव प्रायपाठादिति वक्तव्ये प्राचुर्यादिति वचनं प्रागन्नमयादिपर्यायेषु प्रतिपर्यायं पुच्छशब्दसद्भावेन तत्प्राचुर्यरूपं प्रायपाठमन्यत्रापि श्रोतृबुद्ध्यवतरणाय

दृष्टान्तोपन्यासप्राचुर्यं च संग्रहीतुमिति कुचोद्यं निरस्तम् । कृत्स्नेनाऽऽनन्दमयवाक्येन ब्रह्म पुच्छं प्रतिष्ठेत्यन्तेनावयव्यानन्दमयप्रतिपादने बाधकाभावात् । एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठेति पूर्वपर्यायेषु त्वदभिप्रेताभावात् । न हि पृथिवी प्राणमयस्याथर्वाङ्गिरसो मनोमयस्य महोविज्ञानमयस्याऽऽधारोऽधिष्ठानं वाऽस्ति । यत्तु तद्धेतुव्यपदेशाच्च । इदं सर्वमसृजत यदिदं किंच । इति ह्यानन्दमयं विकारजातं प्रति ब्रह्मणः स्रष्टृत्वोपदेशादपि प्राधान्येनैव ब्रह्म प्रतिपाद्यमिति । तन्न । आनन्दमयमुपसंक्रामतीत्यादिनाऽऽनन्दमयस्य मुक्तप्राप्यत्वश्रवणात्तस्य जन्यत्वाभावेन तदतिरिक्तस्यैव सर्वशब्देन ग्रहणात् ।

यत्तु मान्त्रवर्णिकमेव च गीयते । यत्सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णे प्रधानतया प्रकृतं ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मपदेन गीयत इति । तत्र मन्त्रवर्णेनाऽऽनन्दमयाभिन्नब्रह्मण एवोक्तत्वात् । तस्माद्वा एतस्मादात्मन आकाशः संभूत इति जगत्कारणस्याऽऽनन्द आत्मेत्यात्मपदनिर्दिष्टानन्दमयस्य मान्त्रवर्णिकब्रह्माभिन्नस्य प्राधान्यावगमात् । किंच ब्रह्मविदाप्नोति परमित्यादिपूर्वसंदर्भे ‘ असन्नेव स भवति ’ इत्युत्तरस्मिंश्च ब्रह्मप्राधान्येऽप्यानन्दमयस्य प्राधान्यात्तर्हि तत्र ब्रह्मणो रूपितपुच्छभावेनोपसर्जनत्वभेदो वाऽस्तु । अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्यादिसंदर्भस्य स एषोऽनन्त इत्युत्तरस्य च ब्रह्मप्राधान्येऽपि स एष परोवरीयानुद्गीथ इति वाक्य उद्गीथस्य प्राधान्यम् । तत्र ब्रह्मणो दृष्टिविशेषणतयोपसर्जनत्वदर्शनात्तद्वदिहापि ब्रह्मपरयोः पूर्वपरसंदर्भयोरानन्दोपसर्जब्रह्मगतजगत्कारणत्वादिगुणसमर्पकतया वाक्यैकवाक्यतोपपत्तेः । यत्तु नेतरोऽनुपपत्तेः । आनन्दमयो न प्राधान्येन प्रतिपाद्यः । ओमित्येदक्षरमुद्गीथमुपासीतेति महाप्रक्रमेण त्रयो होद्गीथेत्यवान्तरेण चावगतोद्गीथप्राधान्यनिर्वाहायाऽऽकाशवाक्यस्योपसर्जनपरत्वेऽप्यत्रोपक्रमोपसंहारावगतब्रह्मप्राधान्यवि-

रोधेनाऽऽनन्दमयविशेषणगतगुणसमर्पकत्वकल्पनानुपपत्तिरिति । तन्न । आनन्दमयस्यापि महाप्रकरणित्वात् । अवयवावयविनोरभेदवादे तु पुच्छाभिन्नस्याऽऽनन्दमयस्यैवोपक्रमोपसंहारयोः प्रतिपादनादिविरोधाभावात् । यत्तु भेदव्यपदेशाच्च भेदविरोध्यपदेशो भेदव्यपदेशः प्रपञ्चमिथ्यात्वपर्यवसायी । यतो वाचो निवर्तन्ते । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेत्युपदेशस्तद्विरोधात् । प्रियाद्यवयवयुक्तः सविशेष आनन्दमय उपास्यत्वेन न प्रतिपाद्यः । मुमुक्षुज्ञेयस्य निर्विशेषस्याऽऽनन्दमये पुच्छत्वेनोपसर्जनत्वायोगादिति निर्विशेषं पुच्छं ब्रह्मैव प्रतिपाद्यमिति । तन्न । यत इत्यादौ यच्छब्देनैव वाच्यत्वेन वचनमात्रावाच्यत्वासिद्धेः । भेदविरोधिवाचकपदाभावाच्च । तमेव विदित्वेत्यादौ सहस्रशीर्षत्वादिविशिष्टस्य च मुमुक्षुज्ञेयत्वोक्तेर्निर्विशेषस्याप्रतिपाद्यत्वेनोपदेशाविषयत्वाच्च । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायाम् । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति सगुणस्यैव मुमुक्षुज्ञेयत्वप्राप्यत्वोक्तेः । यत्तु हृदये जीवरूपेण ब्रह्म निहितं जीवाभिन्नं यो वेद ब्रह्मणा ब्रह्मरूपेण । इत्थंभूतलक्षणे तृतीया । सह युगपत् सर्वान्कामान्सर्वसुखावधिभूतमाविर्भूतसुखाम्बुधिमनुभवतीत्यर्थ इति । तन्न श्रौतपदानां सर्वेषामाधुनिकलक्षणायां मानाभावात् । इत्थंभूतलक्षणे कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इति हि सूत्रार्थोऽत इत्थंभूतेत्युक्तिर्मुधैव । सोऽश्नुते सर्वान्कामानक्रमेण सुरर्षभाः । विदितब्रह्मरूपेण जीवन्मुक्तो न संशय इति स्मृतिरनुकूलैव । विदितं ब्रह्म येन तेन चतुर्मुखेन(ण) सहेत्यर्थात् । यत्तु कामाच्च नानुमानापेक्षा । काम्यत इति कामः । भृगुवल्ल्यां राजानन्ददृष्टान्तेनाऽऽनन्दमयस्य प्राधान्यानुमानं प्रत्याशा न कार्या । तत्तच्छ्रुत्यैव तस्योपक्रान्तब्रह्मरूपताया आनन्दो ब्रह्मेति व्यजानादिति साक्षादानन्दाद्ध्येव खल्विमानि भूतानि जायन्त इति लक्षणमुखेन पर्यवसानप्रतिपादनात्तदुत्तरमन्यस्याप्रतिपादनाच्चेहाऽऽनन्दमयानन्तरं ब्रह्मप्रतिपादनादिति। तन्न। वसन्ते वसन्ते ज्योतिषा यजेतेत्यत्र ज्योतिःपदेन ज्योतिष्टोमस्येवाऽऽनन्दपदेनाऽऽनन्दमयस्योक्तत्वात् । आनन्दमयोत्तरमुपदेशस्यालीकत्वाच्च । यत्तु- अस्मिन्नस्य च तद्योगं शास्ति । अत्रैव प्रकरणे रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति शास्त्रम् । रसो वै स इति पुच्छब्रह्मण

आनन्दरूपत्वं प्रतिपादयति । एतस्यैवाऽऽनन्दमयस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यादिना सिद्ध आनन्दमयः । तद्विषयकानुभवजन्यसुखवृत्तिषु प्रतिबिम्बितब्रह्मानन्दलेशं लब्ध्वा निवृत्तो भवतीममर्थं शास्तीति तत्राऽऽनन्दमयमेव रसपदेनोक्त्वा तं प्राप्तस्य जीवजातस्यैव ह्यानन्दीतिशब्देनाभिधानात् । अत्र केचिद्विकारार्थकत्वमसिद्धं विकारार्थकल्पकस्य प्रायपाठस्यासाधकत्वात् । यद्यप्यन्नमये विकारार्थ उपक्रान्तः । तावताऽऽनन्दमये स एवार्थः । प्राणमयादिषु तस्य पाठात्प्राणनवृत्तिप्राचुर्येण पञ्चवृत्तिकवायोरुक्तत्वात् । एवमन्तःकरणजीवावपि मननविज्ञानप्राचुर्येण मनोमयविज्ञानमयशब्दाभ्यामुक्तौ । एवमानन्दमयेऽपि मयटः प्राचुर्यमेवार्थः । प्रचुरप्रकाशः सवितेत्यादौ चाल्पाधिकरणसजातीयत्वे प्रतियोगितायां अपि दृष्टत्वेन ब्रह्मणि जीवगतानन्दाल्पत्वमपेक्ष्य तत्प्राचुर्यसंभवात् । इह च वाक्यशेषे सैषाऽऽनन्दस्य मीमांसा, इत्यारभ्य व्यधिकरणजीवानन्दाल्पत्वमपेक्ष्यैव ब्रह्मानन्दस्य प्राचुर्यदर्शनात् । शिरःपक्षादिरूपेण रूपितमवयवित्वं तु न ब्रह्मत्वविरोधि । अन्यथा ब्रह्मणोऽवयवित्ववदवयवत्वमपि नास्तीति पुच्छब्रह्मणोऽप्यब्रह्मत्वप्रसङ्गादानन्दमयस्य । पुच्छं ब्रह्मेति निर्देशोऽपि नाऽऽनन्दमयब्रह्मत्वविरोधी । अन्नमस्येव स्वानतिरिक्तैः । स्वावयवैरेव तस्येदमेव शिर इत्यादिशिरःपुच्छाद्यवयवत्वकल्पनात् । आनन्दमयस्य स्वपर्यायश्लोकाविषयत्वमासिद्धम् । अन्नमयादिपर्यायश्लोकानां पुच्छमात्रविषयाभावेनास्यापि तद्वदेव पुच्छवतो विषयतौचित्यात् । न च पुच्छवति प्रयुक्तस्याऽऽनन्दमयवदस्य श्लोके श्रवणाभावात्पुच्छे प्रयुक्तस्य ब्रह्मशब्दस्यैव श्रवणात्पुच्छविषयतैवासौ न पुच्छवद्विषय्यः । सत्यं ज्ञानमनन्तं ब्रह्म, तस्माद्वा एतस्मादात्मन इत्युपक्रान्तस्यैवाऽऽनन्दमयवाक्ये प्रतिपादनेन ब्रह्मात्मानन्दमयशब्दानामेकार्थावगमेन तेषामन्यतमनिर्देशमात्रेण श्लोकस्याऽऽनन्दमयाविषयत्वासिद्धेः । न च प्रियमोदादिमत्तया प्रसिद्ध आनन्दमये श्लोकदर्शिता सत्त्वासत्त्वशङ्का नान्वेतीति वाच्यम् । जीवस्य लोके तथा प्रसिद्धत्वेऽपि ब्रह्मणोऽप्रसिद्धत्वात्तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यादावानन्दमयस्याऽऽत्मान्तरश्रवणमप्यसिद्धम् । तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इत्यर्थाङ्गीकारात् । तस्याऽऽनन्दमयस्य एष एव शारीर आत्मा यः पूर्वस्य विज्ञानमयस्येत्यर्थाङ्गीकारेऽपि विज्ञानमयस्य य आकाशादिस्रष्टाऽऽनन्दमयः शारीर आत्मा स एव

स्वस्यापि स्वमेवाऽऽत्मेति पर्यवसानेन पतिं विश्वस्याऽऽत्मेश्वरमित्यात्मेश्वरत्वोक्त्या, ईश्वरान्तरस्येवाऽऽत्मान्तरस्यापि निराकृतेः सिद्धेः । अतः पुच्छवदानन्दमयोऽपि ब्रह्मैव । प्रकरणस्य स्वस्मादनतिरिक्तैः स्वावयवैः पक्षपुच्छादिरूपेण परत्वेन तस्य -पुच्छब्रह्माभेदप्रतीतेः । प्रकरणगतश्लोकानां पुच्छवद्विषयत्वेन तत्रैव श्लोकगतब्रह्मशब्दाभ्यासस्य सत्त्वासत्त्वशङ्कालिङ्गस्य पर्यवसानात्सत्यं ज्ञानमिति प्रकृतं तस्माद्वा एतस्मादात्मन इत्यात्मपदेन निर्दिश्य तस्याऽऽकाशादिकारणत्वप्रतिपादनानन्तरं सर्वानन्दत्वेन तस्याऽऽत्मत्वविवरणार्थं प्रवृत्तस्य संदर्भस्य तत्रैव समापनेन तदनन्तरं तस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्युपदेशाभावात् । सोऽकामयतेत्यनन्तरवाक्येन पुंलिङ्गान्तेनाव्यवहितोपस्थितानन्दमयस्य परामर्शात् । न तु नपुंसकलिङ्गब्रह्मपदार्थस्य भृगुवल्ल्यामेतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्येत्यत्राऽऽनन्दमयशब्दस्य विज्ञानं ब्रह्मेति व्यजानात् । आनन्दो ब्रह्मेति व्यजानादिति तत्रत्यसंप्रतिपन्नब्रह्मपरभावेनाऽऽनन्दशब्देन सह स्थानसाम्येन ब्रह्मपरत्वनिश्चयात्सूत्रस्वारस्याच्चेति वदन्ति । यत्तु स वा एष पुरुषोऽन्नरसमय इत्यत्र न देहमात्रमुच्यते । तस्यान्नपरिणामत्ववाचिनाऽन्नरसशब्देनान्नविकारत्ववाचिनाऽन्नमयशब्देन चोक्तिसंभवेऽन्नरसमय इत्यस्य वैयर्थ्यात् । पुरुषशब्दस्य चेतनवाचित्वात्। अन्नात्पुरुष इत्यव्यवहितपरामर्शस्यैष इत्यनेन सिद्धया स इत्यस्य व्यवहिताकाशादिकारणात्मपरामर्शार्थत्वाच्च । किंतु स प्रागाकाशादिकारणत्वेन निरूपित एषोऽनुपदमन्नकार्यत्वेन निरूपितश्च पुरुषोऽन्नरसमय आकाशादिकारणमेव । अन्नरसं देहमनुप्रविश्य तदवच्छिन्नत्वेन तत्कार्यमित्युच्यते । एवं प्राणमनोबुद्ध्यवच्छिन्नतया प्राणमयो मनोमयो विज्ञानमयस्तद्विकारभूतो जीव एव। न च स्वतः कार्य एव विकारार्थप्रत्ययो नत्वौपाधिककार्यतावत्यर्थ इति व्युत्पत्तिकल्पना प्रमाणवती । किंच प्राचुर्यार्थकत्वेऽपि जीव एवाऽऽनन्दमयः । आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वार्थत्वात् । प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वे निरूपकत्वेऽपि विशेष्यत्वे समानाधिकरणविजातीयाल्पत्वनिरूपकत्वमिति व्युत्पत्तिसिद्धम्। अत एव प्रचुरब्राह्मणो ग्राम इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेऽपि ब्राह्मणप्रचुरो ग्राम इत्यत्र तत्तद्ग्रामनिष्ठशूद्राल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते । न च प्रचुरप्रकाशः सवितेतिवत् प्रकाशप्रचुरः सवितेति प्रतियोगिनक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यं न तु सवितृगततमोऽल्पत्वापेक्षम् । तत्र तमसो

बाधितत्वादिति वाच्यम् । तत्रापि घनतुहिनमैहिकेयाच्छादनारोपितमोल्पत्वम-पेक्ष्यैव घनापसारणसमये तथा प्रयोगात् । किंचान्यत्र व्यधिकरणसजातीया-ल्पत्वमपेक्ष्यान्यथा व्यवहारेऽपि प्रकृते त्वदभिमतप्रायपाठानुसारेण समाना-धिकरणविजातीयाल्पत्वमपेक्ष्यैव । तथा हि—प्राणमये तावत्पञ्चवृत्तिवायुगतमेव व्यानादिवृत्त्यल्पत्वमपेक्ष्य तत्र प्राणवृत्तिप्राचुर्यम् । अन्यत्र प्राणवृत्तेरभावात् । एवं मनोमयेऽपि मननवृत्तिसंबन्धिनो मनसस्तत्प्राचुर्यतद्गतवृत्त्यन्तरमपेक्ष्यैव । विज्ञानमयेऽपि जीवे विज्ञानप्राचुर्यं तद्गतज्ञानात्मकसंस्कारादिवृत्त्यन्तराल्पत्वापे-क्ष्यैव । एवं चाऽऽनन्दमयेऽपि समानाधिकरणदुःखाल्पत्वापेक्षयैवाऽऽनन्दप्राचुर्य-प्रदो मयडर्थ इति । तन्न । देहस्य पञ्चभूतपरिणामस्यात्र परिणामप्राचुर्यसूचक-त्वेनान्नरसमयशब्दस्य सार्थक्यात् । तदवच्छिन्ने मृद्विकारव्यवहारस्यालीक-त्वात् । न हि घटावच्छिन्नाकाशे घटविकारोऽस्ति । किंच कृत्स्नं ब्रह्मा-वच्छिद्यत एकदेशो वोपाधिना । आद्ये कृत्स्नस्यान्नमयत्वाद्यापत्तेः । अन्त्ये सदेशत्वापत्तेः । किंचेत्याद्ययुक्तम् । तादृश्युपपत्तौ मानाभावात् । प्रचुर आनन्दो यस्मिन्नित्यानन्दमय इति प्रकृतेऽपि प्राचुर्यस्य विशेषणत्वात् । तत्रेत्याद्ययुक्तप्रचुरप्रकाशः सवितेति व्यवहारस्य सवितरि कादाचित्कत्वाभा-वात् । प्रतियोगिनि विद्यमान एव तथाव्यवहाराच्च । किंच पूर्वं न प्रचुरप्रकाश इदानीं तु प्रकाशः सवितेति सजातीयापेक्षयैव हि प्राचुर्यं त्वदुक्त्याऽप्यायाति । तच्च प्रकृते न युक्तम् । निरवधिकप्राचुर्यप्रतिपादनात् । तथा हीत्याद्ययुक्तम् । शरीरस्य भूतारब्धत्वेऽप्यन्नस्य प्राचुर्यात् । वायु-रूपस्य प्राणस्यान्नमये विद्यमानत्वेऽपि प्राणेन्द्रियाधारत्वे प्राणस्य प्राचु-र्यात् । प्राणमयेन्द्रियत्वेन मनसो विद्यमानत्वेऽप्यन्तःकरणचतुष्टयाधारत्वे मनोमये मनसः प्राचुर्यात् । ज्ञानस्य मनोमये विद्यमानत्वेऽपि जीवस्वरू-पभूतज्ञानस्य प्राचुर्यात् । जीवनिष्ठानन्दापेक्षया भगवदानन्दस्य प्राचुर्या-दिति सर्वत्र व्यधिकरणसजातीयापेक्षयैव प्राचुर्यमिति सिद्धम् । प्रज्ञान-घन एवाऽऽनन्दमय इति ब्रह्मण्यानन्दमयशब्दप्रयोगाच्च । न च तस्य सुषुप्तस्थान एकीभूत इति विशेषणाज्जीव एव प्राज्ञशब्दिन इति वाच्यम् । वाक्यशेष एष सर्वेश्वर एष सर्वज्ञ इत्यादिनेशस्योक्तत्वात् । ईश एव हि प्राज्ञः । यत्तु तस्यैष आत्मा शारीर इत्यात्मान्तरं नास्तीत्याद्ययुक्तम् । पूर्वपर्यायस्थानामिवाऽऽनन्दमयपर्यायस्थितस्यापि तस्य

वाक्यस्य पुच्छब्रह्मरूपात्मान्तरपरत्वोपपत्तौ प्रक्रमविरुद्धकल्पनायोगादिति। तन्न। अन्नमयाद्युत्तरमन्योऽन्तर आत्मेति श्रवणादात्मान्तरसंभवेऽप्यानन्दमयोन्तरं तच्छ्रवणाभावेनाऽऽत्मान्तरसत्त्वे मानाभावात्। यत्तु यथाश्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदित्यात्मजिज्ञासवे नारदाय नामादिषूत्तरोत्तरमुपदेशोऽस्मि भगवो नाम्नो भूय इति वाग्वा नाम्नो भूयसीत्यादिप्रश्नप्रतिवचनाभ्यां प्राण एव समापनेऽपि प्रश्नादिकं विनैव प्रवृत्तस्य एष ह वाऽतिवदति यः सत्येनातिवदतीत्यादिः—शब्दश्रुत्याऽऽत्मनः प्राण इति प्राणोत्पत्तिलिङ्गेन च प्राणादर्थान्तरोपदेशपरत्वं तत्रैवाऽऽत्मपर्यवसानमेवमिहापि पूर्वोक्तप्रमाणैः प्राधान्येनावगते पुच्छब्रह्मण्येव पर्यवसानमिति। तन्न। तत्र तुशब्दस्य प्राणोत्पत्तिलिङ्गस्य च सत्त्वेन तथाकल्पनेऽपि प्रकृते बीजाभावेन तथाऽकल्पनात्। यच्चान्नमयादिष्विवाऽऽनन्दमयेऽपि क्वचिद्वस्तुनि प्रयोक्तव्येऽस्य पुच्छपदस्य तदाधारे ब्रह्मणि प्रयोगे तदेवोपक्रान्तब्रह्मोपदेशात्मकं पर्यवसन्नमिति। तदपि न। आनन्दमयाधारस्यालीकत्वेन तत्र प्रयोगासंभवात्। तदभिन्नावयवप्रयोगोपपत्तेश्च। यत्त्वानन्दमय एव सोऽकामयतेत्यादिसंदर्भस्य पर्यवसानं पुंलिङ्गानुरोधादित्याद्ययुक्तम्। पुच्छब्रह्मण्यव्यवहितप्रकृतब्रह्मशब्दापेक्षया पुंलिङ्गानुपपत्तावपि व्यवहितप्रकृतात्मशब्दापेक्षया तदुपपत्तेः। तस्य द्वादशशतदक्षिणेत्यत्राव्यवहितपरामर्शासंभवे व्यवहितपरामर्शस्य दृष्टत्वात्। तस्यैष शारीर आत्मेत्यानन्दमयादपि संनिहितमात्मशब्दमपेक्ष्य पुंलिङ्गोपपत्तेरिति। तन्न। तस्माद्वा एतस्मादात्मन इत्यात्मपदस्यातिव्यवहितत्वेन संनिहितोपस्थितस्याऽऽनन्दमयस्य परामर्शे बाधकाभावात्। तस्येत्याद्ययुक्तम्। तस्य पूर्वपर्यायसमधारण्यात्प्रधानप्रतिपाद्यपरत्वाभावात्। आनन्दमयस्याऽऽत्मान्तराभावेनाऽऽनन्दमयस्यैवोक्तत्वेन तस्य परामर्शसंभवात्। तदुत्तरमात्मोपदेशाभावात्। यत्तु भृगुवल्ल्यामानन्दमयो ब्रह्मेति निर्णीतमित्याद्ययुक्तम्। तावता विप्रतिपन्नानन्दमयशब्दस्य ब्रह्मपरत्वासिद्धेः। न ह्याकाश इति होवाचेत्यत्राऽऽकाशशब्दस्य ब्रह्मपरत्वनिर्णयमात्रेण य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छ्रित इत्यत्रापि तस्य ब्रह्मपरत्वं सिध्यतीति। तन्न। सिध्यत्येव ह्येकत्र निर्णीतार्थकत्वेनान्यत्रापि तदर्थकत्वम्। आकाशपदस्य ब्रह्मपरत्वे सिद्धेऽपि विशेषाशङ्कया एवाधिकरणान्तरेण समाधानात्। अन्यथा वाक्यभेदेन शास्त्रापर्यवसानात्।

यत्तु भृगुवल्ल्यामान्नातानन्दमयोऽप्येतमानन्दमयमात्मानमुपसंक्रामतीत्यानन्दमयश्रुतोपसंक्रमितत्वलिङ्गप्रत्यभिज्ञानेन तद्वद्ब्रह्मैवेति। तन्न । उपसंक्रमितत्वस्य मुक्तप्राप्यत्वलक्षणस्योभयत्राऽऽनन्दमयस्य ब्रह्मत्वसाधकत्वात् । स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नकामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते । इति ब्रह्मविद आनन्दमयप्राप्तिश्रवणात् । न हि ब्रह्मविदो ब्रह्मप्राप्तिरुचिता । न चैवमन्नमयादीनामपि ब्रह्मत्वापत्तिः । तदुत्तरमात्मोपदेशस्य बाधकत्वादिष्टापत्तेश्च । किंच विज्ञानमयानन्दमययोर्वेदे विकारार्थको मयडलीको बह्वच्कत्वात् । यत्तु प्राचुर्ये मयटचपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिलाभात्प्रकृते विकारार्थः पर्यवस्यतीत्याशय इति । तन्न प्रकाशमयः सवितेत्यादौ प्रकृत्यर्थविरोधिनोऽभानादिति वदन्ति । सिद्धान्ते तु पञ्चानामपि हरिरूपत्वम् । तत्परतया सूत्रव्याख्ययैवान्यव्याख्या निरस्ता । अन्नमयादिर्यदि ब्रह्म न स्यात्तदाऽन्नं ब्रह्मेति व्यजानादिति ब्रह्मत्वोक्तिर्विरुद्धा स्यात् । न च ब्रह्मज्ञानद्वारतयोपदिष्टमेतदिति वाच्यम् । सामानाधिकरण्येनोपदेशात् । न च गौणं तत् । विदुषस्तत्प्राप्तेरुक्तत्वात् । न च प्रातिपदिकमेवाभ्यस्यते । वसन्ते वसन्ते ज्योतिषेतिवदुपपत्तेरुक्तत्वात् । किंच सोऽकामयतेत्यत्र पुंलिङ्गेन संनिहितपरामर्शिना तच्छब्देन नपुंसकब्रह्मनिर्दिष्टस्यैतस्मादात्मन इति व्यवहितात्मपदनिर्दिष्टस्य च परामर्शायोगेन संनिहितस्याऽऽनन्दमयस्य परामृश्यत्वात् । सोऽकामयतेत्यस्य च कारणवाक्यस्य त्वयाऽपि ब्रह्मपरत्वाङ्गीकारात् । किंच या स्थूलेयं तारा तस्याः समीपेऽरुन्धतीं पश्य येयं शाखा तदुपरि चन्द्रं पश्येत्युपदिशन्ति ।

ननु स्थूलैवारुन्धती शाखा चन्द्र इति प्रकृते त्वन्नं ब्रह्मेति व्यजानादित्यभेदोपदेशः । इतिशब्दोऽन्नत्वादिप्रकारपरः । किंचान्नमयादीनामब्रह्मत्वे तेन ब्रह्मत्वोक्तिं विनाऽऽनन्दो ब्रह्मेत्युक्तसंभवश्च । न च सत्यमित्यादिना स्वरूपमुपदिश्य-पुनर्देहादिभ्रान्तिरुत्पादयितुं योग्या । प्रावण्यार्थं तदिति चेन्न । पराक्कोशोपदेशेन प्रत्यक्त्वप्रावण्येऽतिप्रसङ्गात् । न चापरिच्छिन्नस्यासङ्गस्याऽऽत्मनः कोशाद्यन्तरत्वं प्रत्यक्त्वं वाऽस्ति । न वा घटाकाशादिज्ञानोपायोऽपि घटा-

दिर्महाकाशज्ञानोपायः । किंचान्नादीनां प्राणादिप्रतिद्वारत्वमन्नज्ञानं विना प्राणादिज्ञानाद्ब्रह्माणि द्वारत्वेऽन्नादिपूर्वकं प्राणाद्युपदेशो न युक्तः । वैयर्थ्यात् । अन्नं ब्रह्मेति ब्रह्मशब्दादन्नाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादि-ब्रह्मलक्षणाच्च । न च तत्र मयडश्रवणाद्भिन्नविषयत्वम् । एतमन्नमयमात्मान-मुपसंक्रामतीत्यादावेतमानन्दमयमात्मानमुपसंक्रामतीत्यन्ते मध्ये तथैत-मन्नमयमात्मानमुपसंक्रम्येत्यादावेतमानन्दमयमात्मानमुपसंक्रम्येत्यन्त उपसंहारे च तच्छ्रवणात् । न ह्यन्नमयादेरब्रह्मत्वे मुक्तप्राप्यत्वात्मपदवाच्यत्वादिकं संभवति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति पुनरुपसत्तिस्त्वेकगुणविशिष्टं श्रुत्वा निदिध्यासनेन साक्षात्कृत्य गुणान्तरवि-शिष्टतया निदिध्यासनार्थमनुज्ञामादातुमुक्तं ह्युत्तरप्रस्थाने वरुणो भगवो ब्रह्मोपादिश्योवाच न श्रवणमात्रेण कृती भवान्, न ब्रह्मश्रवणमात्रं साक्षा-त्कारहेतुरतस्त्वया मनननिदिध्यासनरूपं तपः कर्तव्यमिति । स चैवमुपदिष्ट-स्तावद्रूपं युगपत्सर्वगुणविशिष्टं साक्षात्कर्तुमशक्यत्वान्मनननिदिध्यासनाभ्यामन्नाख्यं भगवद्रूपं साक्षात्कृत्य गुरुप्रसादलब्धं धनं तस्मै निवेदितुं प्राणाख्यरूपान्तर-साक्षात्काराय मनननिदिध्यासने कर्तुं गुरोरनुज्ञामादातुं च पुनर्गुरुमुपससार । एवमग्रेऽपि । तन्न । यदनुजानीहीति वक्तव्येऽधीहीति वदति तदहं-कारनिरासार्थम् । अन्नमयप्राणमयमनोमयविज्ञानमया मे बुद्ध्यन्तामिति वाक्ये तु ब्रह्मशब्दाभावात्तल्लक्षणाभावान्मुक्तप्राप्तिकथनाभावाच्च । रसशब्देन विशे-षणाभावेनाथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरित्यादाविव संज्ञाभेदात् । कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यादाविव प्रकरण-भेदाच्छुद्धिप्रार्थनलिङ्गाच्च । नात्रान्नमयादयो ब्रह्म किंतु कोशाः । अत्र तु कोशान्तर्गता भगवन्मूर्तिविशेषा अन्योऽन्तर इत्यन्यत्वान्तर-त्वाद्युक्तिस्त्वधिष्ठानभूतकोशानामन्यत्वादन्तरत्वाद् भगवतो बहुरूपत्वाच्च युक्ताः । उक्तं च मोक्षधर्मे—तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः । ततो मुक्तात्मनो भूत्वा ते प्रद्युम्नतनौ स्थिताः । प्रद्युम्नाच्चापि निर्मुक्ता जीवं संकर्षणं ततः । ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । एकान्तभावोपगता वासुदेवं विशन्ति वै । इत्येकस्यैव पूर्वोत्तरत्वं तत्रैव । स वासुदेवो विज्ञेयः परमात्मा सनातनः । ज्ञेयः स एव राजेन्द्र जीवः संकर्षणः प्रभुः । संकर्ष-णाच्च प्रद्युम्नो मनोभूतः स्वयंप्रभुः । प्रद्युम्नादनिरुद्धोऽभूत्सोऽहंकारः

स ईश्वर इत्युक्तम् । तस्माच्छ्रुतिविरोधाभावान्न सूत्राण्यन्यथा नेयानि । अनन्तशाखातत्त्वविदा भगवतेरितं कथमन्यथाकर्तुं शक्यं श्रुतिद्वेषं विना । उक्तं च ब्रह्मसूत्राणां निश्चितत्वम् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैरित्यादौ सूत्रास्वारस्यं परैरेव स्वीकृतमिति ॥ १९ ॥

ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ १ । १ । २० ॥

अत्रान्तःस्थत्वलिङ्गसमन्वयस्याधिदैवगतेन्द्रादिनामसमन्वयार्थत्वात्पादसंगतिर- नन्तरसंगतिस्त्वानन्दमयस्यादृश्यत्वस्यान्तःस्थत्वश्रवणादन्तःस्थस्य चाविष्णुत्वादा- नन्दमयोऽपि न विष्णुरिति पूर्वसिद्धान्ताक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकी । तत्रान्तःस्थो विष्णुरिन्द्रादिर्वा । तदर्थं किमिन्द्रादिश्रुत्यनुसारेण समुद्रशा- यित्वादिलिङ्गं नेयमुत विपरीतम् । तदर्थं श्रुतिर्निरवकाशा लिङ्गं तु सावकाशमुत विपरीतमिति । तत्रेन्द्र एवान्तःस्थ इन्द्रो राजा जगतो य ईशे त्वष्टारं रूपाणि विकुर्वन्तम् । तैत्तिरीयेऽन्तःप्रविष्टकर्तारमेतमन्त- श्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवा इति श्रुतम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सतारं बृहस्पतिमि- तीन्द्रादिश्रुतेः । यथा सिद्धान्तप्रापकतद्भावेऽपि तदज्ञानेन पूर्वपक्षस्तथा सूर्यादिप्रापकसद्भावे तदज्ञानेनेन्द्राद्येकैकावधारणेनानेकपूर्वपक्षः । विष्णुलिङ्गानां बहुत्वेऽपि बहुत्वप्रयुक्तप्राबल्यस्य स्वभावप्रयुक्तप्राबल्याद्दुर्बलत्वात् । न च तेषां निरवकाशत्वम् । समुद्रस्थत्वादेर्वरुणादावपि सत्त्वात् । निर- वकाशत्वेऽपि प्रबलया श्रुत्या बाधः । ब्रह्मेन्द्रमग्निमिति ब्रह्मशब्दस्तु ब्रह्मा- न्वविन्ददित्यादाविव तपसाऽन्वविन्ददित्युत्तरवाक्यस्थक्रियापेक्षितकर्तृसमर्पकत्वेन प्रथमान्तपुंलिङ्गत्वाच्च चतुर्मुखपरो न परब्रह्मपरः । इन्द्रादिरेवान्तःस्थः । स एवाऽऽनन्दमयो न वि[ ष्णु ]रिति प्राप्ते । समुद्रान्तःस्थो विष्णुरेव । तस्यैव देवाक्षेपत्वादिधर्मोपदेशात् । यद्यप्यैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादौ श्रुत्या लिङ्गबाधाच्छ्रुतेरुत्सर्गतो बलवत्त्वं तथाऽपि श्येनेनाभिचरन्यजे- तेत्यादौ श्येनशब्दोऽत्र रूढोऽपि यथा श्येनो निपत्याऽऽदत्त इति वाक्य- शेषोक्तस्य सादृश्यस्य श्येनेऽनुपपत्त्या यागपरस्तथा समुद्रान्तःस्थत्वादी- नामन्यत्रासंभवादिन्द्रादिशब्दा विष्णुपरा एव । अन्तःसमुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णं समुद्रेऽन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधस इति श्रुतौ । आपो नारा इति प्रोक्ता आपो वै नर-

सूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति वैष्णवे । महोदधिशयोऽन्तक इत्यानुशासनिके च । समुद्रान्तःस्थत्वस्य विष्णवेकलिङ्गत्वप्रसिद्धेः । न रीयते क्षीयते येन नरः परमात्मा । तस्माज्जाता आपो नारा अत एव नरसूनवः । ताः सृष्टेः पूर्वमयनं योगनिद्रास्थानं यस्य स तथेत्यर्थः । तथा वाऽऽनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन निरवकाशलिङ्गेन निर्णयोपपत्तेः । किंच—इन्द्रो मायाभिः पुरुरूप ईयते । महेन्द्रो वसुदो वसुरिति विद्वद्रूढेरनन्याधीनत्वनिरवधिकत्वरूपपरमैश्वर्यस्य च विष्णाविव सत्त्वेन तत्रैवेन्द्रादिपदानां मुख्या वृत्तिः ॥ २० ॥

नन्वस्मिन्प्रकरण एकमेव वस्तु प्रतिपाद्यं तथा चेन्द्रादिपदानामहं भवो भवन्तश्चेत्याद्यनुसारादभेदाभिप्रायेण मुख्यवृत्तिरेवेन्द्रादावित्यत आह—

ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ १ । १ । २१ ॥

इन्द्रस्याऽऽत्मा निहितः पञ्च होता वायोरात्मानं कवयो निचिक्युः । अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्मान्वविन्ददिति भेदव्यपदेशात् । शक्रादितोऽन्य एवं समुद्रस्थो हरिः । सोऽन्तकः स प्राणभृत्स प्राणनायकः स रुद्रः स ईशः स हरिरिति श्रुत्यन्तरेऽभेदविवक्षायां स रुद्र इत्यनेन स ईश इत्यस्य पौनरुक्त्यापत्त्या तत्तच्छब्दवाच्यतया विवक्षणीयत्वात् । प्रथमः स कर्त्तिर्विश्वकर्मा प्रथमो मित्रो वरुणोऽग्निः स प्रथमो बृहस्पतिरिति श्रुत्यन्तरे प्रथमपदेन भेदप्रतीतेश्च । भीषाऽस्माद्वातः पवत इति भयादस्याग्निस्तपतीति श्रुत्यन्तरे च भेदोक्तेर्न तु नारायणादिनाम्नामत्र संभवः । अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित इति स्मृतेश्च । यं न देवा न मुनयो न वाऽहं न च शंकरः । जानन्ति देवदेवस्य तद्विष्णोः परमं पदमिति चतुर्मुखोक्तेश्च । अहं भव इत्यादिकं तु तत्स्थत्वादित्यर्थकम् । अन्यश्च परमो राजंस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधव इति महाभारतोक्तेः । न च कल्पितभेदपरं भेदवाक्यं तात्त्विकस्त्वभेद इति वाच्यम् । अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यादावपि ग्रहणाग्रहणयोः कल्पितत्वाकल्पितत्वाभ्यां व्यवस्थापत्तेः । केचिदेतत्सूत्रद्वयमथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति च्छान्दोग्योक्ताक्षादित्यान्तःस्थपुरुषस्येश्वरत्वसमर्थनपरत्वेन व्याचक्षत इति । तत्रान्तर उपपत्तेरित्यस्यानारम्भा-

पत्तेः । न च य एषोऽन्तराक्षिणि पुरुषो दृश्यत एष त आत्मेति होवाचे-त्येतद्वाक्यमधिकृत्य तत्प्रवृत्तमिति वाच्यम् । वाक्यभेदेनाधिकरणभेदे शास्त्रा-पर्यवसानापत्तेः । किंच य आदित्यमन्तरो यमयतीति भेदप्रतिपादनमयुक्तम् । आरोपितनियामकत्वस्य जीवेऽपि संभवात् । न च जीवे पाप्मनो व्याव-हारिकत्वे न तद्राहित्यं प्रातिभासिके तथाऽन्तर्नियामकत्वमपि तथेति वाच्यम् । त्वन्मते तेषामुपास्यनिष्ठत्वात् । उपास्यानां तु नामादौ ब्रह्मत्वादीनामिव प्रातिभासिकत्वं नियमादिति ॥ २१ ॥

## ॐ आकाशस्तल्लिङ्गात् ॐ ॥ १ । १ । २२ ॥

अत्राधिभूतगताकाशादीनां समन्वय उच्यतेऽतो भूतेष्वाकाशस्य प्राधा-न्यात्सूत्रे तस्य कीर्तनम् । छान्दोग्येऽस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यान्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् । स एष परो-वरीयानुद्गीथः स एषोऽनन्त इति श्रुतम् । पूर्वत्रान्तःस्थत्वरूपैकलिङ्गसम-न्वयेन बहूनामसमन्वयोऽत्र त्वाकाश इत्येकनामसमन्वयेन बहुलिङ्गसमन्वयेन बहुलिङ्गसमन्वयोऽतोऽनन्तरसंगतिः । पुनरधिकां शङ्कां कृत्वा पूर्वन्याय एवातिदिश्यत इत्यातिदेशिकी । अत्राऽऽकाशः किं भूताकाशो ब्रह्म वा । तत्राऽऽकाशशब्देन योगरूढिभ्यां भूतमेवोच्यते । आकाशनमवकाशत्वं ह्यव-काशशब्दनिर्वचनलभ्यम् । तच्च भूते प्रसिद्धम् । प्रयोगोऽपि लोकवेदयोर्भूत एव । न च पूर्वेण गतार्थम् । इन्द्रादिशब्दानां पुरंदरादिष्वमुख्यत्वं हि निरवधिकस्य प्रवृत्तिनिमित्तस्यैश्वर्यस्याभावात् । भगवत्येव संभवाच्च । न त्वाकाशशब्दप्रवृत्तिनिमित्तमवकाशत्वं भूते निरवधिकं न संभवति । न चेन्द्रादिगतैश्वर्यादेरिव तदधीनत्वम् । ऐश्वर्यं हि वर्षणशासनपालनादिरूपा चेष्टा । सा चाऽऽगन्तुकज्ञानेच्छादिकारणसापेक्षा चातः स्वयमागन्तुकत्वाच्च कारणद्वारा स्वरूपतश्च परमेश्वरप्रसादाधीना संभवति । आकाशशब्दप्रवृ-त्तिनिमित्तं तु निरवध्यवकाशत्वादिकं न तावदागन्तुकज्ञानादिद्वारा परमे-शाधीनं न स्वरूपतः । स्वाभाविकत्वात् । तस्मादाकाशशब्दवाच्यं भूत-मेवेत्यधिकाशङ्केति प्राप्ते । निरवकाशपरोवरीयस्त्वादेरनेकलिङ्गादाकाशपद-वाच्यं ब्रह्मैव । प्रथमप्रतीतस्यापि सर्वभूतकारणत्वादेर्भूते कथंचिद्व्याख्या-तुमशक्यत्वात् । परोवरीयस्त्वादेः सर्वथा तत्र नेतुमशक्यत्वात् । तथा हि—

अस्य लोकस्य का गतिरिति पृथिवी गतिरिति प्रश्नस्योत्तरमभिधाय कथमेतत्, अपां कार्यं हि पृथिवी तत्रैव लीयत इति तासामेव पृथिवी गतित्वोपपत्तिरित्यवाद्येव पृथिव्याद्याश्रयो नत्वाकाश इत्याशङ्क्य मैवं मूलकारणत्वादित्याह—सर्वाणीति । तस्मादन्तवत्याकाशादावनन्तत्वादिलिङ्गासंभवेनाऽऽकाशपदोपलक्षितसकलाधिभूतशब्दैः परममुख्यवाच्यो हरिरिति सिद्धम् ॥ २२ ॥

ॐ अत एव प्राणः ॐ ॥ १ । १ । २३ ॥

अत्राऽऽध्यात्मिकप्राणादिशब्दसमन्वय उच्यते । अत्र प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायोरेवेति स एव प्राणशब्दवाच्यो न तु विष्णुरित्यधिकाऽऽशङ्कानिरसनेन पूर्वन्याय एवातिदिश्यत इत्यातिदेशिकी संगतिः । तद्वै त्वं प्राणो अभवः । महान् भोगः प्रजापतेः । भुजः करिष्यमाणः । यद्देवा नः प्राणयो नवेति श्रुतम् । अत्र प्राणः किं मुख्यवायुरुत ब्रह्म । तदर्थं किं प्राणश्रुतिप्रसिद्ध्यनुसारेण श्रीपतित्वादिलिङ्गं बाध्यमुत विपरीतम् । तदर्थं प्रसिद्धिबाधे श्रुतेर्मुख्यत्वहानिरुत नेति । तदर्थं प्राणशब्दप्रवृत्तिनिमित्तं जीवनहेतुत्वं ब्रह्मणि नास्त्युतास्ति । तत्र लोकवेदयोर्मुख्यवायावेव प्रयोगात् स एव प्राणपदाभिधेयः । न च पूर्वन्यायेन गतार्थमिदं सूत्रमिति वाच्यम् । इन्द्राकाशादिश्रुतेः । प्रवृत्तिनिमित्तस्यान्यत्रासंभवाद्धरौ संभवाच्चान्यत्र परिहारेऽपि प्राणशब्दप्रवृत्तिनिमित्तस्य जीवनचेष्टादिहेतुतारूपस्य वायौ सत्त्वेनागतार्थत्वात् । अत एवाऽऽनन्दमयोक्ताया विष्णोः प्राणताया इहाऽऽक्षेपान्न गतार्थता । किंच जीवनादिहेतुत्वं न ब्रह्मगतं नाप्यन्यगतं तदधीनम् । अनुपलम्भात् । तस्मान्मुख्यवायुरेव प्राणः । स एवाऽऽनन्दमयः । तस्यान्तरधिकरणे पूर्वपक्षितेन्द्रादिवदानन्दवल्ल्यामानन्दमयाद्भेदव्यपदेशाभावेनाऽऽकाशाधिकरणे पूर्वपक्षिताकाशवच्च जडत्वाभावेन स्वत एवाऽऽनन्दमयत्वसंभवादिति प्राप्ते । सर्वत्र मध्ये वामनमासीनमिति वामनशब्दादुत्तरत्र च गुह्यं ब्रह्म सनातनमिति ब्रह्मशब्दाच्च ब्रह्मैव प्राणः । श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रीपतित्वादेरन्यत्रासंभवाच्च । लक्ष्म्यादिशब्दानां तु बहुत्वादन्यत्र प्रयोगायोगेन मुख्यार्थत्यागायोगात् । प्राणशब्दस्यानेकत्वात्प्राणस्य प्राणः । अच्युतः प्रथितः प्राणः प्राणदो वासवानुज इति ब्रह्मणि प्रयोगाच्च ।

श्रीपतित्वादेरिव भर्ता सन्नित्यत्र तमेव मृत्युममृतं तमाहुः । भर्तारं गोप्तारमाहुः । परस्तादिह परत आबभूव । संबाधां चर्यां संदधे ब्रह्मणोऽपरमत इत्यादिब्रह्मलिङ्गानां सत्त्वात् । मातरिश्वश्रुतिरप्यन्तराधिकरणन्यायेन हरिसंततमिति हरिश्रुत्या निरुपपदं संहततत्वलिङ्गेन च ब्रह्मपरा । न चाशरीरस्य ब्रह्मणो व्यतिरेकाभावेनान्वयव्यतिरेकाभ्यां जीवनहेतुत्वसिद्धिरिति वाच्यम् । शक्तिविशेषेणेशस्याप्यस्मादादिशरीरादुत्क्रमणस्य वक्ष्यमाणत्वात् ॥ २३ ॥

ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ १ । १ । २४ ॥

अत्र लोकतोऽन्यत्र प्रसिद्धज्योतिर्नाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । यो वेद निहितं गुहायामित्युक्तम् । तच्च गुहानिहितम्—वि मे कर्णायतपतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नु मनिष्ये । इति ज्योतिरग्निरुत विष्णुरिति । तत्राग्निरेव । एतत्सूक्तस्याग्निसूक्तत्वात् । न च प्रकरणाल्लिङ्गबलीयस्त्वेन गुहानिहितत्वलिङ्गेन तद्बाधः । ज्योतिःश्रुतेरग्नावेव रूढत्वात् । यद्यपि ज्योतिःशब्दस्तमोविरोधिमात्रे प्रसिद्धस्तथाऽपि हृदयाहितत्वलिङ्गात् त्वामग्ने त्वमसीत्यग्निशब्दसंनिधानाच्चाग्निपर इति प्राप्ते । ज्योतिरत्र हरिरेव । करणेभ्यो विदूरत्वेन चरणाभिधानात् । इयदिति परिच्छेदानर्हवैभवत्वरूपं कर्णादिविदूरत्वं लिङ्गं विष्णावेव । न सर्वथा कर्णादिविदूरत्वं क्वाप्यसंभवात् । तच्च परो मात्रयेति श्रुत्योक्तं निरवकाशत्वम् । न ह्यग्निर्देवानामवम इत्याद्यवमतया, भीषादग्निस्तपतीति नियम्यतया परिक्षेनं म्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरिति मरणादिमत्तया च श्रुतस्याग्नेरपरिच्छेद्यं वैभवमग्निश्रुत्यादि त्वग्निना अग्निः समिध्यते तदेव ज्योतिषां ज्योतिः । नारायणः परो ज्योतिर्विष्णुरेव ज्योतिः । अहमग्निरहं हुतम् । ज्योतिषामपि तज्ज्योतिरित्यादिश्रुतिस्मृतिभिर्विष्णौ सावकाशमिदं न विष्णुसूक्तमित्यध्यापकप्रसिद्धिस्तु धान्यमक्षीति मन्त्रस्य मांसहविष्कयागे निविष्टस्य मांसमासीत्यूहे कर्तव्ये मृगोऽसीत्यूहवत् प्रसिद्धविष्ण्वादिशब्दाभावादज्ञानमूला । यद्यप्यत्र वाक्यशेषे विश्वे देवा अनंस्यनभिपाना इति सर्वदेवोपास्यत्वादिकमपि निरवकाशं विष्णुलिङ्गमस्ति तथाऽपि कर्णादिविदूरवद्विषयवाक्य एवाश्रुतत्वादपरिच्छेद्यवैभवान्त-

भूतत्वाच्च न पृथगुक्तम् । यद्यप्यत्र ज्योतिःकर्णादीनां विरुद्धचरणरूपं कर्णादिविदूरत्वं वक्तुं विचरणाभिधानादिति सूत्रयितव्यं तथाऽप्युपसर्गस्य द्योतकत्वमात्रं धातोरेव विचरणाभिधायकत्वमिति प्रदर्शनाय चरणाभिधानादित्युक्तम् । विचरणाभिधानादित्युक्तौ हि श्रुतौ वीत्यनेन चरतीत्यस्य मे मन इति पदद्वयव्यवहितत्वाच्छ्रुत्यनुगमो न स्यात् ॥ २४ ॥

ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ १ । १ । २५ ॥

छान्दोग्ये—अथ यदतः परो दिवो ज्योतिर्दीप्यते । विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु । इदं वा तद्यदिदमस्मिन्पुरुषे ज्योतिरिति । एतच्च गायत्रीत्वेन पठ्यते । गायत्री वा इदं सर्वं भूतं यदिदम् । वाग्वै गायत्री । वाग्वा इदं सर्वमिति श्रुतम् । अत्र प्रसिद्धगायत्रीनाम्ना हरौ समन्वयसमर्थनादस्ति संगतिः । गायत्रीमन्त्रो विष्णुर्वा । तत्र मन्त्र एव गायत्रीपदवाच्यो न हरिः । गायत्रीपदस्य मन्त्रे रूढत्वात् । न च पूर्वेणेदं गतार्थम् । धर्मिण आकाशादेरुत्पत्तिविनाशवतो जन्मस्थितिलयेऽवीशाधीनत्वे धर्मस्यापि पदप्रवृत्तिनिमित्तस्य तदधीनत्वम् । तदधीनतया तत्र मुख्यत्वोपपत्तेः । नैवं प्रकृतेऽर्थबोधकत्वरूपगानकर्तृत्वस्याध्येतॄणां पापाद्रक्षणरूपत्राणकर्तृत्वस्य च ब्रह्मण्यभावात् । वेदस्यानादित्वादविनाशित्वाच्च । अर्थबोधकश्रुतत्वस्यापि स्वाभाविकत्वान्नेशाधीनत्वम् । किंचाऽऽकाशादिवाक्येषु सन्त्यैश्वराणि लिङ्गानि न प्रकृते । प्रत्युत गायत्री वा इदं सर्वं गायत्री वाग्वै गायत्रीत्यादय एव शब्दाः । न च च्छन्दसः सर्वात्मयत्वं विरुद्धम् । ब्रह्मणोऽपि साम्यादिति प्राप्ते । चेतसोऽर्पणार्थमुपासार्थं गानत्राणकर्तृत्वरूपगायत्रीपदप्रवृत्तिनिमित्तविशिष्टो हरिरेव हि निगद्यते । गायति त्रायते चेत्यादिदर्शनं ज्योतिर्गायत्रीपदवाच्ये हरिरेव । यथाऽनादेर्गगनादिपरिमाणादेर्गमनाद्यधीनत्वं तथाऽनादिश्रुतीनामपि भगवदधीनत्वात् । यथा मायिमतेऽनादेर्जीवस्य ब्रह्मविभागादेरज्ञानाधीनत्वं यथा मतान्तरे दुरितप्रागभावस्य निषिद्धाकरणाधीनता तथा गायत्र्यास्तत्पदप्रवृत्तिनिमित्तस्य चोत्पत्त्यभावेऽपि स्थितौ ब्रह्माधीनता । दृश्यते हि योगेऽन्यापेक्षस्य पराधीनत्ववत्क्षेमेऽपि तदपेक्षस्य तदधीनता । यद्यप्यनादिस्वभावस्येशाधीनतामनुक्त्वाऽपि गायत्रीशब्दप्रवृत्तिनिमित्तस्य गानत्राणकर्तृ-

त्वस्य वेदोपदेष्टरि रक्षके च विष्णावेव संभवेन तस्य हरिपरतां वक्तुं शक्यम् । न च योगाद्रूढिः प्रबला । रूढिबाधकमहायोगायेशाधीनत्वोक्तेः । गायति त्रायते चेति श्रुत्योक्तत्वात् । निरवकाशहरिलिङ्गानुग्रहाच्च । रूढित्यागेन योगस्यैव ग्राह्यत्वात् । सर्वच्छन्दोभिधो ह्येष सर्वदेवाभिधो ह्यसौ । सर्वलोकाभिधो ह्येष तेषां तदुपचारतः ॥ इति भाष्योक्तस्मार्तरूढेरपि सत्त्वाच्च । तथाऽपि व्रीहीनवहन्तीत्यत्र द्वितीयाश्रुतिमतन्त्रीकृत्यावघाते लिङ्गाद्व्रीहिशेषतोक्ता । द्वितीये तथा द्युतमतन्त्रीकृत्य च्छन्दोगतस्य प्रवृत्तिनिमित्तस्य ब्रह्माधीनत्वेन हरावेव महायोगेन परममुख्यत्वमिति प्रदर्शनार्थमनादिस्वभावनियामकशक्तिरूपमद्गुणसिद्ध्यर्थं विष्णावनादिप्रवृत्तिनिमित्तकशब्दसमन्वयसिद्ध्यर्थं चेशाधीनतोक्ताऽतो हरिरेव गायत्र्यादिपदवाच्यः ॥ २५ ॥

हेत्वन्तरमाह—

**ॐ भूतादिव्यपदेशोपपत्तेश्चैवम् ॐ ॥ १ । १ । २६ ॥**

एवं गायत्रीपदार्थस्य ब्रह्मत्वे भूतादिव्यपदेशोपपत्तिर्भवति । एतावानस्य महिमा । अतो ज्यायांश्च पुरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । सर्वभूतान्यस्य पादः शक्त्येकदेशस्थितानि । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्यनुसारात् । पुरुषो वै नारायणः । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येष वा चिन्त्यः । परमो हरिः पुरुषः परमात्माऽजो नारायणः प्रभुरिति श्रुतेः । यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयत इति स्मृतेश्च न ह्येते धर्मा गायत्र्यादौ संभवन्ति ॥ २६ ॥

ननु त्रिपादस्यामृतं दिवीति पूर्वमुपदेशः सप्तम्यन्तः परो दिव इति च पञ्चम्यन्त इत्युपदेशभेदान्नैकमत्रोच्यत इत्याशङ्क्य समाधत्ते—

**ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥ १ । १ । २७ ॥**

त्रिपादस्यामृतं दिवीति गायत्र्या द्युस्थितत्वोक्तिः । परो दिव इति ज्योतिषो दिवः सकाशात्परत्वोक्तिश्चेति न विरुद्धम् । विवक्षाभेदेनोभयोरपि संभवात् । भूर्भुवः स्वरिति लोकत्रयाभिप्रायेण लक्षयोजनोच्छ्रितान्तरक्षोपरितनश्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्वात्तद्गतरूपं दिवीत्युच्यते । सप्तलोकापेक्षयेन्द्रसदनस्य द्युत्वाद्वैकुण्ठस्य दिवः परत्वम् । मेरोरपि द्युत्वात्परानन्तासनस्य दिवः परत्वम् । सूर्यमण्डलस्य द्युत्वात्तदुत्तरश्वेतद्वीपस्य दिवः परत्वम् । तत्रस्थमूर्तित्रयस्य दिवः परत्वं च युज्यते ।

यत्तु चतुःसूत्र्येकमधिकरणम् । चरणाभिधानादित्यस्य पादाभिधानादित्यर्थः । पादाभिधानं चाथ यदतः इति च्छान्दोग्यगतमेवेति । तन्न । ज्योतिर्भूतादिसूत्रयोः पौनरुक्त्यापत्तेः । अथ चरणाभिधानादित्यनेन पादोऽस्य सर्वा भूतानीति मन्त्रवाक्यस्थसर्वभूतानामेकपादत्वममृतस्य त्रिपात्त्वं चोच्यते । भूतादिपादेत्यनेन तु सैषा चतुष्पदेति ब्राह्मणवाक्यस्थभूतपृथिवीशरीरहृदयानां पादत्वमुच्यते । ब्राह्मणवाक्ये हीदं सर्वं भूतमिति । भूतं येयं पृथिवीति । पृथिवी यदिदमस्मिन्पुरुषे शरीरमिति । शरीरं यदिदमस्मिन्नन्तःपुरुषे हृदयमिति । हृदयं चोक्त्वा सैषा चतुष्पदा षड्विधा गायत्रीति भूतादीनां चतुर्णां पादत्वमुच्यते । ततो न पुनरुक्तिरिति चेन्न । चरणाभिधानादित्यनेन पादोऽस्य सर्वा भूतानि त्रिपादस्येति मन्त्रस्थपादाभिधानद्वयस्येव ततोऽधिकार्थब्राह्मणस्य पादाभिधानस्यापि वक्तुं शक्यत्वेन भूतादिसूत्रवैयर्थ्यात् । किंच त्वन्मते हि ब्रह्मगस्ततत्पादत्वं तत्र तदात्मकत्वं चरणाभिधानादित्यनेनैवोक्तमिति किं तदेकदेशरूपभूताद्यात्मकत्वप्रतिपादकेन भूतादिसूत्रेण । किंच चतुष्पदेत्यत्र चतुःशब्दो न भूतादिपरः । पूर्ववाक्ये भूतादिवद्वाग्वै गायत्री वाग्वा इदं सर्वमिति वाचोऽस्मिन्हीमे प्राणाः प्रतिष्ठिता इति प्राणानां चोक्त्वा भूतादीनां षट्कत्वेन चतुष्ट्वायोगात् । अत एव श्रुतौ षड्विधेत्युक्तम् । तस्मात्सैषेत्यत्र न पूर्ववाक्यस्थानां चतुर्णां भूतादीनां पादत्वमुच्यते, किंतु षाड्विध्यमनूद्य चतुष्पादत्वं विधाय तद्विवरणाय पादोऽस्येत्यादि प्रागुदाहृतम् । दिवि दिव इति विरुद्धविभक्तिसहितद्युप्रातिपदिकार्थसंबद्धस्यैक्यं तद्रहितचतुःसंख्यासंबद्धानां तु मन्त्रब्राह्मणस्थपादानां भेद इत्यस्यात्यन्तायुक्तत्वाच्च । तस्मान्मान्त्रवर्णिकादन्यस्य पादाभिधानस्याभावात्तस्य चरणाभिधानादित्यनेनैवोक्तत्वात्परमते भूतादिसूत्रवैयर्थ्यम् । अस्मन्मते भूतादीत्यत्राऽऽदिशब्दस्त्वमृतं दिवीत्युक्तामृताख्यस्वरूपपरः । न चात्र पादमुद्दिश्य विश्वभूतविधिः । येन पादैकत्वादिकमुद्देश्यविशेषणत्वात् । ग्रहं संमार्ष्टीत्यत्र ग्रहैकत्ववदविवक्षितमिति चतुष्पादत्वं सिध्येत । किं भुवि विश्वभूतोद्देशेन पादविधिः पादानां जिज्ञासितत्वात् । पशुना यजेतेत्यत्र पश्वेकत्ववद्विधेयगतत्वादेकत्वं विवक्षितम् । यथा पौर्णमास्यां पौर्णमास्या यजेतेत्यत्र सप्तम्यन्तः पौर्णमासीशब्दः काले मुख्यः । तृतीयान्तः कर्मण्यमुख्यः । तथा त्रिपादित्यत्र पादशब्दः स्वरूपे

मुख्यः । पादोऽस्य सर्वा भूतानीत्यत्र भिन्नांशे त्वमुख्यः । यत्तूभयस्मिन्नित्यादेर्यथा वृक्षाग्रसंबद्धोऽपि श्येनः वृक्षाग्रे श्येनो , वृक्षाग्रात्परत्र श्येन इति व्यपदिश्यते तथा दिव्येव सद्ब्रह्म दिवः परमित्युच्यते । यथा वा वृक्षाग्रेणासंबद्धोऽपि श्येन वृक्षात्परत्र श्येनः । एवं त्रिदिवः परमपि ब्रह्म दिवीत्युच्यत इति । तत्र यस्य वृक्षाग्रस्य यं प्रति मुख्यमाधारत्वमवधित्वं वा तस्यैव तं प्रत्येव मुख्यस्यावधित्वस्याधारत्वस्य विवक्षया वृक्षात्परः श्येन इति प्रयोगाभावेन दृष्टान्तासिद्धेः । यद्वामत्यां यदाधारत्वस्य विवक्षया वृक्षादित्यमुख्यं तदा वृक्षाग्रात्परत्र श्येन इत्यत्र श्येनशब्दो वृक्षाग्रश्येनावयवादुपरितनश्येनावयवावच्छिन्नश्येनलक्षकः। अग्रशब्दो वाऽग्रादिभागलक्षकः । यदा त्ववधित्वं मुख्यं तदाऽग्र इत्यत्र सप्तमी सामीप्यं लक्षयति । एवं दार्ष्टान्तिकेऽपि ज्योतिःशब्दो वा दिव इत्यत्र द्युशब्दो वा दिवीत्यत्र सप्तमी वा लक्षणयेति । तत्र ज्योतिषो ब्रह्मणो निरवयत्वाल्लक्षणादिप्रसङ्गाच्च, पृथिव्यां द्यौर्महामेरुरित्यादिस्मृतिविरोधाच्च। यच्च जागरिते जीवस्य शरीरं बाह्याकाशः स्थानं स्वप्ने तु तन्मध्याकाशः सुप्तौ तु हृदयाकाशस्तथा चाऽऽवस्थात्रयविशिष्टो जीवस्त्रिपादुक्तः । त्रिविधाकाशे च द्युशब्दार्थ इति तत्र जाग्रदाद्यवस्थावतो विश्वादिशब्दवाच्यस्य दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजस इत्यादिश्रुत्यादिना स्थानान्तरोक्तेः । जागरणादौ जीवस्य बाह्यादिशब्दार्थभोगेऽपि हृदि ह्येष आत्मेति श्रुत्या हृदयस्थजीवस्य बाह्याकाशादिस्थानत्वे मानाभावाच्च । जीवेऽमृतत्वस्यासंभवाच्च । दिवि दिव इति वाक्ययोरैकार्थ्यस्य संमतत्वेन दिव इति वाक्योक्तस्य ज्योतिषोऽपि जीवत्वापत्त्या ब्रह्मत्वसिद्धान्तहानेश्च ॥ २७ ॥

### ॐ प्राणस्तथाऽनुगमात् ॐ ॥ १ । १ । २८ ॥

अत्र श्रुतिलिङ्गबाहुल्येन गायत्र्यधिकरणसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनन्तरसंगतिः । अत्र प्राणः किं मुख्यप्राणादिः किंवा विष्णुरिति चिन्ता । नन्वत एव प्राण इत्यनेन गतार्थम् । न च पूर्वत्र वायुपरत्वस्यैव निरासः ... ? । इन्द्रजीववायुपरत्वानामिति भेदः । अस्य बहुविषयस्य तेनागतार्थत्वेऽप्यनेनाल्पविषयस्य गतार्थत्वान्निरासादिति चेन्न । इन्द्रादिलिङ्गादीनां विष्णौ प्रवर्तयितुमशक्यत्वेनैव पक्षोदयात् । तथा हि-इन्द्रो वै वृत्रं हत्वा महानभवत् । यन्महानभवत्तन्महाव्रतमभवदित्यादौ यो.

वृत्रहन्तेन्द्रो महाव्रते यजमानः प्रकृतः स एव तमिन्द्र उवाच प्राणो वाऽहमिति । न हि वृत्रहन्तृत्वं महाव्रते यजमानत्वादिकं ब्रह्मणि युक्तम् । न च प्राणो वाऽहमिति प्रसिद्धेन्द्रप्रयुक्तोऽहंशब्दो ब्रह्मणि युक्तः । इन्द्रोऽस्य हस्ताऽधिष्ठातुरिन्द्रियत्वात् । जीवे लिङ्गप्रयोजकत्वात् । जीवस्य मुख्यस्य सर्वेन्द्रियस्वामित्वात । प्राणलिङ्गोऽपि देहादुत्क्रमणप्रवेशौ ततो देहपातोत्थाने प्राणसंवादश्चेति मुख्यप्राणस्य च लिङ्गान्न विष्णुरिति प्राप्ते । तं देवाः प्राणयन्तेति देवोपास्यत्वं, तं भूतानि देवा उपासांचक्रिर इति भूतित्वेन देवोपास्यत्वं, सर्वे वेदा यत्पदमामनन्तीति सर्ववेदप्रतिपाद्यत्वं, प्राणो ह्येष य एष तपतीति सूर्यमण्डलस्थत्वं, प्राणः सर्वाणि भूतानीति सर्वान्तर्यामित्वं श्रूयते । न हि ब्रह्मातिरिक्ते तानि संभवन्ति । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी । पुरुष एवेदं सर्वम् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादिश्रुतिभिः । वेदैश्च सर्वैरहमेव वेद्यः, ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः, विष्टभ्याहमिदं कृत्स्नमित्यादिस्मृतिभिरेवानुगमोक्तेः ॥ २८ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॐ । १ । १ । २९ ॥**

तमिन्द्र उवाच ऋषे प्रियं वै धामोपागा वरं ते ददामीति स होवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृष इति बृहतीसहस्रवक्तुर्विश्वामित्रस्येन्द्रेण प्रजननाऽऽत्मोपदेशात् । अथ चक्रुरिन्द्रस्य प्राणतया स्वस्योपदेशान्नायमिन्द्रो विष्णुः । प्रसिद्धेन्द्रस्यैव वृत्रहन्तेत्यादौ महाव्रतयजमानत्वेन प्रकृतत्वात् । नायं प्राण इन्द्रः । अस्मिन्हि प्रकरणेऽवस्थितस्य प्राणो वा अहमस्म्यृष इति परमात्मत्वमुक्त्वा तस्यैवाध्यात्मनः प्राणानां प्राणः सर्वाणि भूतानीत्यादिना बहुस्थलसंबन्धः । सर्वगतत्वमेवेन्द्रेणोक्तं विद्यते । अथवेन्द्र बहुपरमात्मसंबन्धो विद्यते । तदपेक्षयैवायमुपदेशः, सर्वं समाप्नोषि ततोऽसि सर्व इत्यनुसारात् । स्वस्मिन्स्थितः परेण इन्द्रेण सर्वव्यापकत्वेन भूमोच्यत इति भावः ॥ २९ ॥

उक्तमुपपादयति—

**ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ॥ १ । १ । ३० ॥**

यथा वामदेवोऽहं मनुरहं सूर्य इत्यादिकमन्तर्याम्यभिप्रायेणाऽऽह तथेन्द्रोऽप्यहं प्राण इत्यादिकमाह। शास्त्रयति शिक्षयतीति शास्त्रं ब्रह्मान्तर्यामि तद्दृष्ट्या तदभिप्रायेण न तु शास्त्रोक्तप्राणो विष्णुः। एष परमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वा तावदभ्यार्चत्। प्राणो ह्येष य एष तपति शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्तीति प्राणस्योक्तशतायुष्ट्वस्योपर्यपि भवन्तीत्यादिना बहुस्थलेषु संबन्धाभिधानात्। शतायुष्ट्वस्य जीवलिङ्गत्वात्। ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति प्राणस्येन्द्रियैः सह कलहश्रवणात्। प्राण उदक्रामत्तत्प्राण उत्क्रान्ते यद्यतः प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठदित्युत्क्रमणादिश्रुतेः। तथा प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहित इति स जीवेन्द्रियदेहधारकत्वोक्तेः। संवादादीनां तु मुख्यप्राणलिङ्गत्वात्। उदासीनौ च तावास्तां केशवश्चाब्जसंभव इति विष्णोर्विवादादावुदासीनत्वोक्तेश्च न विष्णुः प्राण इति चेन्न। लिङ्गानां तदन्तर्यामिविषयत्वेनोपपत्तेः॥ ३० ॥

ननु किमर्थमन्तर्यामिकथनमित्यत आह—

**ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ॥ १ । १ । ३१ ॥**

तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्तीति जीवलिङ्गात्। प्राणसंवादादिजीवमुख्यप्राणलिङ्गान्न प्राणो हरिरिति चेन्न। लिङ्गार्थमन्तर्यामिकथनम्। अत आह—उपासात्रैविध्यात्। त्रैविध्येऽन्तर्यामित्वस्य निवेशाद्वक्तव्यं तदिति भावः। न चोपासनमारोपः। सर्वस्य चाहं हृदि संनिविष्ट इति हृद्याश्रितत्वाद्वा। वस्तुतस्तद्योगो हीहास्ति। अन्तर्बहिः सर्वगतत्वेनाऽऽश्रितत्वाच्च। स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत। स एतमेव पुरुषं ब्रह्मततमपश्यत्। एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय इत्यादिः। महिदासाभिधो जज्ञ इतरायास्तपोबलात्। साक्षात्स भगवान्विष्णुर्यस्तन्त्रं वैष्णवं व्यधादिति ब्रह्माण्डे। केषांचिद्धृदये हरिः।

केषांचिद्बहिरेवासावुपास्यः पुरुषोत्तम इति ब्रह्मे । अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनामिति च । स भगवानेतमेव मस्तकसीमानं विदार्यैतया द्वारा सुषुम्नया हृदयं प्राप्त इत्यन्त उपासना चोच्यते । स प्रागन्तःस्थो भगवानेतं प्राप्ते पुरुषमात्मान-[म]नन्ततमं ब्रह्मापश्यदिति सर्वगतोपासनार्थमुच्यते । महिदास इति बहिरुपास-नार्थमुच्येत । नन्वेकविधोपासनया ब्रह्मापरोक्षासिद्धेः परकीयश्रुत्यादि तु सावकाशम् । तथा हि—इन्द्रस्य प्रसिद्धत्वेऽपि तत्प्रयुक्ताहंशब्दस्तावदहं मनुरिति वामदेवप्रयुक्ताहंशब्दवद्व्यक्तितुल्यनिरूढलक्षणया सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते । एषोऽहं त्वमसौ चेति ।

ननु सर्वस्वरूपत इत्यादिस्मृतिभिर्मुख्यवृत्त्या वा सर्वान्तर्यामिपरः । न च तत्रापि विवादः । विशिष्टस्य वामदेवस्य मन्वादिभावासंभवात् । अहं मन्वादिशब्दैश्चैतन्यमात्रं लक्ष्यं चेत् प्राण इन्द्र इति पूर्वपक्ष इन्द्रशब्देन विशिष्टोक्तौ विशिष्टाभिन्नस्य प्राणत्वं प्राणः सर्वाणीति सार्वात्म्योक्तिरयुक्ता स्यात् । शुद्धोक्तौ तु प्राणस्य शुद्धत्वेन प्राणो न ब्रह्मेति पूर्वपक्षानु-दयः । चक्षुरादिसाहचर्यं तु सति संशये निश्चायकम् । अत्र तूक्तलिङ्गा-दिना निश्चयात् । प्राणसंवादोऽपि त्वमुक्थमसि त्वमिदं सर्वमसीत्यन्तर्यामि-ण्युपपद्यते । दुःखित्वादिकं त्वन्तर्यामिणि बाधितं शतं वर्षाण्यभ्यार्चदिति यच्छतसंवत्सरपर्यन्तं प्राणस्य जीवशरीरावस्थानं न तज्जीवलिङ्गं किंतु तस्माच्छतं वर्षाणि पुरुषायुषो भवन्तीति तद्धेतुकं शतायुष्ट्वम् । तच्च न प्राणे श्रुतम् । तस्माद्बहुत्वान्निरवकाशत्वाद्विष्णुलिङ्गैः सावकाशा प्राणश्रुतिरन्यथा नीयते । यत्तु प्रतर्दनं प्रतीन्द्रेण प्रयुक्तं प्राणोऽस्मि प्रज्ञात्मेति वाक्यमुदाहृत्य मामेव विजानीहीतीन्द्रलिङ्गादिदं शरीरं परिगृह्योत्थापयतीति वा पुंलिङ्गाद्वक्तारं विद्यादिति जीवलिङ्गाच्चेन्द्रादिरेव प्राण इति प्राप्ते । यत्त्वहं मनुष्याय हिततममिति हिततमत्वादिब्रह्मलि-ङ्गाद् ब्रह्मैव प्राण इति सिद्धान्त इति । तन्न । ज्ञानादेव हि मोक्ष इति त्वन्मते परमपुरुषार्थसाधनरूपहिततमत्वस्य ब्रह्मणोऽभावात् । परमपुरुषार्थत्वमेव हिततमत्व-मिति चेत्सर्वोपप्लवरहितं मोक्षदशानुगतं शुद्धचैतन्यं हिततमं वाच्यम् । तस्य हिततमत्वं हि न विशिष्टं प्रति । तस्य मोक्षदशायामभावात् । नापि शुद्धं प्रति । तस्याखण्डत्वेनास्येदं हिततममिति भागाभावात् । य वक्तु-

रुपदेष्टुरिन्द्रस्य प्राणोऽस्मीत्यात्मोपदेशान्नेति चेन्न । अस्मिन्प्रकरणे यावद्ध्यस्मिन्शरीरे प्राणो वसति तावदायुरित्याद्यवधित्वस्य वक्तारं विद्यादिति वक्तृत्वप्रज्ञातृत्वादिश्रोक्तेः प्रत्यगात्मसंबधबाहुल्यमस्ति । पराचीनेन्द्रे च न युक्तमिति तत्रोपदेशादित्यनेनैवोपदेष्टृत्वरूपवक्तृत्वलाभेन वक्तुरित्यस्य वैयर्थ्यात् । यत्तु शास्त्रदृष्ट्येत्यस्य व्याख्यानं—इन्द्रः स्वात्मा यथाशास्त्रमार्षेण ज्ञानेनाहं ब्रह्मेति पश्यन्मामेव विजानीहीत्युपदिष्टवान् वामदेववदिति । तन्न । चिदचित्संवलितात्माऽहमर्थे ब्रह्मत्वस्य मन्वादित्वस्य वाऽभावेन मामेव जानीहि । अहं मनुरित्यादिव्यपदेशहेतोरहं ब्रह्मेत्यादिदृष्टेर्भ्रान्तित्वेन शास्त्रदृष्टित्वाभावात् । चिन्मात्रदृष्टेर्भिन्नविषयकत्वेन मां विजानीहीति व्यपदेशाहेतुत्वात् । केचित्तु यस्याऽऽत्मा शरीरमित्यादिशास्त्रेण या दृष्टिर्जीवो ब्रह्मशरीरम् । शरीरवाची च देवमनुष्यादिशब्दवच्छरीरिपर्यन्त इत्येवं शास्त्रदृष्टिरिति । तत्रोक्तदोषाद्वामदेवस्य मन्वादिशरीरत्वाभावाच्च भगवत्यहं शब्दप्रयोगे शरीरशब्दः शरीरिपर्यन्त इति लोकदृष्टेरपि हेतुत्वेन शास्त्रपदप्रयोगे विशेषे हेत्वभावाच्च । यत्तु जीवमुख्यप्राणेतिसूत्रव्याख्यानं तत्र लिङ्गानुग्रहार्थं किंचिदत्र जीववाक्यं किंचिन्मुख्यप्राणवाक्यं किंचिद्ब्रह्मवाक्यं तथा त्रयोऽप्युपास्त्या इति चेन्न । उपासात्रैविध्यप्रसङ्गात् । मामेव विजानीहीतीन्द्रलिङ्गस्यापि सत्त्वेन चातुर्विध्यादिति वक्तव्यत्वापाताच्च । यत्तु भाष्ये त्रिविधोपासनापरत्वेन वाक्यभेदेन पूर्वपक्षयित्वैकवाक्यताप्रतीत्या ब्रह्ममात्रपरत्वमिति सिद्धान्तितमिति । तत्र यथा हि यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रमत इत्युपदेशो ज्ञानक्रियाशक्त्याश्रयबुद्धिप्राणपरः । सिद्धान्तेऽपि प्रज्ञाप्राणशब्दयोरुत्क्रमणादिलिङ्गैर्बुद्धिपरत्वात् । तथा पूर्वपक्षेऽपीन्द्रादिलिङ्गस्वारस्यार्थं तद्वाक्यमिन्द्रादिपरमाहुः । आश्रितत्वादित्यत्र च प्रकृतं त्रैविध्यस्यैवान्वयसंभवे ब्रह्मपरतार्थमध्याहारस्यायुक्तत्वात् । अत्र पञ्चभिर्यो य आनन्दमय इत्यादिना सामान्यशब्दानामन्तरित्यनेनाधिदेवगतानामाकाश इत्यनेनाधिभूतगतानामेवं प्राण इत्यनेनाध्यात्मगतानां ज्योतिरित्यनेन सूक्तसहितानां छन्द इत्यनेनाधिवेदगतानां प्राणस्तथेत्यनेन लिङ्गसहितानां शब्दानां समन्वयो विचारितः ॥ ३१ ॥

संवत्सरशब्दस्य चतुर्मुखपरत्वम्। तस्मादत्र महत्त्वरूपस्य तत्सारत्वस्य यदस्मादेव संभवात् ।

ननु चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मेतिश्रुतेर्नेशोऽत्रोच्यते । न हि चतुर्मुखत्वादिकं तत्र युक्तमिति चेन्न । ऐतरेयके हि—एतं ह्येव बह्वृचो महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामृतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमेतमौषधीष्वेतं वनस्पतिष्वेत चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इत्याम्नानात् । यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेः । ज्योतींषि विष्णुर्भुवनानि विष्णुर्गिरयो दिशश्च नद्यः समुद्राश्च स एव सर्वो यदस्ति यन्नास्ति च विप्रवर्येति । ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तम इति च । योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् । तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् । यत्रोत्तमे तत्प्रोतं च विश्वमक्षरसंज्ञके । आधारः सर्वभूतस्य प्रसीदतु स मे हरिरिति च । ब्रह्मैव ज्योतिरादिव्यापकत्वादेव तत्स्वरूपत्वम् । सर्वं समाप्नोषि ततोऽसि सर्व इत्यनुसारात् । परं ब्रह्म परं धाम पवित्रं परमं भवान् । परमं यो महद्ब्रह्म परमं यः परायणम् । इति भारतादौ विष्णोरेव ब्रह्मत्वप्रसिद्ध्योपदेशात् । आदित्यो ज्योतिरादित्य इत्यादौ ब्रह्मण्यप्यादित्यशब्दप्रसिद्धेः । पुरुषं प्रतीत्यनेन प्रतिगृहं कूप इत्यादिवत्सर्वपुरुषगतत्वस्योक्तेः ॥ १ ॥

युक्त्यन्तरेण हरेः सर्वगतत्वमुपपादयति—

**ॐ विवक्षितगुणोपपत्तेश्च ॐ** ॥ १ । २ । २ ॥

श्रुतो गतो मतो दृष्टो विज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामान्तरः पुरुष इत्यात्माऽपहतपाप्मा सत्यकामः सत्यसंकल्पो ज्यायान्पृथिव्या इति सर्वगते श्रूयमाणा अश्रुतत्वादयो विष्णाविवोपपद्यन्ते ॥ २ ॥

न चाऽऽदित्यशब्दात्सर्वजीवलिङ्गाच्च जीवा एव स्युरित्याह—

**ॐ अनुपपत्तेस्तु न शारीरः ॐ** ॥ १ । २ । ३ ॥

त्ववधारणे । ज्यायान्पृथिव्या ज्यायानन्तरिक्षादाकाशवत्सर्वगतश्चेत्यादीनां

शरीरमात्रस्थायिनि जीवेऽनुपपत्तेः । कस्यापि जीवस्य सर्वगतत्वाभावात् । नाऽऽदित्यस्य स्यात् । ब्रह्मादिदेहगतत्वाभावात् ॥ ३ ॥

युक्त्यन्तरमाह—

**ॐ कर्मकर्तृव्यपदेशात् ॐ ॥ १ । २ । ४ ॥**

आत्मानं परस्मै शंसनीत्यत्र सर्वगतस्य कर्मत्वेन जीवस्य कर्तृत्वेन च व्यपदेशात् । तयोस्तूत्सर्गतो भेदात् । अथवाऽभिसंभविताऽस्मीत्यत्र शारीरस्य प्रापकत्वेन परस्य प्राप्यत्वेन व्यपदेशात् ॥ ४ ॥

न तु ब्रह्मशब्दो जीवेऽप्यस्तीत्यत आह—

**ॐ शब्दविशेषात् ॐ ॥ १ । २ । ५ ॥**

एतमेव ब्रह्मेत्याचक्षते। ब्रह्मशब्दस्यान्यतो विशेषादेवकारव्यावर्तनात् । अन्यत्र मुख्यवृत्त्या नास्तीत्यर्थः ।

**ॐ स्मृतेश्च ॐ ॥ १ । २ । ६ ॥**

अहमात्मा गुडाकेश सर्वभूताशयस्थितः । गामाविश्य च भूतानि धारयाम्यहमोजसेत्यादि ॥ ६ ॥

**ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ १ । २ । ७ ॥**

ननु यथा जीवप्रापकसद्भावेऽप्यनुपपत्त्या न तस्य सर्वगतत्वं तथेश्वरप्रापकसद्भावेऽपि सर्वेषु भूतेष्वित्यल्पस्थानस्थितिकथनाच्चक्षुर्मयत्वादिजीवलिङ्गादादित्यश्रुतेश्चेतीश एवेति न निश्चय इति चेन्न । बाधकाभावात् । तथा हि—किमपरिच्छिन्नस्यार्भकौकस्त्वोक्तिर्व्यर्थाऽयुक्ता वा । आद्ये निचाय्यत्वादपरिच्छिन्नस्य जीवलक्षणस्यापि हरेरर्भकौकस्त्वेन चक्षुर्मयत्वादिनोपास्यत्वाद् वैयर्थ्याभावात् । द्वितीये—सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः । सर्वनामाभिधेयश्च सर्ववेदोदितश्च स इति स्कान्दोक्त्या सर्वप्राणीन्द्रियस्वामित्वेन चक्षुर्मयत्वाद्युपपत्तेः ।

ननु तत्र स्थितित्वे विकारादिकं स्यादित्यत आह—व्योमवच्चेति । यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारयेति स्मृतेः ॥ ७ ॥

**ॐ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ॥ १ । २ । ८ ॥**

प्राज्ञौ द्वावजावीशानीशौ । एकः स्वाद्वत्त्यन्योऽभिचाकशीति । अन्यो

मायया संनिरुद्धः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामय-न्सर्वभूतानि यन्त्रारूढानि मायया । स ईशो यद्वशे मायेति सर्वज्ञत्वाज्ञत्व-स्वातन्त्र्यादिसामर्थ्यासामर्थ्यविशेषात् । तथा चेशस्य जीवेनैकत्रावस्थानेऽप्युक्त-सामर्थ्यविशेषेणाभोगोपपत्तेः । यत्तु स क्रतुं कुर्वीत मनोमयः प्राण-शरीरो भारूपः सत्यसंकल्प इति मनोमयत्वादिना जीव एवोपास्य इति प्राप्ते । ब्रह्मैवोपास्यम् । सत्यकामत्वस्वाधीनत्वादिलिङ्गात् । न च वैपरीत्यम् । जीवस्य ब्रह्मण्यध्यस्तत्वात् । अध्यस्तसर्पस्याधारगतधर्मभीषणत्वादिना रज्जू रूपवती न तु रज्जुधर्मैरपरिगम्यत्वादिभिः सर्पो रूपवान् । तदा सर्पस्यै-वाभावात् । उक्तं हि भामत्याम्—आरोप्यस्वरूपेण विषयो रूपवान्भवे-न्न तु विषयरूपेणाऽऽरोप्यं रूपवदिति । सर्वत्र वेदान्तेषु परमात्मतया प्रसिद्धस्य ब्रह्मशब्दोपदेशादिति सूत्रार्थः । इति तत्र नाम्नि ब्रह्मत्ववद्यो-षित्यग्नित्वञ्च सर्वगतत्वादीनामाहार्यारोपस्य जीवेऽप्युपपत्तेः । किंचाधिगम्यत्वन-ध्याप्यरज्जुत्वाद्यज्ञानेन सामान्येन ज्ञानेन च भीषणत्वादिना भानेऽपि प्रकृते सत्यकामत्वादीनां ज्ञानादन्याज्ञातधर्माभावाच्चेतरारोपानुपपत्तेः ॥ ८ ॥

## ॐ अत्ता चराचरग्रहणात् ॐ ॥ १ । २ । ९ ॥

अत्र लोकतोऽन्यत्र प्रसिद्धादितिशब्देन सहोक्तात्तृत्वलिङ्गस्य हरौ समन्वयप्रतिपादनादस्ति संगतिः । बृहदारण्यके—सोऽदितिर्यद्यदसृजत्तत्तदत्तुं मनोऽध्रियतादच्च । कुतः । सर्वात्त्री सा सर्वमत्तीति । यत्ते देव ह्यदितेरदिति-त्वमिति । तदत्तृत्वमन्यस्य विष्णोर्वेति संशयः । कूटस्थोऽक्षर इत्यत्र प्रकृतौ तदभिमानिन्यां रमायामिवोपपत्तेः । न चादेर्भक्षणार्थत्वेनादितेरत्तृ-त्वेऽपि संहर्तृत्वस्य न प्राप्तिरिति वाच्यम् । मृत्युनैवेदमित्युपक्रमे मृत्युश-ब्दाद्यद् यदेवासृजत तत्तदत्तुमिति सृष्टिप्रतियोगित्वाद्भक्षणस्यापि संहारवि-शेषत्वादूर्णनाभ्यादिवच्च भगवतः संहर्तृत्वस्यात्तृत्वरूपत्वात् । तच्चादितावस्तीति प्राप्ते । उच्यतेऽत्ता हरिरेव । चराचरसकलवाचकसर्वशब्दग्रहणात् । सर्वात्तृत्वस्य विष्णोरेवान्यस्यासंभवात् । सर्गस्थितिविनाशांस्तु भगवान्मधु-सूदनः । सर्गस्थितिविनाशानां जगतो यो जगन्मयः । मूलभूतो नम-स्तस्मै विष्णवे परमात्मन इति वैष्णवोक्तेः । न चेशे संहर्तृत्वं श्रुतं न चात्तृत्वमिति वाच्यम् । अद्योऽत्ति च भूतानि । स सर्गकाले च करोति सर्वं संहारकाले तु तदत्ति भूयः । स्रष्टा पाता तथा चात्ते-

त्यादौ संहारादेः प्रयोगात् । तथा च श्रुत्यादिना सर्वात्तृत्वं निरवकाशम् । अन्वाख्यानपक्षे देवमातरि रूढिबाधार्थमिह सर्वात्तृत्वमेवादितिपदप्रवृत्तिनिमित्तमिति श्रुत्या स्वयमुक्तत्वादिति श्रुतिलिङ्गं च विष्णावेव मुख्यम् ॥९॥

प्रकरणमपि विष्णोरेवेत्याह—

**ॐ प्रकरणाच्चेति ॐ ॥ १ । २ । १० ॥**

नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत् । अशनया हि मृत्युस्तन्मनो कुरुतात् । मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्त । तद्यदपां शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचा मिथुनं समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत्स ऐक्षत । यदि ह वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति । स तया वाचा तेनाऽऽत्मनेदं सर्वमसृजतेत्यास्मिन्प्रकरणे मृत्युमात्रावशेषात्संवत्सरसृष्टिः संवत्सराद्नोद्यमादिश्रवणादेतत्प्रकरणस्य वैष्णवत्वं ज्ञायते । न च दर्शपूर्णमासप्रकरणघटितपूषमन्त्रस्येवोत्कर्ष इति वाच्यम् । तद्वत्प्रकृते स्वप्रकरणे निवेशासंभवाभावात् । पूर्ववाक्ये स यद्यदेवासृजत तत्तदत्तुमिति वीप्सया कृत्स्नोक्तेर्न सर्वपदस्य संकोचः । अत एव सूत्रे लाघवाय श्रुत्यनुगमाय च सर्वेति वक्तव्ये सर्वशब्दस्य संकोचनिरासाय चराचरेत्युक्तम् । न चावान्तरप्रकरणेनाभिक्रामतु जुहोतीत्यभिक्रमणस्य प्रयाजाङ्गत्वस्येवात्तृत्वस्य प्रसिद्धादितिगामित्वमस्त्विति वाच्यम् । तत्र पूर्वोत्तरप्रयाजाङ्गसंदेशेन संदेहस्येव प्रकृते बलवद्विष्णुलिङ्गादिना निश्चयेन संदेहाभावात् । यत्तु ब्रह्म च क्षत्रं चोभे भवत ओदनो मृत्युर्यस्योपसेचनमिति काठक ओदनावसेचनाभ्यां सूचितोऽत्ता जीव एवेति प्राप्ते । अत्तृत्वस्य संहर्तृत्वरूपस्य ब्रह्मलिङ्गत्वात् । शुद्धे तस्यासंभवे मायोपाधिके तत्संभवात् । अत एव क्षत्रादिशब्दोऽपि मुख्यः । नहि कश्चिदपि जीवो ब्रह्मक्षत्रादीनां भोक्ताऽस्तीति सिद्धान्त इति । तन्न । ब्रह्मक्षत्रादिपदानामुपलक्षणत्वापत्तेः । ओदनोपसेचनादिपदैरपि भक्षणीये लक्षणापत्तेश्च । न हि देवदत्तस्यौदनोऽस्तीत्युक्त्या देवदत्तनिष्ठभोक्तृत्वं विना लक्षणं लभ्यते ॥ १० ॥

ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ १ । २ । ११ ॥

प्रत्ययश्रुतिबलादन्यत्र प्रसिद्धक्रियालिङ्गसमन्वय उच्यत इत्यवान्तरसंगतिः । अत्तेत्यत्र सर्वात्तृत्वं विष्णोरुक्तम् । तन्मध्यपतितकर्मफलात्तृत्वं पातृशब्दवाच्यम् । काठके—ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्तीति कयोश्चित् प्रतीयते । तद्यद्यन्यस्य तदा सर्वात्तृत्वासिद्धिरन्यस्यापीति चेत्तदा लक्षणातिव्याप्तिरित्यवश्यं निर्णेयम् । अत्र जीवेश्वरौ किंवेश्वररूपाविति चिन्ता । तत्र पूर्वोक्तमत्तृत्वं युक्तम् ब्रह्मणि नामार्थस्य संहर्तृत्वस्य प्रत्ययार्थस्यैकत्वस्य च संभवात् । इह नामार्थः कर्मफलभोक्तृत्वं प्रत्ययार्थो द्वित्वं च कर्मबन्धरहिते निर्भेदे ब्रह्मणि न युक्तम् । अन्यथा सप्तदश प्राजापत्यान् पशूनालभेतेत्यादौ संख्यया कर्मभेदो न स्यात् । अन्नमयेत्यत्र संज्ञाधिकरणन्यायेनान्नस्य प्राणमयेत्यादिसंज्ञाभेदे शङ्किते दाक्षायणयज्ञेन स्वर्गकामो यजेतेत्यत्र दक्षस्य यजमानस्येमे ऋ(त्वि)जो (?) दाक्षास्तत्कर्तृकमयनं प्रयोगावृत्तिर्नतु कर्मान्तरं यथा तथा प्रकृते ब्रह्मणि विधायका न तु संज्ञामात्रमतो न भेद इति परिहारस्तत्राभिप्रेतः । अन्नमयादीनां ब्रह्मत्वं स्वीकृत्यैवात्र पूर्वपक्षः । अथवाऽन्नमयादीनामप्यत्राऽऽक्षेपः । तस्माज्जीवेशावेवेति प्राप्ते । यद्यपि जीवो गुहां प्रविष्टस्तथाऽपि यो वेद निहितं गुहायां गुहाहितं गुह्वरेष्ठं पुराणं प्रविशतीत्यादिश्रुतिष्वहमात्मा गुडाकेश सर्वभूताशयस्थितः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीत्यादिस्मृतिषु च गुहानिहितत्वदर्शनाद्धरिरेव गुहां प्रविष्टः । पाता नो हि मैथिल इत्युक्ते न यः कश्चिन्मिथिलाभवः प्रतीयते, किंतु यस्तत्र प्रसिद्धः स एव । यः सेतुरीजानानामक्षरं ब्रह्म यत् परं, अथ तितीर्षतां पारमित्युत्तरवाक्ये परत्वेन विशेषणात्परब्रह्मण्येव ब्रह्मशब्दः । नह्युत्तरत्र यः सेतुरित्यादिभिः पूर्वत्र च यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन इत्यादिभिर्ब्रह्ममात्रविषयैर्वाक्यैः संदष्टम् । ऋतं पिबन्तावित्यादिकं बाधकाभावेऽप्यब्रह्मविषयमिति युक्तम् । न चेशस्याभोक्तृत्वं बाधकम् । एतत्सर्वं पर आत्मनि प्रतिष्ठितमिति प्रस्तुत्य, एष हि द्रष्टा स्रष्टा श्रोता रसयितेत्यादिश्रुतेः । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । अधिष्ठाय मनश्चायं विषयानुपसेवत इत्यादिस्मृतेश्च । न चेदं जीवपरम् । पूर्व—पश्चा-

प्युत्क्रामतीश्वरः । उत्तरत्र विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुष इतीश्वरलिङ्गात् । न ह्यहंप्रत्ययवेद्यस्य दुर्ज्ञेयत्वम् । अनश्नन्नन्य इत्यादिकं तस्यैतदाहुः पिप्पलं स्वाद्वत्तीतीश्वरस्य स्वादुभोक्तृत्वोक्तेस्तथा प्रविविक्तराहार एव भगवत्यस्माच्छरीरादात्मन इति श्रुत्यन्तरे परेशाहारस्य जीवाहाराद्विविक्तत्वोक्तेरशुभभोगनिषेधपरम् । किंच जीवपक्षे—ऋतं सत्यं तथा धर्म इति स्मृतेर्धर्मफलवाचि ऋतं पदं न युक्तम् । तस्याधर्मफलं प्रत्यपि भोक्तृत्वात् । ईश्वरपक्षे तद्युक्तम् । पुण्यमेवामुं गच्छतीति श्रुतेः । न च द्विवचनानुपपत्तिः । द्विपत्नीकेऽधिकारे पत्नीं संनह्यत्येकवचनान्तमन्त्रवदेकब्रह्माधिकारे द्विवचनोपपत्तेः । रामकृष्णावित्यादाविव रूपभेदेनान्वयोपपत्तेरुत्कर्षाशङ्काभावात् ।

ननु प्रोहा(द्गा)तॄणामित्यत्रेव विभक्त्या(क्त्य)र्थान्वयाय च्छत्रिवत्प्रातिपदिकलक्षणेति चेन्न । तत्र प्रकरण उद्गातृपदलक्षणीयानां प्रस्तोत्रादीनां छन्दोगानामिवात्र ब्रह्मप्रकरणे लक्षणीयस्याभावात् । यद्यपि यौ गुहां प्रविष्टौ तौ छायातपौ वदन्तीति द्वित्वं विधेयविशेषणम् । तथाऽप्यग्नीनाधीतेत्यत्र बहुत्वस्योद्देश्यविशेषणत्वेऽपि विवक्षादर्शनेन सत्रादुदवसाय पृष्ठसवनीयेन यजेरन्नित्यत्र बहुत्वस्य विधेयविशेषणत्वेऽप्यविवक्षादर्शनेनानिर्ज्ञातविशेषणत्वस्यैव विवक्षां प्रति तन्त्रत्वात् । यस्य ब्रह्म च क्षत्रं चेत्यादि पूर्ववाक्ये यस्येत्येकवचनेनैकत्वस्य निर्ज्ञातत्वात् । सप्तदश प्राजापत्यान्पशूनालभेत द्वा सुपर्णावित्यादौ प्राक्संख्याया अनिश्चयाद्भेदः स्वीकृतः । अत्र यस्य ब्रह्मेति, मृत्युर्यस्येति, यः सेतुरित्याद्येकवचनादेकत्वनिश्चयः । अत एवैकादश प्रयाजान् यजति, विराट्संपन्नमग्निहोत्रं जुहोतीत्यत्रैकादशत्वं विराट्पदवाच्यदशत्वं चाऽऽवृत्त्यैवोपपद्यते । किंचायं वै दश च सहस्राणि च बहूनि चानन्तानि च तदेतद् ब्रह्मापूर्वमनपरमनन्तमित्यादिनैकस्मिन् बहुत्वोक्तेर्विरोधस्त्वाचिन्त्यशक्त्यैव परिहरणीयः । अपि च यथा नवमे मेधपतये मेधपतिभ्यां मेधमित्यत्र मेधपतिशब्दार्थयोरग्नीषोमयोरेकवचननिर्वाहाय देवतात्वेनैकत्वं देवतात्वस्य व्यासक्तत्वात् । द्विर्वचननिर्वाहाय तु देवतात्वाधिष्ठानरूपेण द्वित्वमिति द्वित्वैकत्वयोः समुच्चयस्तथाऽत्रापि ब्रह्मणः स्वरूपेणैकत्वं मूर्त्यादिना चानेकत्वम् ॥ ११ ॥

**ॐ विशेषणाच्च ॐ ॥ १ । २ । १२ ॥**

यः सेतुरीजानानामक्षरं ब्रह्म यत्परमिति पिबतोरेकत्वपरत्वब्रह्मत्वविशेषणा-

द्विष्णुरेव सः । सुखदुःखहेतुत्वरूपगौणं छायातपत्वं च प्रतियोगिभेदेनाविरुद्धम् । सूत्रे यद्यपि समवेतव्यं पातृत्वं ऋतं पिबन्ताविति साक्षादेव वक्तव्यं तथाऽपि गुहाप्रविष्टत्वरूपहेतुमपि वक्तुमृतपातृत्वसमानाधिकरणगुहाप्रविष्टोक्तिद्वारा तदुक्तिः । ये तु ऋतं पिबन्तौ बुद्धिजीवौ गुहाप्रविष्टत्वादेस्तत्र संभवात्सर्वगते ब्रह्मण्यसंभवाद्बुद्धेरपातृत्वेऽपि च्छत्रिन्यायेन पिबच्छब्द इति प्राप्ते । ऋताख्यकर्मफलपातृत्वलिङ्गेनैकस्य जीवत्वे निश्चिते द्वितीयस्तज्जातीयश्चेतनः परात्मैव न त्वचेतना बुद्धिरस्य गोर्द्वितीयेन भाव्यमित्युक्ते गौरेव द्वितीयस्तथा चेतन एव द्वितीयो गुहाविष्टत्वं च कथंचिन्नेयम् । ब्रह्मणो पातृत्वेऽपि च्छत्रिन्यायेन पिबच्छब्द इति तत्र पिबच्छब्दस्य मुख्यभाक्तरि जीव एव समन्वयेनासंगत्यापत्तेः । त्वन्मते जपाकुसुमगतस्य लौहित्यस्यं स्फटिक इव बुद्धिगतस्य कर्तृत्वभोक्तृत्वादेर्जीवेऽध्यासात्कथं पातृत्वलिङ्गेनैकस्यापि चेतनत्वं येन तत्साजात्येन द्वितीयोऽपि चेतनः स्यात् । समसत्ताकभोगवती बुद्धिस्तत्प्राणो जीवो वाऽस्तु । संनिहितत्वान्न तु शुद्धा चिदसङ्गत्वात् । नापीशोऽवच्छेदपक्षे प्रतिबिम्बपक्षे कौन्तेयस्य राधेयत्वमिवाध्यासपक्षे चासंभवात् । छत्रिस्थलेऽप्येकसार्थगतेष्वेवाच्छात्रिषु लक्षणा । किंच लोके देह आत्मत्वमध्यस्तमिति, आत्मा द्रष्टव्य इत्यादिश्रुतावात्मशब्दस्य देहपरत्वापातात् । यत्तु विशेषणाच्चेति सूत्रस्योत्तरवाक्य आत्मानं रथिनं विद्धीति जीवस्य गन्तृत्वेन सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति परमात्मनश्च गम्यत्वेन विशेषणात् । तावेवात्र पिबन्तावित्यर्थ इति । तत्र जीवस्य रथित्वेन बुद्धिं तु सारथिं विद्धीति बुद्धेश्च सारथित्वेन विशेषणात्तावेवात्र पिबन्तावित्यपि प्रसङ्गात् ॥ १२ ॥

ॐ अन्तर उपपत्तेः ॐ ॥ १ । २ । १३ ॥

अत्राग्निश्रुतिसाहित्येनान्यत्र प्रसिद्धस्य चक्षुरन्तःस्थत्वलिङ्गस्य परब्रह्मणि समन्वयसमर्थनादस्ति शास्त्रादिसंगतिः । छान्दोग्ये—य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति । अत्र चक्षुरन्तःस्थोऽग्निर्विष्णुर्वेति चिन्ता । तत्राग्निरेव य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीत्यग्निनाऽऽदित्यस्थत्वस्य स्वात्मतयोपदिष्टत्वात् । चक्षुरादित्ययोश्चाऽऽदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदित्यादिश्रुत्यैक्यात् । तच्चाग्नेरादित्य-

स्थत्वकथनमौपचारिकम् । यश्चासावादित्य इति श्रुतिविरोधात् । सोऽह-मस्मि स एवाहमस्मीत्यभ्यासादिति प्राप्ते । विष्णुरेव चक्षुरन्तरः । एत-दमृतमभयमित्यमृतत्वाभयत्वश्रुतेः । त्रिपादस्यामृतं दिवीति । अभयं पारं तितीर्षतामिति च विष्ण्वेकनिष्ठतयैव श्रवणात् । न चाग्नेरमृतत्वाद्युपपद्यते । परिह्वेनं म्रियते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः, भीषाऽस्मादग्निश्चेन्द्रश्चे-त्यादिश्रुतेः । न च बह्वग्निश्रुतिविरोधः । कुशलं न इत्यत्रास्मच्छ-ब्दोऽग्निपरोऽपि सोऽहमित्यत्र बाधकादन्तर्यामिपरत्वात् । अभ्यासोऽपि पूर्वा-पराविरुद्धेऽर्थे तात्पर्यस्य लिङ्गम् । अग्नेरादित्यस्य त्वं चामृतमित्युत्तरवा-क्यैर्विरुद्धम् ॥ १३ ॥

युक्त्यन्तरमाह—

**ॐ स्थानादिव्यपदेशाच्च ॐ** ॥ १ । २ । १४ ॥

सर्पिर्वोदकं वा सिञ्चति वर्त्मन्येव गच्छतीत्यादि । अत्राक्षिपुरुष-संबन्धादक्ष्णोरसङ्गत्वाख्यशक्तिर्व्यपदिश्यते । एवं संयद्वाम इत्याचक्षते । एवं हि सर्वाणि वामान्यभिसंयन्ति । एष उ एव वामनिरेष हि सर्वाणि वामानि नयति । एष उ एव भामनिरेष हि सर्वेषु लोकेषु भातीति । चक्षुरन्तःस्थस्य संयद्वामत्वादिस्वरूपशक्तिश्चोच्यते । यतोऽयं पुरुषोऽक्षिणि विद्यते तस्मादस्मिंश्चक्षुषि सर्पिर्वोदकं वा कश्चित्सिञ्चति तद्वर्त्मनी एव गच्छति न चक्षुः संस्पृशतीत्यर्थः ॥ १४ ॥

प्रकरणादयं चक्षुरन्तःस्थो विष्णुरित्याह—

**ॐ सुखविशिष्टाभिधानादेव च ॐ** ॥ १ । २ । १५ ॥

प्राणो ब्रह्म कं ब्रह्मेति । विज्ञानमानन्दं ब्रह्म । आनन्दो ब्रह्मेति व्यजानादिति । अत्रोपक्रमे प्राणो ब्रह्मेति मुख्यप्राणस्याखिलजीवेभ्यः पूर्णत्व-मुक्त्वा कं ब्रह्म खं ब्रह्मेति सुखसंविदोरपि पूर्णत्वमुच्यते । अत उप-क्रमे पूर्णसुख[illegible]दिदं कम् वैष्णवमदन्यस्यापेक्षिकपूर्णत्वेन निरव-धिकपूर्णसुख[illegible]वात् । श्रैष्ठ्यं विशिष्टत्वम् । सुखेन विशिष्टमिति सुखश्रैष्ठ्यं विनाऽसंभवेन सुखस्य श्रैष्ठ्यासिद्धिः ॥ १५ ॥

नन्वस्मद्विधेत्यग्नेरुक्तेरग्नीनामेवेदं प्रकरणमित्यत आह—

**ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ** ॥ १ । २ । १६ ॥

अथ यदु स चैवास्मिन् शव्यं कर्म कुर्वन्ति यदु च नार्चिषमेवाभिसंविशन्ति । अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङे(ङ्ङे)ति मासान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः । स एतान्ब्रह्म गमयतीति श्रुतौ तद्विधानां ब्रह्मण्यभिधानात् । तुभ्यं ब्रह्मधियाऽस्माभिरुक्ता तद्विदां गतिर्नोक्ता तां त्वाचार्यो वक्ष्यतीत्यग्निभिरुपदिष्टे प्रोषित आचार्यः कालेनाऽऽगतः । उपकोशलमुवाच ब्रह्मविद इव ते मुखं प्रसन्नं भाति को नु त्वामनुशशासेति । उपकोशलो ह्रीणो भीतश्च । को नु माऽनुशिष्याद् भगवन् प्रोषिते त्वयीति निर्बध्यमानो यथावदग्नीनामनुशासनमवोचत् । तच्छ्रुत्वाऽऽचार्यः प्रत्युवाच । सौम्य किल तुभ्यमग्नयो न ब्रह्म साकल्येनावोचन् , तदहं तुभ्यं साकल्येन वक्ष्यामि । यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इत्युक्तवत्याचार्ये आहोपकोशलो ब्रवीतु मे भगवन्निति । तस्मै होवाचाऽऽचार्योऽर्चिरादिकां गतिं वक्तुमनाः—यदुक्तमग्निभिः प्राणो ब्रह्म कं ब्रह्मेति तत्परिपूरणं य एषोऽक्षिणि पुरुषो दृश्यत इत्यादि । एवं ब्रह्माक्षिस्थानसंपद्वामादिगुणविशिष्टमुपासतेऽपहतपाप्मानस्तेऽर्चिषमार्चैरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते । अर्चिषोऽहः । अहर्देवतां प्रतिपद्यन्ते । अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतां ततः षण्मासांस्तदभिमानिनीं देवतां ततः संवत्सरदेवतां तत आदित्यं ततश्चन्द्रमसं विद्युतं तत्र स्थितांस्तान् मानवो हिरण्यगर्भो वा भिन्नः कपदवाच्यो ब्रह्मलोकादवतीर्यैतान्ब्रह्म विष्णुं गमयति, इमं मानवमावर्तं नावर्तन्ते, मनोः सृष्टिभूतमावर्तं जन्माद्यावृत्तिकर्तारं मानवं नावर्तन्ते । श्रुतपदं मननिदिध्यासनोपलक्षकम् । गतिरिति ब्रह्मगतिः । कं ब्रह्मेति प्रकृतत्वात् । केन वायुना गतिरिति वा । अथवा श्रुतोपनिषदुपकोशलं प्रत्येतद्विद्याफलत्वेन गत्यभिधानादिति । नन्वस्तु ब्रह्मगतिस्तथाऽप्यग्निविषयत्वं न कुत इति चेन्न । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपीत्यादेरन्यविद्ययाऽप्यप्राप्तेरयोगात् ॥ १६ ॥

एवं विष्णोरक्षिस्थत्वमुपपाद्य विपक्षे बाधकमुक्त्वा समर्थयति—

**ॐ अनवस्थितेरसंभवाच्च नेतरः ॐ ॥ १ । २ । १७ ॥**

जीवस्य जीवनियामकत्वेनावस्थितेः । न चाग्नेः स्वातन्त्र्यम् । विनिगमकाभावेनान्येषामपि तत्त्वापत्तेः । अतो विष्णुरेवाक्ष्यादित्यस्थोऽतः स

एवाऽऽनन्दमयस्तज्ज्ञानादेव मोक्ष इति सिद्धम् । अन्यमतेऽन्तरित्यनेनेदं गतार्थम् । तत्राऽऽदित्यस्थत्ववदक्षिस्थत्वस्योक्तेः । न च तत्रोर्ध्वाथोपासनस्थत्वमक्षिवाक्यं विषयोऽत्रोपकोशलविद्यास्थमक्षिवाक्यमित्येतावतैवागनार्थत्वम् । शास्त्रस्यापर्यवसानापत्तेः । यत्तु भामत्यां तत्राक्षिस्थो जीवविशेष इति पूर्वपक्षोऽत्र तु छायेति जीवस्य परोक्षत्वाद् दृश्यत इत्ययुक्तं छायायां युक्तमित्यधिका शङ्केति । तन्न । दृश्यत्वानुपपत्त्या जीवपक्षत्यागे छायायां विषयवाक्यस्थपुरुषत्वामृतत्वादेः पूर्ववाक्योक्तस्य तज्ज्ञाने पापालेपस्य चोत्तरवाक्योक्तस्य संपद्वामत्वादेश्चानुपपत्त्या छायापक्षस्यावश्यं त्याज्यत्वात् । सिद्धान्तोऽप्ययुक्तः । कार्यब्रह्मणोऽमृतपूर्णसुखरूपत्वासंभवात् । अकार्यब्रह्मपक्षे श्रुतिसूत्रयोरर्चिरित्युक्तिरयुक्ता स्यात् । त्वन्मतेऽस्य कार्यब्रह्ममार्गत्वात् । यच्च महतोऽल्पचक्षुरधिष्ठानं नेति शङ्कानिरासावस्थानादिति । तन्न । अर्भक इत्यादिना निराकृतत्वात् । यच्च सुखविशिष्टत्वं सुखसंबद्धत्वमिति । तन्न । सुखसंबन्धस्य जीवेऽपि सत्त्वात् । त्वन्मते ब्रह्मणः सुखमात्रत्वेन तत्संबन्धाभावाच्च । यच्च श्रुतेत्यस्य ब्रह्मविदः श्रुत्यन्तरे प्रसिद्धाऽर्चिरादिगतिरित्यर्थ इति । तन्न । त्वन्मतेऽर्चिरादेरुपासनागतित्वेन ब्रह्मगतित्वाभावात् । यत्तु जीवस्य कृत्स्नेन्द्रियादिसंबन्धिनश्चक्षुष्यवस्थित्यभावाच्छायादावमृतत्वाद्यभावाच्च नेतर इति । तन्न । अनवस्थितिशब्दार्थत्यागात् । उपासनार्थमारोपितामृतत्वादेर्जीवादावपि संभवाच्च ॥ १७ ॥

**ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ १ । २ । १८ ॥**

अत्र पृथिव्यादिशरीरत्वादिलिङ्गसाहित्येनान्यत्र प्रसिद्धान्तर्यामित्वलिङ्गस्य विष्णौ समर्थनादस्ति संगतिः । एतदमृतमभयमित्यक्षिस्थस्यामृतत्वमुक्तं तत्काण्वमाध्यंदिनश्रुत्योः । यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इति कस्यचिदन्तर्यामिणः श्रूयते । तदन्तर्यामित्वमन्यस्य तर्हि विष्णोरक्षिस्थत्वसाधकं न स्यात् । यदि विष्णोस्तर्हि स्यादित्यवश्यं निर्णेयम् । अन्तर्यामी प्रकृत्यादिरुत विष्णुरिति संशयः । तत्रान्तर्यामी प्रकृतिः ।

यस्य पृथिवी शरीरमित्यादिश्रुतेः । तस्य चेदं पूर्वपक्ष शरीरमित्यादाविव स्वरूपपरत्वात् । प्रकृतेश्च पृथिव्यादिसर्वात्मकत्वात् । न च यः पृथिव्यां तिष्ठन्नित्यनुपपत्तिः ; व्याप्तं कारणं कार्येष्वित्यादिना कारणस्य कार्यस्थत्वोक्तेरिति प्राप्ते । अन्तर्यामी विष्णुरेव । यस्य पृथिव्याद्यविदितत्वतदन्तरत्वामृतत्वादिधर्मव्यपदेशात् । न च पृथिव्यादिजीवाविदितत्वं प्रकृतेरस्ति ॥ १८ ॥

निरवकाशलिङ्गेन विष्णोरन्तर्यामित्वं समर्थ्य प्रकृतेस्तन्निराकरोति—

ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ।। १ । २ । १९ ॥

कापिलादिस्मृतौ पृथिव्याद्यात्मकतयोक्तं प्रधानं नान्तर्याम्यविदितत्वाद्यन्यथासिद्धविष्णुधर्मवत् । त्रिगुणोपादानत्वादिप्रधानधर्मानुक्तेः ॥ १९ ॥

नन्वस्तु जीवविशेषो विरिञ्चादिरेवान्तर्यामी । तस्य पृथिव्याद्यविदितत्वादिधर्मोपपत्तेरित्यत आह—

ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥१।२।२०॥

य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः । यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद विज्ञानं यस्य शरीरमित्यात्मनोऽन्तर इति माध्यंदिना विज्ञानादिति काण्वाश्च जीवमन्तर्यामिणः सकाशाद्भेदेनाधीयते । चेतनत्वानुकर्षोऽपि न ज्ञाज्ञौ द्वावजावीशानीशौ पृथगात्मानं प्रेरितारं च मत्वा, जुष्टस्ततस्तेनामृतत्वमेतीत्यादिश्रुतयः । ' अन्यश्च परमो राजंस्तथाऽन्यः पञ्चविंशकः ' इत्यादिस्मृतयः समुच्चीयन्ते । यत्तूक्तं भामत्यां जीवमात्रमेवान्तर्यामीत्येव पूर्वपक्षो न तु प्रकृतिः । तस्यां द्रष्टृत्वाद्यसंभवादिति । तत्र त्वन्मते तदैक्षतेतिश्रुते(त्ये)क्षणस्य प्रकृतौ गौणत्वेनेक्षत्यधिकरणपूर्वपक्षवद् द्रष्टृत्वादेर्दर्शनरूपे ब्रह्मण्यसत्त्वेन मायाविशिष्ट आरोपितदर्शनवत् प्रधानेऽप्यारोपितद्रष्टृत्वाद्यादाय पूर्वपक्षोपपत्तेः । अन्यथा स्मार्तसूत्रे प्रधानस्य निषेधो न स्यात् । यत्तु भामत्यां सर्वजीवाभिमानिनश्चतुर्मुखस्य प्रकृत्यभिमानिनश्चान्येषां चाभिमानिनामन्तर्यामित्वमुक्तम् । सर्वांल्लोकानन्तरो यमयतीतिश्रुतेः सर्वनियन्तृत्वस्याभिमानिष्वसंभवादिति । तत्र त्वन्मते जीवमात्रपक्षेऽपि तदसंभवात् । एकवचनस्य समुदायपरत्वस्य प्रकृते समत्वात् ।

यत्तु शरीरादिराहित्याद्ब्रह्मणो न नियन्तृत्वं घटवदिति प्राप्ते । तद्राहित्यासिद्धे-श्चैत्रकर्मनिर्मितस्य चैत्रशरीरवद् ब्रह्मविषयकाविद्याकल्पितस्य जगतस्तच्छरी-रकत्वादिति सिद्धान्त इति । तन्न । अन्यकल्पितस्य तच्छरीरत्वायोगात् । नहि मैत्रेणाऽऽरोपितमकञ्चुकवति चैत्रे कञ्चुकं चैत्रदृष्टमस्ति तमुपकरोति वा । जगत्सर्जनात्प्रागशरीरस्यैव स्रष्टृत्ववन्नियन्तृत्वस्याप्युपपत्तेश्च । यच्च देहादि-नियन्तुर्जीवस्य भिन्ननियम्यत्वे तन्नियन्तुरीशस्य भिन्ननियन्तृनियम्यत्वेऽन-वस्थापत्त्या नियन्तृब्रह्मजीवाभिन्न इति । तत्र ' ईश्वरः सर्वभूतानां हृद्दे-शेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । मत्तः परतरं नास्ति । मयि सर्वमिदं प्रोतम् ' इत्याद्यनुसारेणेशनियन्तुरलीकत्वेनान-वस्थाभावात् । अभेदे नियन्तृत्वायोगाच्च । अनवस्थापरिहाराय शरी-रजीवयोरैक्यस्वीकारापाताच्च । यदुक्तं विवरणे---यद्यप्यवच्छेदपक्षे निय-न्तृत्वं न युक्तं घटावच्छिन्नाकाशप्रदेशे बाह्याकाशादर्शनेन जीवे ब्रह्मणोऽवस्थानायोगात्तथाऽपि जलगतस्वाभाविकाकाशे सत्येव प्रतिबि-म्बाकाशदर्शनेन द्विगुणीकृत्य वृत्त्युपपत्तेरिति । तत्र जले बहिराकाशस्य प्रतिबिम्बसंभवेऽपि निर्विभागब्रह्मणः प्रतिबिम्बायोगात् । न हि जल-स्थाकाशस्यैव जले प्रतिबिम्बनम् । किंच बौद्धोऽपि ब्रह्मसूत्रव्याख्याता कुतो न स्यात् । असदेवेदमग्र आसीत्, असद्ब्रह्म वेद चेदसन्नेवेतिश्रु-त्याद्यनुसारेण परमार्थतः शून्यमेव तत्त्वम् ॥ २० ॥

**ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ १ । २ । २१ ॥**

श्रुतिसूत्राद्युक्तजीवेशप्रसिद्धादृश्यत्वादिलिङ्गानां विष्णौ समन्वयसमर्थनादस्ति संगतिः । आथर्वणिके श्रुतं—परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्य-मग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसू-क्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथाऽसतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वमिति । अत्राक्षरत्वादिगुणकमक्षरं प्रकृत्यादि-रुत विष्णुरिति संदेहः । प्रकृतिरेवादृश्यत्वादिगुणकेऽक्षरेऽक्षरात्संभ-वतीह विश्वमिति विश्वोपादानत्वोक्तेः । न च कारणमात्रपरं तत् । यथे-त्यादीनां पृथिव्यादिदृष्टान्तासंगत्यापत्तेः । चित्प्रकृतेर्वाऽदृश्यत्वादिकं तन्ना-क्षरशब्दस्य । ' कूटस्थोऽक्षर उच्यते ' इति प्रसिद्धेः । चतुर्मुखो वाऽ-

दृश्यत्वगुणः । स ब्रह्मविद्यामिति ब्रह्मपदप्रयोगात्, 'ब्रह्मा देवानां प्रथम इति शब्दाच्च । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मपदेनासंदृष्टस्य स ब्रह्मविद्यामिति ब्रह्मशब्दस्यान्यपरत्वायोगाद्रुद्रो वाऽस्तु कर्तारमितीशशब्दादिति प्राप्ते । विष्णुरेवाक्षरशब्दवाच्यस्तस्यैव पर-विद्याविषयत्वात् । वैष्णवे 'द्वे विद्ये वेदितव्ये वै' इति चाऽऽथर्वणी श्रुतिः । 'परया त्वक्षरप्राप्तिर्ऋग्वेदादिमया परा' । अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् । विभुं सर्वगतं नित्यं भूतयोनिमकारणम् । व्याप्यव्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः । तद्ब्रह्म परमं धाम ध्येयं मोक्षस्य काङ्क्षिणा । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदमिति । विष्णो-रेव परविद्यागम्यत्वादिधर्मोक्तेः । सत्त्वादयो न सन्तीश इत्याद्यनुसारात् प्राकृतप्राण्यादिराहित्योक्तेरदृश्यत्वं तु साकल्यादिना न पश्यन्तीत्युक्ते-र्ज्ञानप्रसादादि जनयित्वा हरिं साक्षात्करोति यया सा परा विद्या । सैव यदाऽन्यविषयकयोजनयाऽन्यज्ञानानि जनयति तदाऽपरेति । परविद्या-विषयत्वं हरेरेव ॥ २१ ॥

यदुक्तं प्रकृतिविरिञ्चयोरदृश्यगुणकत्वमिति तन्निराकरोति—

**ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ १ । २ । २२ ॥**

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति विशेषणान्न प्रकृतिः । एत-स्माद्ब्रह्म नामरूपमन्नं च जायत इति तस्मादक्षराद्ब्रह्म विरिञ्चो जायत इति भेदव्यपदेशात् । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीत-शोक इति प्रसिद्धेशाद्रुद्रादन्यमीशमिति भेदव्यपदेशान्न रुद्रोऽदृश्यत्वगुणकः । नन्वक्षरात् परतः परमिति चेन्न । अक्षरत्रैविध्यात् । 'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका । श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया । तामक्षरं परं प्राहुः परतः परमक्षरम् । हरिमेवाखिलगुणमक्षरमिति स्का-न्दोक्तेः प्रधानं तदभिमानिनी श्रीर्हरिश्च त्रितयमक्षरपदवाच्यमित्यर्थः ॥ २२ ॥

युक्त्यन्तरमाह—

**ॐ रूपोपन्यासाच्च ॐ ॥ १ । २ । २३ ॥**

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । 'एको नारायण आसीन्न ब्रह्मा न च शंकरः, इति दृष्टा जीवो यदा रुक्मवर्णं

हिरण्यगर्भकारणं पश्यति तदाऽसौ विद्वानिष्टं पुण्यं पापं च विधूय ताभ्यां निर्लेपः पूर्णानन्दत्वादिसाम्यं प्राप्नोतीत्यर्थः । अदृश्यगुणकस्य रूपोपन्यासादित्यर्थः । यत्तु परःशब्द ऋगादिविशेषोपनिषत्परस्तत्समभिधानाच्चापरशब्दो गोबलीवर्दन्यायेनोपनिषदितर ऋगादिपर इति । तन्न । ' सर्वे वेदा यत्पदमामनन्ति ' ' वेदैश्च सर्वैरहमेव वेद्यः ' इति विरोधात् । यत्त्वचेतनं विश्वमचेतनप्रधानस्य विकारो न तु चेतनस्य वैरूप्यादिति प्राप्ते । विश्वं न ब्रह्मविकारः किंतु विवर्तः । रज्ज्वाः सर्प इवाधिष्ठानाध्यस्तयोश्च वैरूप्यादतोऽधिष्ठानमक्षरमिति सिद्धान्त इति । तन्न । श्रुतावूर्णनाभिदृष्टान्तासंगतेः । यद्भूतयोनिमिति योनिपदप्रयोगान्निर्विशेषे सूत्रे धर्मोक्तेरित्ययोगाच्च । यच्च द्वितीयसूत्रे दिव्यो ह्यमूर्त इति दिव्यत्वादिविशेषणं जीवाद्भेदकमिति । तन्न । निर्विशेषे दिव्यत्वादेरभावात् । त्वन्मते भेदस्यैतद्वक्तव्यत्वाच्च । तृतीये पुरुष एवेदं विश्वमिति सार्वात्म्यं रूपशब्दार्थ इति । तदपि न । रूपशब्दायोगात् । अत्रान्यमतेऽदृश्यत्वादिगुणक इति गुणोक्तेर्विशेषणोक्तिर्जीवेभ्यो भेदोक्तेर्निर्गुणत्वाद्द्वैतप्रतिकूलता स्फुटैवेति ॥ २३ ॥

**ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ १ । २ । २४ ॥**

अत्र लोकतोऽन्यत्र प्रसिद्धवैश्वानरनाम्नः पाचकत्वाद्यनेकलिङ्गसमन्वयसिद्धये ब्रह्मणि समन्वयप्रतिपादनादस्ति संगतिः । अत्र वैश्वानरोऽग्निर्विष्णुर्वेति चिन्ता । तत्राऽऽत्मानं वैश्वानरमुपास्ते । अयमग्निर्वैश्वानर इत्यादौ वैश्वानरोऽग्निर्देवता वा भूतं वा । वैश्वानरश्रुतेस्तत्र प्रसिद्धेरिति प्राप्ते । अग्निविष्णुसाधारणस्य वैश्वानरशब्दस्य ब्रह्मपरात्मशब्देन विशेषणाद्वैश्वानरो हरिरेव । आत्मानं वैश्वानरमित्यात्मशब्दाद्विष्णुरेव वैश्वानरः । तमेवैकमात्मानं जानथेत्यात्मशब्दस्य विष्णौ मुख्यत्वात् ॥ २४ ॥

ननु वैश्वानरश्रुत्यनुरोधादात्मशब्दोऽमुख्य इत्यत आह—

**ॐ स्मर्यमाणमनुमानं स्यात् ॐ ॥ १ । २ । २५ ॥**

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित इति स्मृत्युक्तं विष्णोर्वैश्वानरत्वमत्रापि वैश्वानरविद्यायां विष्णुरेवोच्यत इत्यनुमापकं भवति ॥ २५ ॥

उक्तमाक्षिप्य समादधाति—

**ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषविधमपि चैनमधीयते ॐ ॥ १ । २ । २६ ॥**

ननु स्मृत्युक्तवैश्वानरसमाख्यानादात्मपदविशेषणाच्च वैश्वानरो विष्णुरित्युक्तम् । बृहदारण्यकेऽग्निर्वैश्वानर इति वैश्वानरेऽग्निशब्दाद्योऽयमन्तःपुरुषो येनेदमन्नं पच्यत इति वैश्वानरस्य जाठराग्निरूपेणान्तःप्रतिष्ठानात् । यच्चोक्तं हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय इत्यग्निलिङ्गानामप्यादिपदगृहीतानां वैश्वानरे सत्त्वान्न विष्णुरेवेति निश्चय इति चेन्न । उभयत्र श्रुत्यादिसाम्येऽपि लिङ्गादेर्विष्णौ सावकाशत्वात् । हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति गार्हपत्यादिनामलिङ्गकर्मत्वेन हरेरुपासनोपदेशात् । 'ब्रह्माग्नौ ब्रह्मणा हुतम्'। 'अहमग्निरहं हुतम्।' अहं संवर्तको वह्निरित्याद्यनुरोधाच्च । तत्तत्पदप्रवृत्तिनिमित्तानां मुख्यतया ब्रह्मणि सत्त्वेन तस्यैवाग्निवैश्वानरादिपदवाच्यत्वोपदेशाच्च । सर्वव्यापननिमित्तकात्मपदस्यासंकुचितस्य जीवेऽसंभवात् । स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति वाजसनेयिनः । पुरुषविधमप्येनमधीयते । सहस्रशीर्षा पुरुष इत्यादिपुरुषसूक्ते विष्णोरेव पुरुषत्वम् । न चाग्निसूक्तेऽन्य एव पुरुष इति । आग्नेयादिसूक्तोपासकैरग्न्यादिगतत्वेनानुस्मर्तव्यो हरिरित्युपयोगिव्यवस्थापकोक्तेः । उक्तं हि—'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमिति देवतान्तरोपासनस्य तद्गतहरिचिन्तनशून्यस्याविधित्वम् । तथा चाग्नेयादियागेष्वग्न्यादिगतस्यैव विष्णोरुद्देश्यत्वात् ॥ २६ ॥

वैश्वानरशब्दस्य देवताभूतयोः प्रसिद्धत्वादन्यत्राप्यसौ तत्परः स्यादिति शङ्कां निरस्यति——

**ॐ अत एव न देवता भूतं च ॐ ॥ १ । २ । २७ ॥**

अग्निवैश्वानरादिशब्दस्तेजसि भूतेऽग्निदेवतायां च प्रसिद्धोऽप्यत एवाऽऽत्मशब्दादिहेतोरेवान्यत्र निरवकाशाद्देवता भूतं चानेन नाभिधीयते ॥ २७ ॥

नन्वग्न्यादिशब्दानामग्न्याद्यवाचकत्वे प्रसिद्धिविरोध इति शङ्कां निरस्यति—

ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ १ । २ । २८ ॥

यद्यप्यग्न्यादिशब्दा नाग्न्यादिवाचकास्तथाऽपि न विरोधः । अनन्ययोगेन ब्रह्मवाचकैरपि ज्ञानिनोऽग्न्यादिज्ञानादिसिद्ध्यर्थमन्यत्राग्न्यादौ व्यवहरन्ति । तदन्ये तु ज्ञानाभावादेवेत्यभ्युपगमात् प्रसिद्धेरन्यथोपपत्त्याऽविरोधं जैमिनिर्मन्यत इत्यर्थः ॥ २८ ॥

ननु लौकिकप्रसिद्धेरज्ञानादिमूलत्वेऽन्यथोपपत्तावपि वैदिकाग्न्यादिसूक्तादिप्रसिद्ध्यन्यथोपपत्त्याऽग्न्यादीनां नावाच्यत्वं स्यात् । तत्राज्ञानादिमूलकत्वकल्पनायोगेनान्यथोपपत्त्यभावात्, नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादित्याशङ्कां परिहरति—

ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ १ । २ । २९ ॥

तत्र तत्र सूक्तादौ ब्रह्मण एव प्रतिपाद्यत्वेनाग्न्यादीनामप्रतिपाद्यत्वेऽप्यग्न्यादिसूक्तादिना ब्रह्मोपास्तावग्न्यादिष्वेव स्वेच्छया ब्रह्मणो व्यक्तेरित्याश्मरथ्याचार्यो वक्तीत्यर्थः ॥ २९ ॥

प्रकारान्तरेण सूक्तादिनियममुपपादयति—

ॐ अनुस्मृतेर्बादरिः ॐ ॥ १ । २ । ३० ॥

विष्णोरेवाग्न्यादिविद्याप्रतिपाद्यत्वेऽपि तस्य तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव प्रतिपत्तव्यत्वाभिप्रायेणाग्न्यादिनियमोपपत्तेरिति बादरिराचार्यो वक्तीत्यर्थः ॥३०॥

रीत्यन्तरे सूक्तादिनियममुपपादयति—

ॐ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥ १ । २ । ३१ ॥

आग्नादिसूक्तादिषु ब्रह्मण एव प्रतिपाद्यत्वेऽप्यग्न्यादिसूक्तादिभिरग्न्यादौ ब्रह्मोपास्तावग्न्यादिप्राप्त्यभिप्रायेण सूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्याऽन्यवाचित्वमिति जैमिनिर्मन्यत इत्यर्थः । तं यथा यथोपासते तदेव स भवतीति दर्शयति ।

ननु पुनर्जैमिनिरिति किमर्थमिति चेल्लौकिकव्यवहारे साक्षाद्ब्रह्मवाचकत्वेऽपि शब्दानामविरोधं वदन् सूक्तादिव्यवहारस्याग्न्यादिप्राप्त्यन्यथोपपत्तिं वर्णयतीत्यर्थः ।

ननु किमत्र मानमिति चेत्—ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति स्मृतिः । यद्देवतादिगतत्वेनोपासते तद्देवतादिप्राप्तिं भजामीत्यर्थः ॥३१॥

ननु ब्रह्मोपासकस्याग्निप्राप्तिर्न युक्ता । मद्भक्ता यान्ति मामपीतिविरोधात् । श्रुतोपनिषत्केत्यत्र निरासाच्चेति शङ्कां परिहरति—

ॐ आमनन्ति चैनमस्मिन् ॐ ॥ १ । २ । ३२ ॥

योऽग्नौ तिष्ठन् स एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष इत्येनं विभुमामनन्ति । अग्न्यादिसूक्तादिना विष्णूपासकस्याग्न्यादिपदप्रवृत्तिनिमित्तधर्मविशिष्टस्यापारोक्ष्यं प्राप्तिश्च भवतीत्यर्थात् । अथवोक्तोपासकानां लोकस्थानीयेऽग्नौ भगवतः प्राप्तिर्भवतीत्यर्थाद्विष्णुर्वैश्वानरः ॥ ३२ ॥

इति श्रीवनमालिविरचितायां सारसंग्रहे ब्रह्मसूत्रे वेदान्तसिद्धान्तमुक्तावल्यां प्रथमाध्यायस्य द्वितीयः पादः ।

---

## अथ तृतीयः पादः ।

ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १ । ३ । १ ॥

अत्र मा भूदन्यैकगतता ब्रह्मैकगतताऽपि वा, किंतूभयगतता तु स्यादितिशङ्का निरस्यते । तत्र रुद्रो वाव लोकाधारो वायुना वै गौतम सूत्रेणायं लोकः परश्च लोकः सर्वाणि भूतानि संरब्धानि भवन्ति । आकाश एव तत्रोतं प्रोतं च । सर्वे वाव एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्च विष्णावेवोताश्च प्रोताश्चेत्युभयत्र द्युभ्वाद्यायतनत्वलिङ्गस्य विष्णौ समन्वयसमर्थनादस्ति संगतिः । अदृश्यत्वादिगुणकाक्षरस्य विष्णोः परविद्याविषयत्वमुक्तम् । तत्परविद्याविषयत्वमाथर्वणे यस्मिन् द्यौरित्युक्तस्य द्युभ्वाद्यायतनस्योच्यते । तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुरिति । स च यद्यन्यः स्यात्तदा परविद्याविषयत्वं विष्णोर्न स्यादित्यवश्यं निर्णेयम् । अत्र यस्मिन्द्यौरिति द्युभ्वाद्यायतनत्वं रुद्रादेर्विष्णोर्वेति संदेहः । तत्र रुद्रः प्रधानं वायुर्जीवो वा । रुद्रो लोकाधारः प्राणानां ग्रन्थिरासि रुद्रः । आकाश एव तवोतम् । वायुना

वै गौतम सूत्रेणेति श्रुत्या, य एषोऽन्तश्चरते जायमान इति जायमानत्व-रूपलिङ्गाच्च । एषामन्यतमः स न विष्णुः । न च लोकाश्चेत्यादि विष्णा-वप्यस्ति लिङ्गम् । रुद्रसमाख्यानां प्राणानां ग्रन्थिरासि रुद्रः प्राणेश्वरः कृत्ति-वासाः । पिनाकी रुद्रो वाव लोकाधार इति रुद्रश्रुतिलिङ्गादीनां च बहुत्वाज्जायमानत्वादिकं विष्णौ कथमपि न संगच्छत इति प्राप्ते । हरिरेवोक्तायतनः । स्वशब्दात् । गौणश्चेन्नाऽऽत्मशब्दादित्यत्राऽऽत्मशब्दस्य भग-वति मुख्यत्वस्य व्यवस्थापनात् । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति श्रीगीतायाम् । यत्रोतमेतत्प्रोतं च विश्वमक्षरसंज्ञके । आधारभूतः सर्वस्य स प्रसीदतु मे हरिः । ॐ नमो विष्णवे तस्मै नमस्तस्मै पुनः पुनः । यत्र सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः । इति सृष्टौ प्रलये च यत्र सर्वं तिष्ठति यः सर्वमित्यनेन सर्वसत्ताया एतदधीनत्वमुक्तम् । सर्वत इत्यनेन सर्वव्यापकत्वमिति वैष्णवे च द्युभ्वाद्यायतनत्वं हरेः स्पष्टम् । यस्मिन्नित्ये तते नन्ते दृढे स्रगिव तिष्ठति । सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि । यस्मिन्भूतानि विश्वानि तिष्ठन्ति च विशन्ति च । गुण-भूतानि भूतेशे सूत्रे मणिगणा इव । बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् । चतुर्वि-धानां भूतानां त्रिषु लोकेषु माधवः । प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर । इति महाभारतेऽप्युक्तम् । अजायमानो बहुधा व्यजायतेति जडजीवविलक्षणाविर्भावरूपोत्पत्तिरविरुद्धैव । तदाऽऽत्मानं सृजाम्यहम् । संभवाम्यात्ममाययेति भगवदुक्तेः ॥ १ ॥

युक्त्यन्तरमाह—

**ॐ मुक्तोपसृप्यव्यपदेशात् ॐ** ॥ १ । ३ । २ ॥

अमृतस्यैष सेतुः । ब्रह्मविदाप्नोति परम् । एतमानन्दमयमात्मानमुपसं-क्रामतीति । बहवो ज्ञानतपसा पूता मद्भावमागताः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् । ततस्त्रैगुण्यहीनास्ते परमात्मानम-ञ्जसा । समाहितमनस्काश्च नियताः संयतेन्द्रियाः । एकान्तभावोपगता वासुदेवं विशन्ति ते । इति श्रुतीतिहासादौ विष्णुप्राप्तेरेव मोक्ष-त्वोक्तेः ॥ २ ॥

नन्वन्तकः कृत्तिवासाः पिनाकीति रुद्रलिङ्गात्सर्वाश्रयत्वप्रकृतिलिङ्गाच्च दृष्टफलविधायकरुद्रवाक्यदृष्टान्तेन तत्सर्वाश्रयत्वप्रतिपादकवाक्यानुमानात् कापिलागमप्रामाण्यानुमानाच्च तयोरन्यतरः सर्वाश्रय इति शङ्कां परिहरति—

ॐ नानुमानमतच्छब्दात् ॐ ॥ १ । ३ । ३ ॥

भस्मधरोग्रादितच्छब्दाभावात् । रुद्रो बहुशिरा बभ्रुः । महोदधिशयोऽन्तकः । ईशानः प्राणदः प्राण इति विष्णुनामत्वात्, रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । ईशनादेव चेशानो महादेवो महत्त्वतः । पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात् । तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः । शिवः सुखात्मकत्वेन शर्वः शं रोधनाद्धरिः । कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयत् । कृत्तिवासास्ततो देवो विरिञ्चिश्च विरेचनात् । बृहद्गुणत्वाद्ब्रह्माऽसावैश्वर्यादिन्द्र इत्यपि । एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः । वेदेषु च पुराणेषु गीयते पुरुषोत्तमः । इति ब्रह्माण्डोक्तेः । अत एव कापिलागमप्रामाण्यानुमानमपि बाधितम् । अथवा तच्छब्दात्मकेत्यादिभिन्नब्रह्मवाचकात्मशब्दात्सर्वाश्रयत्वेन प्रकृतिबोधकं यत्कापिलं शास्त्रं तत्प्रामाण्यग्राहकमनुमानं रुद्राद्यनुमानं चाज्ञानमित्यर्थात् ॥ ३ ॥

ननु जीववायू स्यातामित्यत आह—

ॐ प्राणभृच्च ॐ ॥ १ । ३ । ४ ॥

चशब्दादात्मपदमुक्तप्राप्यत्वादिहेतुर्नत्रा(द्य)नुकर्षणात् ॥४॥

जीवेशाभेदाभिप्रायेण जीवेऽप्युक्तहेतवः सन्त्विति शङ्कां परिहरति—

ॐ भेदव्यपदेशात् ॐ ॥ १ । ३ । ५ ॥

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति भेदव्यपदेशात् ॥ ५ ॥

ततस्तु कस्माच्चिदीशाद्भेद इत्यत आह—

ॐ प्रकरणात् ॐ ॥ १ । ३ । ६ ॥

द्वे विद्ये वेदितव्ये इति परमात्मप्रकरणात् ॥ ६ ॥

हेत्वन्तरमाह—

ॐ स्थित्यदनाभ्यां च ॐ ॥ १ । ३ । ७ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । संयुक्तौ सखायौ द्वौ सुप-

र्णरूपौ जीवेशौ देहं पिप्पलमालि[लि]ङ्गतुः । तयोर्मध्येऽन्यो जीवो देहजानितकर्मफलं स्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरस्तदनश्नन्नभितः प्रकाशते न तु स्वस्थित्यै तदपेक्षत इत्यर्थः ।

ननु सत्त्वक्षेत्रज्ञपरतयाऽयं मन्त्रः सत्त्वक्षेत्रज्ञाविति पैङ्गिरहस्यब्राह्मणेन व्याख्यात इति चेत् । ऊनं न सत्त्वेष्वधिको बबाध इति रघुवंशे । सत्त्वमस्त्री तु जन्तुष्वित्यनुशासनात्सत्त्वशब्दो जीवपरः । क्षेत्रज्ञशब्दस्य च—प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् । क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंयुतमिति मोक्षधर्मे ब्रह्मपरत्वस्योक्तत्वात् । अन्यथा द्वा सुपर्णेत्युत्तरं समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान इत्यादिकमु(मयु)क्तं स्यात् । न हि बुद्धौ पुरुषशब्दो मुह्यमानत्वं वीतशोकत्वादिकं युक्तम् । अतो विष्णुरेव द्युभ्वाद्यायतनः परविद्याविषयश्चेति सिद्धम् ॥ ७ ॥

ॐ भूमा संप्रसादादध्युपदेशात् ॐ ॥ १ । ३ । ८ ॥

अत्र प्राणो वा आशाया भूयानित्युपक्रमेण विष्णुर्देवेभ्यो भूयांस्तस्माद्भूयान्नामेति श्रुत्या च वायुविष्णुसाधारणभूमनाम्नो विष्णौ समन्वयसमर्थनादस्ति संगतिः । आनन्दमयाधिकरणे पूर्णानन्दत्वं हरेरुक्तम् । तच्छान्दोग्ये भूम्नः श्रूयते—यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखमिति । अत्र भूमा वायुरुत विष्णुरिति संदेहः । तत्र वायुरेव भूमा नाम वागादितारतम्यमाशावसानमुक्त्वा प्राणो वा आशाया भूयानिति प्राणस्याऽऽशोत्तमत्वमुक्त्वा तदुत्तमत्वमनुक्त्वा भूम्न आम्नातत्वात् । तथा ह्यस्ति भगवो नाम्नो भूय इति वाग्वाव भूयसीति । तथाऽस्ति भगवो वाचो भूय इति नारदसनत्कुमारयोः प्रश्नप्रतिवचनप्रवाहस्यास्ति प्राणादिदं भूय इति प्राणोत्तरं प्रवर्ते उत्क्रान्तप्राणानिति प्राण उत्क्रमणश्रवणात्तस्य च पूर्णे ब्रह्मण्ययोगादिति वायुरेव स एवाऽऽनन्दमय इति प्राप्ते । संप्रसादात्पूर्णसुखस्वरूपत्वादध्युपदेशात्सर्वेषामुपर्युपदेशाद्भूमा हरिरेव । भूमा त्वेवं विजिज्ञासितव्य इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति तदल्पमिति यो वै भूमा तत्सुखमिति भूम्नः पूर्णसुखरूपत्वाम्नानाद्विष्णुरेव सः । यस्मिन्दृष्टे श्रुते चानाश्रवणाद्याकाङ्क्षानिवृत्त्याभिधानाच्च । यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः । इति स्मृतेर्जडे सुखनिषेधायोगेन चेतनेऽपि सुख-

मात्रनिषेधस्य बाधेन पूर्णसुखस्यैव वाऽल्प इत्यनेन निषेधात् । सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं पदमिति श्रुतेः । विश्वस्य कृत्स्नस्यासुखस्य भुवमाश्रयं नामादीनां - सर्वेषामुपरि तदुत्तमत्वेनोपदेशाच्च । न चोपक्रमे प्राणस्य श्रवणात्कथं विष्णुरिति वाच्यम् । प्राणपदेन विष्णोरेवोक्तत्वात् । अथवैवं विजानन्नतिवादीति प्राणज्ञानिनोऽतिवादित्वमुक्त्वैष तु वाऽतिवदति यः सत्येनातिवदतीति सत्याख्यभूमज्ञानिनस्तुशब्देन विशेषोक्त्या भूम्नः प्राणादप्यतिशयस्योक्तत्वाऽस्ति भगवः प्राणाद्भूय इति भूमा वाव प्राणाद्भूयानिति प्रश्नप्रतिवचनयोरध्याहार्यत्वेनानुक्तेरन्यथाऽप्युपपत्तेः । न चोत्क्रमणाविरोधः । सर्वगतस्य जात्यादेः प्रतिव्यक्तिसमाप्तेरिव शक्तिविशेषेण गतेरुपपत्तेः । 'तमुत्क्रान्तं प्राणो न क्रामति । स्वाभाविकी ज्ञानबलक्रिया च ' ' ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परमात्मनः ' इति श्रुतेः । क्रियावत्त्वेऽणुत्वमेव तन्त्रं न तु महत्त्वाभावः । गुणजात्यादौ क्रियापातात् । न च विभुद्रव्ये .पूर्वविभागादिफलाभावेन क्रिया स्यादिति वाच्यम् । सुखदुःखेच्छासंसारादिरूपफलाभावेनेशे ज्ञानाभावापातात्पूर्वदेशसंयोगानभिव्यक्तिरुत्तरे देशे संयोगाभिव्यक्तिर्वा क्रियाभिव्यक्तिफलमस्तु । दर्शितं च भगवताऽणुत्वं महत्त्वं चैकस्मिन्नेव काले यशोदायै ॥ ८ ॥

युक्त्यन्तरमाह—

ॐ धर्मोपपत्तेश्च ॐ ॥ १ । ३ । ९ ॥

स एवाधःस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणत स उत्तरतः स एवेदं सर्वं यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । भगवन्कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति सर्वगतत्वादिधर्मोपपत्तेर्विष्णुरेव भूमा । यत्तु पञ्चवृत्तिर्वायुर्भूमेति प्राप्ते । निर्विशेषं ब्रह्मैव भूमेति सिद्धान्त इति । तन्न । पञ्चवृत्तौ तरति शोकमात्मविदित्युपक्रमस्थात्मशब्दाद्भूमैव सुखमिति सुखशब्दात्पूर्वपक्षानुत्थानाद्गुणज्येष्ठस्यैव भूमत्वेन तस्यासंभवेन सिद्धान्तोऽप्ययुक्तः । कल्पितज्यैष्ठ्यस्य भूमा त्वेवं विजिज्ञासितव्यो भूतानां भगवो विजिज्ञासा, इति मुमुक्षुजिज्ञास्यत्वानापत्तेः । यत्तु यत्र नान्यत्पश्यतीत्यादिनोक्तव्यवहाराभावरूपनिर्विशेषब्रह्मधर्माद् भूमब्रह्मैवेति द्विती-

यार्थ इति। तन्न। तत्र एवं पश्यन्नेवं मन्वान एवं विजानन्सर्वेषु लोकेषु कामचारो भवतीति दर्शनादिव्यवहारस्याप्युक्तेः। अन्यदर्शनस्य निषेधेऽप्यन्य-निषेधाभावाच्च ॥ ९ ॥

ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ १ । ३ । १० ॥

अत्राविनाशित्वसाम्याच्चिन्प्रकृतौ हरौ च साधारणस्याक्षरनाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति संगतिः। वाजसनेयके 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ। अश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टा नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। अक्षरं प्रकृतिरुत विष्णुरिति संदेहः। इदमक्षरं श्रीतत्त्वमेव विष्णोरप्यनाशित्वेनाक्षरत्वसंभवेऽपि लोकप्रयोगस्य च श्रीतत्त्वेऽप्यभावेऽपि ये त्वक्षरमनिर्देश्यमित्यादौ श्रीतत्त्वेऽक्षरशब्दवत्क्षराक्षरातीतत्वेन प्रसिद्धे विष्णौ तदभावाद्यथा तदक्षरमधिगम्यत इत्यादेरपि पूर्वपक्षे चित्प्रकृतिपरत्वात्। अत एवैतस्याद्दश्यत्वादिगुणकस्याक्षरस्यान्यत्वे पूर्वोक्तमप्यदृश्यत्वादिगुणकमक्षरमप्यन्यत्स्यादित्यदृश्यत्वाधिकरणमाक्षेपणीयम्। एवं चाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठत इति द्यावापृथिव्याश्रयत्वेन श्रुतस्याक्षरस्यान्यत्वे द्युभ्वाद्यायतनमप्यन्यत्स्यादिति तदप्याक्षेप्यम्। यद्यप्यक्षरत्रयमीरितमिति वचनादन्यत्राक्षरशब्दो ब्रह्मण्यपि प्रसिद्धस्तथाऽपीहाक्षरं न ब्रह्म। सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्येतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठत इति वाऽक्षरे श्रुतस्य चन्द्रसूर्याद्याधारत्वस्याहं सोममाहनं संबिभर्मीत्यादिना श्रीतत्त्वे द्युभ्वाद्यधिकरणन्यायेन ब्रह्मण्यपि संभवेऽपि न तदश्नाति किंचनेत्यक्षरे श्रुतस्यानत्तृत्वस्यात्राक्षरेत्यत्र सर्वात्तृत्वेनोक्ते ब्रह्मण्यसंभवात्। आह न स यज्ञेष्वभिषूयमाणम्। यज्ञेष्वभिषूयमाणलताभिमानित्वेनेयमुक्तिः। न चैतदशनानशनपरम्। किंचनेत्युक्तेः। तस्माद्—ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः। इति स्मृत्याऽऽदितः श्रीरूपाक्षरमेवात्राक्षरमिति प्राप्ते। अक्षरं ब्रह्मैव। चतुर्विधविनाशरहिते तत्रैवाक्षरपदप्रवृत्तिनिमित्तपौष्कल्यात्। अक्षरं ब्रह्म परममिति प्रयोगाच्च। किंच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवीमिमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते। आकाश

एव तत्रोतं प्रोतं चेत्याकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वैतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्चेत्यक्षरस्य तदाधारत्वश्रवणात् । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेत्यम्बरान्तधारणादक्षरं ब्रह्मैव ॥ १० ॥

युक्त्यन्तरमाह—

**ॐ सा च प्रशासनात् ॐ ॥ १ । ३ । ११ ॥**

'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यनुशासनाद्यदा सर्वाधारत्वमेवाक्षरस्य विष्णुत्वं निश्चाययति तदा सुतरामाज्ञामात्रेण सर्वाधारत्वं विष्णुत्वं निश्चाययतीत्यर्थः ॥ ११ ॥

युक्त्यन्तरमाह—

**ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १ । ३ । १२ ॥**

एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचनेति सकलवस्तुस्वभावानां स्थूलत्वादीनामक्षरे व्यावृत्तिकथनाच्च ब्रह्मैवाक्षरमित्यर्थः । न तदश्नातीत्यनेन जीवस्वभावभूतोपजीवनार्थाशनस्य निषेधः । अस्थूलत्वादिसमभिव्याहाराद्यथा दर्विहोमाः प्रकृतिविकृतिभ्यां भिन्ना यथा वायुस्पर्शः शीतोष्णस्पर्शभिन्नस्तथेशो विरुद्धाणुमहत्त्वादिप्राकृतगुणरहितः । अथवाऽस्थूलादिपदैस्तद्विरुद्धाणुत्वादिविधिरेव । न च विरोधः । 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्येति' वाक्यद्वयेन दध्नः क्रत्वर्थपुरुषार्थवदन्यत्र कामाधिकारनित्याधिकारयोरन्यतरमात्रस्य सत्त्वेऽपि जातेष्टयादौ द्वयोः संवलनवद्व्रीह्यादीनां क्रत्वर्थत्वमात्रत्वेऽपि गोदोहनादीनां पुरुषार्थमात्रत्वेऽपि दध्यादीनामुभयार्थत्ववच्चान्यत्राणुत्वमहत्त्वयोरेकैकमात्रस्य सत्त्वेऽप्यणुन्येव श्रीकृष्णस्य मुखे गर्भीकृतब्रह्माण्डे महत्त्वग्राहकस्य यशोदाप्रत्यक्षस्यैकदाम्ना बन्धलिङ्गस्यानेकदामबन्धनरूपमहत्त्वलिङ्गस्याणोरणीयान्महतो महीयानित्याद्यागमस्य च मानत्वादुभयोपपत्तेः । अणुत्वादेर्महत्त्वाद्यसामानाधिकरण्ये साध्ये च प्राकृतत्वस्योपाधित्वाद्भेदप्रतिनिधिविशेषस्य सत्त्वाच्च भूमाधिकरणे त्वत्र सिद्धमेवाणुत्वमुक्तम् । अदृष्टत्वादिकं तु साकल्येन ततोऽन्यस्य द्रष्टुर्निषेधोऽपि साकल्येनैव । यत्तु वर्णा एवाक्षरं तत्र रूढेरिति प्राप्ते । पृथिव्यादेर्भूताकाशान्तस्य

विकारजातस्य धारणान्निर्विशेषं ब्रह्मैवाक्षरमिति सिद्धान्त इति । तन्न । वर्णेष्वोतश्चेत्यादिश्रुत्युक्ताकाशाश्रयत्वस्य द्रष्टृत्वादेश्चायोगात् । सूत्रे धृतिपदं चायुक्तम् त्वन्मते भ्रमाधिष्ठानत्वातिरिक्तस्याभावात् । न हि शुक्त्यादि रजतस्य धर्तृ शास्तृ वा । न वा निर्विशेषे व्यावहारिकं शास्तृत्वम् । प्रातिभासिकं तु प्रधानेऽप्यस्ति । यत्तु प्रशास्तृत्वं चेतनधर्मश्चेतन एवाऽऽरोप्यते न त्वचेतने । राजाऽमात्य एव राजत्वमारोप्यते न तु कुड्यादाविति । तन्न । बलाकायां नैल्यारोपमङ्गीकुर्वतस्तेऽधिष्ठानाध्यस्तयोः सादृश्यनियमाभावात् । शासनकर्तृत्वादेस्तेऽन्तःकरणधर्मत्वेन जडे प्रधान एवाऽऽरोपौचित्यात् । यदन्यद्ब्रह्मणोऽक्षरपदवाच्यमिहाऽऽशङ्क्यते प्रधानादिकं तद्भावात्प्रधानादित इदमक्षरं व्यावर्तयति श्रुतिः । द्रष्टृत्वादेस्तत्राभावादिति सूत्रार्थ इति । तन्न । व्यावहारिकस्य निर्विशेषेऽभावात् प्रातिभासिकस्य प्रधानादावपि सत्त्वात् । द्रष्टृत्वादेरिवाम्बरान्तधृतिप्रशासनयोरपि वर्णादावसंभवनोऽनेन सूत्रेण विवक्षासंभवेन पूर्वसूत्रयोर्वैयर्थ्यात् ॥ १२ ॥

ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १ । ३ । १३ ॥

अत्र सदेव सोम्येत्यादिसृष्टिप्रतिपादकस्थानगतस्य सन्नाम्नो ब्रह्मप्रधानयोः कारणत्वसाम्येन साधारणस्य विष्णौ समन्वयप्रतिपादनादस्ति संगतिः । न च यस्य कारणत्वसाधारण्यात्सच्छब्दस्य साधारण्यं तस्यैव कारणत्वरूपलिङ्गस्य समन्वय उच्यतामिति वाच्यम् । प्रथमश्रुतस्य सच्छब्दस्यातिक्रमायोगादक्षरनामसमन्वयोक्त्या नाम्न एव बुद्धिस्थत्वाच्च । श्रुतिरूपप्रबलनामसमन्वयस्यार्थात्सिद्धिर्दुर्बललिङ्गसमन्वयस्य तु साक्षादुक्तिरित्यस्यान्याय्यत्वाच्च । सन्नामसमन्वयोक्तौ सर्वाः सदायतनाः सत्प्रतिष्ठाः । सता सोम्य तदा संपन्नो भवतीत्यादीनां सच्छब्दयुक्तानां बहूनां प्रकरणानां समन्वये फलाधिक्याच्च । अत्र सदेव सोम्येदमग्र आसीदिति श्रुतं किं जडप्रकृतिरुत विष्णुरिति चिन्ता । तत्र सत्प्रधानमेव । बहु स्यां प्रजायेयेति श्रुतस्य विकारस्य निर्विकारे ब्रह्मणि विरोधात् । सदा शब्द इति विकारसामान्याभावबोधनात् । प्रधानस्य ज्ञानाहेतुसत्त्वगुणयोगे नाभिमानिन ईक्षितृत्वेन वा गौणमीक्षणं तत्तेज ऐक्षत ता आप ऐक्षन्तेत्यादिवदिति प्राप्ते । 'एकमेवाद्वितीयम् । तत्तेजोऽसृजत ' ' सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, सता सोम्य तदा संपन्नो भवतीति ब्रह्मलक्ष-

णानां श्रवणाद्ब्रह्मैव सत् । मुख्येक्षणस्य तत्रैव संभवात् । तिस्रो देवता इति देवतादिपदश्रवणात्तेजआदीनां चेतनत्वात् ।- बहु स्यामिति तेजआद्यन्तर्यामितया बहुभाव एव संकल्पितोऽनः स्वरूपबहुभावः । तत्तेजोऽसृजतेति वाक्यशेषात् । न च स्वरूपबहुभावं संकल्प्य तेजःप्रभृतिसर्जनं युक्तम् । गुरुः स्यामिति संकल्प्य शिष्यसंपादनवत्तत्तन्नियामकस्वरूपबहुभावसंकल्पानन्तरं नियम्यसृष्टेरुक्तत्वात् । अत एव श्रुत्यन्तरे ' सोऽकामयत बहु स्यां प्रजायेयेति प्रक्रम्य स इदं सर्वमसृजत यदिदं किंचन तत्सृष्ट्वा तदेवानुप्राविशदिति । अत ईक्षतिक्रियाश्रवणात्सद्विष्णुः । अत्र सूत्रे समन्वये(न्वे)तव्याविशेषान्वक्ति । सदेव सोम्येत्यादिभिन्नसृष्टिप्रकरणस्थनानाशब्दा इह तुल्यवत्समन्वये(न्वे)तव्या न तु शब्दविशेष इति प्रदर्शनार्थम्। यत्तु पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायेतेत्यस्मिन्वाक्येऽभिध्यातव्यत्वेनोक्तं हिरण्यगर्भाख्यमपरब्रह्मैवेति प्राप्ते । इदं परं ब्रह्मैव परात्परं पुरिशयं पुरुषमीक्षत इत्युत्तरस्मिन्वाक्ये तस्योक्तेरिति सिद्धान्त इति । तन्न । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, यदा पश्यः पश्यते रुक्मवर्णमित्याद्यावीक्षणस्यातत्त्वविषयकत्ववत्प्रकृतेऽपि कार्यब्रह्मविषयकत्वोपपत्तेः ॥-१३ ॥

ॐ दहर उत्तरेभ्यः ॐ ॥ १ । ३ । १४ ॥

अत्र ' यो वेद निहितं गुहायां तस्यान्ते सुषिरं हृदि ह्येष आत्मा ' इति श्रुतिभिर्ब्रह्माकाशजीवेषु साधारणस्य हृदयपद्मस्थत्वलिङ्गस्य विष्णौ समन्वयसमर्थनादस्ति संगतिः । एतस्य वाऽऽक्षरस्येत्यादिना विष्णोश्चन्द्रादिसाधारत्वमुक्तं तच्छान्दोग्ये हृदयपद्मस्थस्य श्रूयते । एतस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तं चेद्ब्रूयुः । किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयाद्यावानयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः ' उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते ' ' उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ' इत्यादि । तद्धृत्पद्मस्थमाकाशादिरुत ब्रह्मेति चिन्ता । तत्र हृत्पद्मस्थ आकाश एव । तस्यान्ते सुषिरमिति प्रसिद्धाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वोक्तेः । न च हृत्पद्मस्थाकाशगतो विष्णुरेव सर्वाधार इति वाच्यम् । तस्मिन्निदयत्र विष्णु-

त्वाभिप्राये किं तदत्र विद्यत इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना यावानित्यादेरभिप्रायासंगतेः । तस्मिन्सर्वं प्रतिष्ठितमिति सुषिरस्य साक्षात्सर्वाधारत्वोक्तेश्च । अपहतपाप्मत्वादि तत्र जडत्वात्तदभिमान्यभिप्रायाद्वोपपद्यते । जीवे एव वा सः परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचेति । अपहतपाप्मत्वादिकं मुक्त्यभिप्रायेण । हृत्पद्मस्थत्वं त्वणोरेवोपपद्यते न तु महतो हरेरिति प्राप्ते । य आत्मा अपहतपाप्मा, विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिभ्य उत्तरेभ्यो दहरे सूक्ष्मे हृदयपद्मे विष्णुरेव । जडेऽप्रसक्तापाप्मादिनिषेधायोगात् । न वैशेष्यप्रसक्तिः । सजातीये दर्शनं हि निषेधे प्रयोजकम् । चेतने हि पाप्मत्वादि दृष्टं न तु जडे । न च मुक्त्यभिप्रायेण जीवे तन्निषेधः । निरपेक्षनिषेधसंभवे सापेक्षनिषेधस्याग्राह्यत्वात् । एतेनाभिमानिपक्षोऽपि निरस्तः । अन्वयानुपपत्तिश्च यो भगवानन्वेष्टव्यस्तस्यान्तर्हृदये यावान् वाऽयमाकाशस्तावानाकाशस्तस्मिन्द्यावापृथिवी अन्तरेव समाहिते स भगवानपहतपाप्मेत्यन्वयेन निरस्ता । अयं भावः––शरीरपुण्डरीकयोर्ब्रह्म प्रति पुरत्ववेश्मत्वोक्तौ वाऽन्वेष्टव्यस्य ब्रह्मत्वसिद्धेस्तस्मिन्यदन्तरित्यत्र हृत्पद्मस्थाकाशगतब्रह्मान्वेष्टव्यमित्युक्ते किं तदित्यत्र तद्ब्रह्मप्रकारमिति पृष्टे यावानिति परिहारवाक्ये यद्ब्रह्मान्वेष्ट[ व्य ]तयोक्तं तस्यान्तर्हृदये यावानेष आकाशस्तावान्सर्वो विधीयते द्यावापृथिव्यादिकं चास्मिन्समाहितमिति । ब्रह्मण आकादिसर्वाश्रयत्वापहतपाप्मत्वादिप्रकर उक्तः ॥ १४ ॥

युक्त्यन्तरमाह––

**ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १ । ३ । १५ ॥**

अहरहर्गच्छन्त्य एतं लोकं विन्दन्तीति हृत्पद्मस्थस्य सुप्तप्रजाप्राप्यत्वोक्तेर्हृत्पद्मस्थब्रह्मलोकत्वोक्त्या तद्गतस्य ब्रह्मत्वश्रुतेश्च ब्रह्मैव वा सर्वाश्रयतया लोकपदोक्तम् । सता सोम्य तदा संपन्नो भवतीति श्रुतेः । अरश्च वैण्यश्च अर्णवौ ब्रह्मलोक इति हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्त्वोक्तेः ॥ १५ ॥

युक्त्यन्तरमाह––

**ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १ । ३ । १६ ॥**

एष सेतुर्विधृतिरिति हृत्पद्मस्थे सर्वाधारत्वश्रवणाच्च । अस्य य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते तस्य वशी एष सर्वेश्वर एष भूताधिपतिरेष सेतुर्विधरण एषां लोकानामसंभेदायेत्यादिर्हि महिम्नो हृत्पद्मस्य उपलब्धेः । सर्वस्य चाहं हृदि संनिविष्ट इति स्मृतेश्च । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यावित्यादिमहिमोपलब्धेश्च ॥ १६ ॥

युक्त्यन्तरमाह—

**ॐ प्रसिद्धेश्च ॐ ॥ १ । ३ । १७ ॥**

दहरे गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमिति प्रसिद्धेश्च ॥ १७ ॥

युक्त्यन्तरमाह—

**ॐ इतरपरामर्शात्स इति चेन्नासंभवात् ॐ ॥ १ । ३ । १८ ॥**

ननु परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति जीवपरामर्शात् स इति चेन्न । तस्य स्वतो निरपेक्षापहतपाप्मत्वाद्यसंभवात् ॥ १८ ॥

युक्त्यन्तरमाह—

**ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १ । ३ । १९ ॥**

स तत्र पर्येति जक्षन्क्रीडन् रममाण इत्युत्तरस्माद्वाक्याज्जीव एवेति चेन्न ॥ १९ ॥

तस्य परमाह—

**ॐ अन्यार्थश्च परामर्शः ॐ ॥ १ । ३ । २० ॥**

यं प्राप्य स्वेन रूपेण जीवो निष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥ २० ॥

उक्तमाशङ्क्य समाधत्ते—

**ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ १ । ३ । २१ ॥**

दहरमित्यल्पश्रुतेर्नेति चेन्न । निचाय्यत्वादेवं व्योमवच्चेत्युक्तत्वात् । एष उ आत्माऽन्तर्हृदये ज्यायानिति श्रुत्युक्तत्वाच्च । न च सुषिरस्य सर्वाश्रयत्वश्रुतिविरोध इति वाच्यम् । वाजपेयसंबन्धिपशुसंबन्धिनो यूपस्य वाजपेयसंबन्धव्यपदेशवत् सुषिरस्थब्रह्माश्रितस्यापि सर्वस्य सुषिरसंबन्धोपपत्तेः । यत्तु दहराकाशस्थस्यान्वेष्टव्यत्वोक्त्ययोगात् । यच्चोक्तं तस्मि-

न्निति तदन्तरिति तच्छब्देन हृत्पुण्डरीकमेव परामृश्य तदन्तर्गतदहरस्यैवा-न्वेष्टव्यत्वादिकमुच्यत इति । तन्न । तस्मिन्नित्यस्य संनिहितदहराकाशत्यागेन व्यवहितपुण्डरीकपरत्वायोगात् । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते, सर्वस्य वशी सर्वस्येशानः, दिव्ये ब्रह्मपुरे ह्येष( व्ये )षः व्योम्नि आत्मा प्रतिष्ठितः, य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषः, यो वेद निहितं गुहायां परमे व्योमन्, दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहरं गगनं विशोकं तस्मिन्यदन्तस्तदुपासितव्यम् , इत्यादिश्रुतिविरोधाच्च । न चैवं सुषिरस्य सर्वाश्रयत्वं हृत्पुण्डरीकस्य वेश्मत्वं वदन्त्यः श्रुतयः, सर्वस्य चाहं हृदि संनिविष्ट इत्यादिस्मृतयश्च विरुध्येरन्निति वाच्यम् । मञ्जूषागतमणेर्गेहस्थत्ववद् ब्रह्मगगनसर्वाश्रयत्वस्य हि गगनस्थत्वं गगनवद्ब्रह्मवेश्मत्वस्य हृत्पुण्डरीकस्थत्वं चोपपन्नमिति दिक् ॥ २१ ॥

ॐ अनुकृतेस्तस्य च ॐ ॥ १ । ३ । २२ ॥

अत्रानुकल्पेन गृह्यमाणत्वलिङ्गस्येशे ज्ञानिसुखे च सुखशब्दस्यासाधारणस्य विष्णौ समन्वयसमर्थनादस्ति संगतिः । काठके—तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वेति श्रूयते । आनुकूल्यगृह्यमाणत्वं कथं तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वं तदल्पस्य चेदनिर्देश्यत्वादिकमप्यन्यस्यैव स्यात् । आनुकूल्येन गृह्यमाणं ज्ञानिसुखं ब्रह्म वेति चिन्ता । तत्र ज्ञानिसुखमेव तद् विजानीयामिति तच्छब्देन तदेतदिति मन्यन्ते । निर्देश्यं परमं सुखमिति प्रकृतसुखपरामर्शात् । न चेदं वक्ष्यामि गुह्यं ब्रह्म सनातनमिति ब्रह्मप्रकरणादनिर्देश्यत्वादिलिङ्गाच्च तत्सुखं ब्रह्मेति वाच्यम् । लिङ्गात्तदेतदिति सर्वनामश्रुतेर्बलवत्त्वात् । तस्य वैकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीराः । तेषां सुखं शाश्वतं नेतरेषामिति सूर्यादिप्रकाशहेतुत्वम् । तस्य भासा सर्वमिदं विभातीति सर्वजगत्प्रकाशकत्वं च ब्रह्मण एवेति विष्णुरेवानिर्देश्यसुखरूपः । तद्गुह्यं ब्रह्म सनातनमित्युपक्रान्तमेतत् । एवं रूपमिति मध्य उक्तं ब्रह्मणो रूपं परमं सुखमिति तदेतच्छब्दयोर्ब्रह्मपरत्वान्नपुंसकतेति । न च व्यवहितपरत्वम् । तेषां सुखमिति वाक्यादुत्तरस्मिन्नित्यो नित्यानां चेतनश्चेतनानामिति वाक्य ईशस्य संनिहितत्वात् । अस्तु वा

तेषां सुखमिति वाक्यात्पूर्वस्मिन्नेको वशीत्यादिव्यवहितवाक्यप्रकृतेशपरामर्शस्तथाऽपि न दोषः । संनिकृष्टमयोग्यं चेद्दूरस्थेनापि सहान्वयः । उक्तं च वार्तिके—यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणमिति । अयोग्यं ज्ञानिसुखमनिर्देश्यसूर्यप्रकाशहेतुत्वादिनाऽन्वेतुम् ॥ २२ ॥

श्रुत्युक्तमर्थं स्मृत्याऽऽह—

ॐ अपि स्मर्यते ॐ ॥ १ । ३ । २३ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् । न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद् गत्वा न निवर्तन्ते तद्धाम परमं ममेति । अत आनुकूल्येन गम्यमानो हरिरेवेति सिद्धम् ॥ २३ ॥

ॐ शब्दादेव प्रमितः ॐ ॥ १ । ३ । २४ ॥

अत्र प्रेरकत्वसाम्येन विष्णौ वायौ च साधारणस्येशाननाम्नो विष्णौ समन्वयप्रतिपादनादस्ति संगतिः । अथात इति जिज्ञास्यत्वं हरेरुक्तम् । तत्काठके—अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य । 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासत इतीशानस्य प्रतिपत्तेः । यद्यपीशानपदप्रवृत्तिनिमित्तं प्रेरकत्वमसंकुचितं न वायौ संकुचितं तु रुद्रेऽपीशानशब्दप्रसिद्धिरप्यधिका तथाऽपि तस्य वायौ किंचित्संकुचितत्वादीशानत्वसहचरितप्राणादिव्यवस्थापकस्यान्यत्रात्यन्तासंभवाच्चेशानशब्दो विष्णुवायुसाधारण इति ज्ञेयम् । ईशानो वायुरुत विष्णुरिति चिन्ता । तत्रेशानो वायुरेव । ईशान ऊर्ध्वं प्राणमुन्नयतीति प्राणव्यवस्थापकत्वस्य, मध्ये वामनमासीनमिति मध्यमत्वस्य, विश्वेदेवा उपासत इति सर्वदेवोपास्यत्वस्य च श्रवणात् । तेषां चैवमेवैष प्राणः । योऽयं मध्यमः प्राणः कुविदङ्गेतिश्रुत्या वायुधर्मत्वोक्तेः । वामनत्वादिकं तु सर्वगते संभवतीति प्राप्ते । हरिरेवेशानः । अन्यत्र निरवकाशवामनश्रुतेः । एष उ एव हि वामनीरेष हि सर्वाणि वामानि नयतीति श्रुत्यन्तरेऽवधारणात् । उपेन्द्रो वामनः प्रांशुरिति स्मृतेरार्यप्रसिद्धेश्च । वामनवामनिशब्दयोश्च लोकवेदाधिकरणन्यायेन वर्णविकारादिनैकदेशरूपान्यथात्वेऽपि देवासः, देवा इत्यादाविव लाघवेन प्रत्यभिज्ञयैकत्वे संभवति

भेदकल्पनायोगात् । एवं च यथा यद्योन्यां तदुत्तरयोर्गायतीत्यत्रोत्तराशब्द उत्तराग्रन्थे संज्ञारूपो निरपेक्ष इति तत्तर एव । न तु योनि(?)करूपप्रतियोगिसापेक्षोत्तरा(?)कपरः । तथा वामनशब्दोऽपि रूढ्या विष्णुपरो न तु दीर्घप्रतियोगिकह्रस्वपरः । न च रुद्रे योगरूढ ईशानशब्दः । न ब्रह्माऽऽसीन्न शंकर इत्यादिश्रुत्या, यन्न देवा न मुनयो न चाहं न च शंकरः । जानाति देवस्य तद्विष्णोः परमं पदमिति स्मृत्या, विष्ण्वतिरिक्ते सर्वेशानत्वबाधात् । ईशानः प्राणदः प्राण इति विद्वद्रूढेर्विष्णावपि सत्त्वाच्च ॥ २४ ॥

ननु सर्वगतस्याङ्गुष्ठमात्रत्वमसंभवीति शङ्कां परिहरति—

**ॐ हृद्यपेक्षया तु मनुष्याधिकारात् ॐ ॥ १ । ३ । २५ ॥**

सर्वगतस्यापि हृद्यवकाशस्याङ्गुष्ठमात्रत्वेन तत्संबन्धेनोपचाराद्भगवन्मूर्त्यङ्गुष्ठमात्रोक्तिः । मनुष्यान् प्रत्येव वेदविद्याप्रवृत्त्या पश्वादीनामभावेन मनुष्याभिप्रायेणाङ्गुष्ठमात्रोक्तिसंभवः । यत्त्वङ्गुष्ठमात्रो जीवः । परिच्छिन्ने तत्संभवात् । प्रथमश्रुताङ्गुष्ठमात्रानुरोधादीशानेत्यादिचरमश्रुतं संकोच्यतामिति प्राप्ते । ब्रह्मप्रश्नोत्तरत्वादीशानत्वमसंकुचितमेवाङ्गुष्ठमात्रोक्तिर्जीवैक्याभिप्रायेणेति सिद्धान्त इति । तन्न । ईशानो भूतभव्यस्येत्यस्याङ्गुष्ठवाक्याचरमत्वेऽपीशानं भूतभव्यस्येत्यस्य प्रथमत्वेनाङ्गुष्ठवाक्यस्येशानवाक्यसंदष्टत्वेन पूर्वपक्षासंभवात् । त्वन्मतेऽन्यत्र धर्मादन्यत्राधर्मादित्यत्र ब्रह्मण इव ' येयं प्रेते विचिकित्सा मनुष्ये ' इत्यत्र जीवस्यापि पृष्टत्वेन सिद्धान्तासिद्धेः । जीवस्य स्वनियम्यदेहादिकं प्रतीशत्वसंभवेन निर्विशेषब्रह्मणस्तदभावाच्च ॥ २५ ॥

**ॐ तदुपर्यपि बादरायणः संभवात् ॐ ॥ १ । ३ । २६ ॥**

प्रासङ्गिकी संगतिः । यद्यपि तृतीयेऽधिकारचिन्ताऽस्ति तथाऽपि पूर्वाधिकरणस्थमनुष्यग्रहणस्य विशिष्टबुद्ध्यादिहीनं तिर्यगाद्येव व्यावर्त्यं न तु देवादीत्यनेन रूपेणेयं चिन्ता न तृतीये संगता । यथा भोक्त्रापत्तेरिति मुक्तेशभेदसमर्थनं फलविचाररूपेण चतुर्थे संगतमपि युक्तिविरोधपरिहाररूपेण द्वितीये संगतम् । देवानां ब्रह्मविद्याधिकारो नास्त्युतास्तीति चिन्ता । तत्र न देवानामधिकारः । तथा हि—तत्पदविशिष्टा देवाः किमुत्पत्ति-

तेषां नानाविधानां नामरूपवतां वाचकवेदस्य कथं नाप्रामाण्यं तस्य प्रतिकल्पं पाठभेदाभावात् । तद्भावे नित्यताव्याघातादतो ब्रवीति—

**ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ १ । ३ । ३० ॥**

प्राचीनानां प्राप्तमुक्तित्वेन पुनः स्वपदेष्ववृत्तावपि तदन्येषां प्राचीनसमाननामरूपत्वात्तत्प्रतिपादकैकविधस्यापि वेदस्याप्रामाण्यापत्तेः । न च समाननामरूपत्वे मानाभावः । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादिश्रुतेः । ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येव तेभ्यो ददात्यजः । यथर्तुष्वृतुलिङ्गानि नानारूपाणि वै यथा । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । इत्यादिस्मृतेश्च । दृश्यन्त इति दृष्टयो रूपाणि ॥ ३० ॥

**ॐ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॐ ॥ १ । ३ । ३१ ॥**

मोक्षेतरफलासु मध्वग्नीषोमादिविद्यासु न देवानामधिकारः । तत्रार्थित्वाभावात् । ' स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदमृते दृष्ट्वा तृप्यति देवो भूत्वा देवानप्येति स ऊर्जमुपगच्छतीत्यादिना मध्वादिविद्यासु वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणात् । न हि प्राप्तफलानां तदर्थित्वादिकं संभवतीति जैमिनिराचार्यो मन्यते ॥ ३१ ॥

ननु माऽस्तु मोक्षेतरार्थविद्यास्वधिकारः । सत्यं ज्ञानमित्यादिमोक्षफलासु तु स्यात् । तत्रार्थित्वसंभवादिति शङ्कां निरस्यति—

**ॐ ज्योतिषि भावाच्च ॐ ॥ १ । ३ । ३२ ॥**

ज्योतिषि सर्वज्ञत्वेऽभावाच्चानधिकारः । देवानां मोक्षार्थित्वेऽपि तत्साधने ज्ञाने नार्थिता । तेषां सर्वज्ञत्वेन सर्वविद्योक्तज्ञानित्वात् ॥ ३२ ॥

**ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ १ । ३ । ३३ ॥**

फले विशेषभावात्प्राप्तपदानामपि देवानां मध्वादिष्वधिकारं बादरायणो मन्यते । न चैतेषां सिद्धविद्यत्वं भगवदितरेषां निरुपचितसर्वज्ञत्वाभावात् । न च जैमिनिमतविरोधः । तत्तद्विद्यासूक्तफलार्थं प्रागाप्तज्ञानार्थं च जैमिनिनाऽधिकारनिरासात् । भगवता तु प्रयोजनान्तरायार्थिताया उक्तत्वात् । हरेर्गुणानामानन्त्यात्तद्गुणज्ञानादानन्दाविर्भावादाधिक्यमित्यर्थः । न च किमत्र

मानम्—यावत्सेवा परे तत्त्वे तावत्सुखविशेषता । संभवाच्च प्रकाशस्य परमेकमृते हरिमिति स्कान्दोक्तेः ॥ ३३ ॥

**ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ ॥१।३।३४॥**

अत्र पूर्वाधिकरणसिद्धान्तरीत्या पूर्वपक्षोत्थानादनन्तरसंगतिः । प्रासङ्गिकत्वादध्यायादिसंगतिर्नान्वेष्या । अत्र शूद्रादेर्ब्रह्मविद्याधिकारोऽस्त्युत नास्ति । तत्र विशिष्टबुद्ध्यादिमत्त्वाद्देववच्छूद्रोऽपि वेदाधिकारी । न च तस्योपनयनाध्ययनाभावः । वैदिकसंवर्गविद्याश्रोतारं पौत्रायणं प्रत्यह-ह रे त्वा शूद्रेति रैक्वस्य संबोधनरूपेण शूद्रस्यापि विदुरादेर्वेदार्थावधारणादि-रूपेण च लिङ्गेन शूद्रस्योपनयनादिसिद्धेः । अनधीयानस्यैव वा तस्य श्रुतालिखितनिरीक्षिताद्वा वेदार्थज्ञानमस्तु । जानश्रुतौ शूद्रशब्दो न यौगिको रूढेर्बलीयस्त्वादिति प्राप्ते । शुचा द्रवणत्वमेव शूद्रत्वं न तु वर्णावरत्वेन च शुगेव तस्य । कुतः । कम्वर एनमेतत्सन्तमित्यरे हंसैतद्वचनं कभेनमु-द्दिश्याऽऽह सन्तं सयुग्वानं रैक्वमिवेति हंसकृतानादरश्रवणात् । ननु परबुद्धेरप्रत्यक्षत्वात्तच्छुग्ज्ञानं कथमिति चेत् । सह संजिहान एव क्षत्तारमुवाचेति सूच्यते । शयनीयादुत्तिष्ठन्नेव क्षत्तारं रैक्वगवेषणायोवाचे-त्युक्ते तद्व्यग्रतया शोको ज्ञायते ॥ ३४ ॥

न तु( नु ) रूढ्या शूद्रस्याधिकारोऽस्त्विति शङ्कां परिहरति—

**ॐ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ १ । ३ । ३५ ॥**

अथाश्वतरी रथ इति चित्ररथलिङ्गेन जानश्रुतेः क्षत्रियत्वनिर्णयः । उत्तरत्र संवर्गविद्यायां वाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः संकीर्त्यते तत्समभिव्याहाराज्जानश्रुतिरपि क्षत्रिय इति निर्णयः । ननु शूद्रस्य रथसं-बन्धसंभवः । न च तस्य वेदाविनाभावः ॥ ३५ ॥

वेदोऽपि शूद्रस्य स्यादिति शङ्कां परिहरति—

**ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥१।३।३६॥**

अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यध्ययनार्थं संस्कारपरामर्शात् । वेदः कृत्स्नोऽवगन्तव्यः सरहस्यो द्विजन्मनेति स्मृतेश्च । नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य संस्काराभाव एवोक्तः ॥ ३६ ॥

न तु तन्निषेधोऽपीति शङ्कां परिहरति—

ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ १ । ३ । ३७ ॥

नाहमेतद्वेद यो यद्गोत्रोऽहमस्मीति । सत्यकामस्याऽऽर्जवं ज्ञात्वा नैतदब्राह्मणो विवक्तुमर्हतीति शूद्रत्वाभावनिर्णय एव तदुपनयने गौतमस्य प्रवृत्तेः । शूद्रस्योपनेयत्वे तदभावनिर्धारण एव कथं प्रवर्तेत ॥ ३७ ॥

ननु विशिष्टबुद्ध्यादिमत्त्वं शूद्रस्याप्यस्तीत्यत आह–

ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ १ । ३ । ३८ ॥

श्रवणप्रतिषेधस्तावद्यथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति । पद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमिति च । कथनश्रुतमवीर्यति । उदहरणे जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणमिति प्रतिषेधात् । नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः । केवलैव तु शुश्रूषा त्रिवर्णानां विधीयत इति स्मृतेश्च । येषां विदुराद्दीनां साधनवशाज्ज्ञानोत्पत्तिस्तेषां फलोत्पत्तौ च न किंचिद्बाधकमतः शूद्रैर्न वेदविद्यया ज्ञेयो हरिरिति सिद्धम् ॥ ३८ ॥

ॐ कम्पनात् ॐ ॥ १ । ३ । ३९ ॥

अत्र लोकप्रसिद्ध्या ब्रह्मलिङ्गेन च साधारणवज्रनाम्नि हरौ च समन्वयप्रतिपादनादस्ति संगतिः । कठके ' यदिदं किंच जगत्सर्वं प्राण एजति प्राणान्निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीति ' वज्रज्ञानान्मोक्षः श्रूयते । यद्यपि वज्रशब्दस्य स्वप्नद्रष्टृत्वादिलिङ्गस्य च लोकतोऽन्यत्र प्रसिद्धिरस्ति ब्रह्मलिङ्गैर्ब्रह्मण्यपि प्रसिद्धिश्चेत्प्राणादीनामपि तुल्या । तथाऽपि पादद्वयेऽनुदाहृतानामपि नाम्नां लिङ्गानां च तत्रोक्तन्यायेन हरिपरता सिद्धप्रायेति दर्शयितुमन्यत्र प्रसिद्धस्यापि वज्रनाम्नः स्वप्नद्रष्टृत्वलिङ्गस्य चेहोक्तिः । वज्रं किमायुधमुत विष्णुरिति चिन्ता । तत्र वज्रमिन्द्रायुधमेव । यत्किंचित् सर्वं जगत्प्राणे स्थितं प्राणान्निःसृतं तदिदं जगद्यस्मादेजति यत्प्रेरणया चेष्टते तन्महद्भयं वज्रं ये विदुस्तेऽमृता भवन्तीत्यर्थात् । सर्वं जगद्यस्मान्निःसृतं स प्राणो यस्माच्चेष्टत इत्यर्थाद्वेति प्राप्ते । हरिरेव वज्रम् । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । प्राणस्य प्राणमुत सर्वेशानः स वा एष नेतीति सर्वचेष्टकत्वस्य विष्ण्वेकनिष्ठत्वश्रवणात् । वर्जनाद्वज्रमुच्यते । आममना-

त्काशत यदाकाशः । प्राणः प्राणनादेवेत्यादिस्मृतिभिरन्वर्थसंज्ञाकरणेन वज्रादिश्रुतिविरोधो नास्ति । यत्तु प्राण एजतीति वाक्यस्थः प्राणः प्रसिद्धो वायुरिति प्राप्ते ब्रह्मैवेति सिद्धान्त इत्याह । नन्व । प्रागनुक्तसमन्वय उद्यतत्वरूपपूर्वपक्षबीजयुक्ते च वज्रशब्दे ऽस्यसकृदुक्तसमन्वयस्य बीजशून्यस्य च प्राणशब्दस्य समन्वयोक्त्ययोगात् ॥ ३९ ॥

ॐ ज्योतिर्दर्शनात् ॐ ॥ १ । ३ । ४० ॥

अत्र जीवेशयोर्ज्ञानरूपत्वेन हृदयाहितत्वेन च साधारणस्य ज्योतिर्नाम्नो विष्णौ समन्वयप्रतिपादनादस्ति संगतिः । हृदय आहितं ज्योतिः परमात्मेति ज्योतिश्चरणोत्पन्नोक्तं वाजसनेयके—यो विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इति श्रूयते । अत्र तज्ज्योतिर्जीवो ब्रह्म वेति चिन्ता । तत्र पूर्वत्र यथा निरवकाशलिङ्गबलाद्वज्रश्रुतेर्लोकप्रसिद्धार्थत्यागस्तथेहापि समानः सन्नुभौ लोकावनुसंचरतीति । स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः स उत्क्रामन् म्रियमाणः पाप्मनो विजहातीति जीवलिङ्गबलादेव विष्णुरेव ज्योतिरित्यादि प्रसिद्धार्थत्यागः । किं ज्योतिरयं पुरुष इति प्रश्न आदित्यज्योतिरादित्येनैव ज्योतिषाऽऽस्त इत्यादिना यस्य जागरण आदित्यज्योतिरित्यादिप्रसिद्धार्थत्यागः । किं ज्योतिष्ट्वमुक्तं स तावज्जीवः । न ह्यादित्यादिज्योतिष्ट्वं विष्णोर्युक्तम् । न तत्र सूर्यो भातीत्यादिश्रुतेरिति प्राप्ते । नारायणः परं ज्योतिः । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, ज्योतिषां ज्योतिरित्यादिषु परत्वादिविशेषणाज्ज्योतिःशब्दो विष्णावेव मुख्यः । स च हृद्यन्तर्ज्योतिरित्यात्मप्रश्नोत्तरोपक्रमेणोपसंहारेण च विष्णुपरत्वनिर्णीतवाक्यमध्यपातीनि म्रियमाण इत्यादीन्युपांशुयाजादिमध्ये यानि विष्ण्वादिवाक्यवत्तदनुसारेण नेयानि । तथा हि—यथा प्रजापतिर्वरुणायाश्वमनयदित्याद्युपक्रममात्रानुसारेण यावतोऽश्वान्प्रतिगृह्णीयादित्यत्र प्रतिग्राहयेदित्यन्तर्भावितणिजर्थता तथोपक्रमोपसंहारमध्यपरामर्शानुसारेण म्रियमाणादिशब्दानामन्तर्भावितणिजर्थता । जीवपरत्वे शरीरमभिहत्येत्यादिमन्त्रासंगतेरिति । तज्ज्योतिर्विष्णुरेव । यत्तु—एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति ज्योतिरादित्यः । यद्यपीदं प्रकरणं दहराधिकरणे ब्रह्मपरमित्युक्तं तथाऽपि समुत्थायेत्यादिश्रुत्या प्रकरणबाधादिहाऽऽशङ्क्यते ।

ज्योतिषो ब्रह्मत्वे हि समुत्थायेति बाधः । स्वरूपनिष्पत्तिरित्युक्ताया ब्रह्मसंपत्तेरभावात् । संपद्येति पूर्वकाले क्त्वाबाधः । ज्योतिष आदित्यत्वे तु निर्गुणो य आत्माऽपहतपाप्मेत्यादिना निर्गुणं ब्रह्मोक्त्वा तज्ज्ञानफलस्यैवोच्यमानत्वात् । तथा च शरीरादुत्थानं नाम श्रवणादिकम् । स्वरूपाभिनिष्पत्तिस्तु तज्जन्यः साक्षात्कारः । संपत्तिस्तु तत्साध्यो ब्रह्मभावः । क्त्वा तु मुखं व्यादाय स्वपितीत्यादिवदुपपद्यत इति सिद्धान्त इति । तन्न । परंज्योतिःपदस्य परब्रह्मण्येव प्रसिद्धेः । संशयाद्यसंभवात् । एतस्मात्पूर्वमात्माऽपहतपाप्मेत्यारभ्य सत्यकामः सत्यसंकल्प इति सविशेषस्यैव श्रवणादुत्तरत्र च स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्यानैर्वेति सगुणमोक्षश्रवणात् । य एष आदित्ये हिरण्मयः पुरुष इति श्रुतेः । सगुणे सर्वेभ्यः पाप्मभ्य उदित इति पापराहित्यश्रवणाच्च । सर्वपदलक्षणायाः स्पष्टत्वाच्च ॥ ४० ॥

ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ १ । ३ । ४१ ॥

अत्र प्रयोगवशाद्गगने ब्रह्मणि च साधारणाकाशनाम्नो हरौ समन्वयप्रतिपादनादस्ति संगतिः । द्युभ्वेत्यत्र सर्वाधारत्वं हरेरुक्तम् । तच्छान्दोग्य आकाशस्य श्रूयते—आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतमिति । अत्राऽऽकाशः किं प्रसिद्धाकाशो विष्णुर्वेति चिन्ता । तत्र प्रसिद्धाकाश एव । यद्यप्याकाशे तदमृतं स आत्मेति ब्रह्मश्रुत्यादीनि सन्ति तथाऽपीह वै नामेतिनिपातद्योतितप्रसिद्धिर्न ब्रह्मणि युक्ता । लोके तस्याप्रसिद्धत्वाद्वेदे प्रसिद्धत्वेऽप्यनादिर्वा अयमाकाश इत्यादौ तस्यापि प्रसिद्धेर्व्यावर्त्यस्याप्रसिद्धस्याऽऽकाशस्यैवाभावेन निपातवैयर्थ्यात् । मानपक्षे तु शास्त्रयोनित्वेन लोकाप्रसिद्धब्रह्माकाशस्य व्यावर्त्यत्वाल्लौकिकप्रसिद्धिद्योतकनिपातावैयर्थ्यम् । तल्लिङ्गादित्यस्य विषयवाक्ये तु सर्वाणि ह वा इमानि भूतानि आकाशादेवेत्यत्र वैशब्दस्य संनिहितसर्वभूतान्वयो वा स्युरेव नु पुनर्वै वेत्यवधारणवाचका इति वचनेनावधारणार्थत्वं वाऽऽकाशस्यैव । इह त्वाकाशस्यैव संनिधाननामशब्दस्य च नार्थान्तरमस्तीति प्राप्ते । यतो वाचो निवर्तन्त इत्यादिना साकल्येन वागाद्यगोचरत्वं विष्णोरेव न तु गगनस्य । ब्रह्मणि नामवर्णादिश्रुतितात्पर्यापरिज्ञानप्राप्तलौकिकरूपस्यारूपामिति श्रुत्या निषेधवद् गगने तदभावात् । ते

यदन्तरा तद्ब्रह्मेति ब्रह्मत्वान्तरात्वव्यपदेशाच्चाऽऽकाशो हरिरेव । यस्त्वाकाशस्तल्लिङ्गादित्यस्य विषयवाक्य आकाशादेव समुत्पद्यन्त इत्यत्रैवैतत्सूत्रे विषयवाक्य आकाशो वै नामेत्यत्र ब्रह्मलिङ्गाभावेन पूर्वपक्षोत्थानादगतार्थमिति । तन्न । अत्रापि नामरूपनिर्वहितृत्वादिलिङ्गानां ब्रह्मात्मादिश्रुतीनां च सत्त्वात् । क्लेशेनाऽऽकाशे योजनं तूभयत्र समम् ॥ ४१ ॥

ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ १ । ३ । ४२ ॥

अत्रासङ्गत्वलिङ्गेन लोकप्रसिद्धाविवेशजीवयोः साधारणस्य स्वप्नादिदर्शनलिङ्गस्य विष्णौ समन्वयसमर्थनादस्ति संगतिः । अगन्धमरसमित्यसङ्गत्वमीशस्योक्तं तद्वाजसनेयके स्वप्नादिद्रष्टुः प्रतीयते । स वा एष एतस्मिन्संप्रसादे गत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति । अत्र स्वप्नादिद्रष्टा जीव उत विष्णुरिति चिन्ता । तत्र लोकप्रसिद्धेर्जीव एवायम् । पिकनेमादाविव वेदप्रसिद्ध्यभावे लोकप्रसिद्धिरेव ग्राह्या । असङ्गत्वादिकं तु ब्रह्माभेदाभिप्रायं पूर्वत्र ह्याकाशस्य जडत्वेन ब्रह्माभेदायोगादिति वैषम्यमिति प्राप्ते । कार्त्स्न्येन स्वाप्नवस्तूनां द्रष्टा सर्वज्ञ ईश एव । संकोचे मानाभावात् । न हि साकल्येन स्वप्नद्रष्टृत्वमसर्वज्ञे नीचे लोकतः प्रसिद्धम् । न चेह स्वप्नाद्यवस्थावत्तोच्यते । पश्यतीति द्रष्टृत्वस्यैवोक्तेः । किंचानन्वागतस्तेन भवतीत्यत्रासङ्गो ह्ययं पुरुष इत्यसङ्गत्वहेतुः । प्रसिद्धमेव च हेतुत्वयोग्यम् । असङ्गमस्पर्शमित्यादिश्रुतिषु तद्ब्रह्मण्येव प्रसिद्धम् । किंचासङ्गत्वं न स्वरूपेण जीवेऽस्ति । जडेशयोरसंसारित्वेन संसारिणो जीवस्यैव सङ्गित्वात् । जीवेशयोरभेदो मानबाधित इत्युक्तत्वात् । प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति सुषुप्तौ तमुत्क्रान्तं प्राणोऽनुत्क्रामतीत्युत्क्रान्तौ च जीवस्य भेदेनाधीतत्वान्नेशाभेदाभिप्रायेणासङ्गत्वोपपत्तिरित्यर्थः ॥ ४२ ॥

ॐ पत्यादिशब्देभ्यः ॐ ॥ १ । ३ । ४३ ॥

अत्र नित्यमहिमत्वलिङ्गेनाजश्रुत्या च विष्णुविरिञ्चयोः साधारणस्य ब्राह्मणनाम्नो विष्णौ समन्वयसमर्थनादस्ति संगतिः । पूर्वाधिकरणेषु विष्णोरनन्यापेक्षजगत्स्रष्टृत्वादिरूपं नित्यमहिमत्वमुक्तम् । तद्वाजसनेयके एष नित्यो

काठकादौ किंचिदुच्यते—महतः परमव्यक्तमव्यक्तात्पुरुषः परः । योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् । जीवा एव तु दुःखिन इति । अत्रावरदुःखिवञ्ज्ञाव्यात्माद्विपद्मुख्यार्थो जीवादिर्विष्णुर्वेति चिन्ता । तत्र जीवादिरेव । अव्यक्तादिशब्दानां प्रधानादौ प्रसिद्धेः । दुःखित्वादेर्ब्रह्मणि बाधाच्च । पूर्वाधिकरणोक्तसर्वाधिपतित्वादिविरुद्धत्वाच्च । सांख्यानुमानप्रमितं प्रधानादिकमप्येषा शाखिनामुच्यत इति प्राप्ते । विष्णुरेवाव्यक्तादिशब्दवाच्यः ।

ननु कथं प्रधानादौ व्यवहारः । न चाज्ञानादिति वाच्यम् । घटादौ पटादिशब्दानां व्यवहारापत्तेरिति चेन्न । शरीररूपके प्रधाने विन्यस्तस्य स्थितस्य हरेरेवाव्यक्तपदेन गृहीतेः । तुच्छेनाभ्वपिहितं यदाऽऽसीदिति तुच्छपदेन प्रधानस्य पारतन्त्र्यं दर्शयति । यद्वा—आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । तैश्चेन्द्रियादिभिरसंयतैः संसारमधिगच्छति । संयतैश्चाध्वनः पारं विष्णोः परमं पदमाप्नोतीति दर्शयित्वा किं तदध्वनः पारमित्याकाङ्क्षायामिन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिरिति । स्वातन्त्र्यलक्षणपरत्वस्य पुरुषपदवाच्यभगवत्येवोक्तत्वेन शरीरसमे प्रधानादौ स्थितत्वेन तस्यैव तत्पदमुख्यार्थत्वात् । न हि प्रधानस्य परमात्मशरीराभिप्रायेणाव्यक्तादिपदं प्रायुङ्क्त भगवान् । कुत्सनार्थकविरोधात् ॥ १ ॥

न हि भगवच्छरीरं कुत्सितम् । अपि तु भगवदधीनत्वाभिप्रायेण युक्त्यन्तरमाह—

**ॐ सूक्ष्मं तु तदर्हत्वात् ॐ** ॥ १ । ४ । २ ॥

अव्यक्तत्वोपयोगिसूक्ष्मत्वस्य भगवति सत्त्वात् । सूक्ष्मत्वानदविज्ञेयमिति । अव्यक्तः पुरुषः साक्षीति च स्मृतेः ॥ २ ॥

ननु हरेर्मुख्यार्थत्वेऽपि परापरत्वादिश्रुतेर्नैरर्थ्यमिति शङ्कां परिहरति—

**ॐ तदधीनत्वादर्थवत् ॐ** ॥ १ । ४ । ३ ॥

भगवदधीनत्ववचनाच्च ॥ ३ ॥

ॐ ज्ञेयत्वावचनाच्च ॐ ॥ १ । ४ । ४ ॥

तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुरिति ब्रह्मण इव प्रधानादेर्मुमुक्षुज्ञेयत्वानुक्तेः ॥ ४ ॥

उक्तमाक्षिप्य समाधत्ते—

ॐ वदतीति चेन्न प्राज्ञो हि ॐ ॥ १ । ४ । ५ ॥

नन्वनाद्यन्तो महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत इति तस्य ज्ञेयत्वमस्तीति चेन्न । अणोरणीयान्महतो महीयानिति परेशस्यैव महतः परत्वलिङ्गेन ज्ञेयत्वोक्तेः ॥ ५ ॥

ननु प्रधानलिङ्गस्यामुख्यार्थतां स्वीकृत्यानाद्यनन्तादिवाक्यस्य हरिपरत्वे मानाभाव इत्यत आह—

ॐ प्रकरणात् ॐ ॥ १ । ४ । ६ ॥

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति तस्यैव प्रकरणात् ॥ ६ ॥

प्रधानाभावे युक्त्यन्तरमाह—

ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ १ । ४ । ७ ॥

त्रयाणां पितृसौमनस्यस्वर्ग्याग्निशानां प्रश्न उत्तरं च न तु प्रधानस्य त्रयाणामग्निजीवेशानां प्रश्नोत्तरं न तु प्रधानस्य । स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो । प्रब्रूहि तं श्रद्दधानाय मह्यमित्यग्निविषयः प्रश्नः । येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय इति जीवविषयः । अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद । इति परमात्मविषयः । उत्तरमपि लोकादिमग्निं तमुवाचेत्याद्यग्निविषयकम् । हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्याऽऽत्मा भवति गौतमेत्यादि जीवविषयम् । न जायते म्रियते वा विपश्चिदित्यादीशविषयकमिति कश्चित् ॥ ७ ॥

ॐ महद्वच्च ॐ ॥ १ । ४ । ८ ॥

महच्छब्दो यथा महत्तत्त्वे प्रसिद्धोऽपि बुद्धेरात्मा महान्परः । महान्तं विभुमात्मानम् । वेदाहमेतं पुरुषं महान्तम् । इति परममहत्त्वेन परमात्मपरः । तथाऽव्यक्तादयो हि शब्दाः ॥ ८ ॥

ॐ चमसवदविशेषात् ॐ ॥ १ । ४ । ९ ॥

चमसशब्दो यज्ञपात्रे प्रसिद्धोऽपीदं तच्छिर एष ह्यर्वाग्बिलं चमस ऊर्ध्वबुध्न इति श्रुत्या यथा शिरोवाचकस्तथाऽव्यक्तादिशब्दा अन्यत्र प्रसिद्धा अपि 'नामानि सर्वाणि यमाविंशन्तीत्यादिश्रुतेः' वेदैश्च सर्वैरहमेव वेद्य इत्यादिस्मृतेश्च विष्णुवाचकाः । अयमत्र निष्कर्षः । स्वातन्त्र्यमेव प्रवृत्तिनिमित्तं तच्च नियामकत्वे सति तदाश्रयत्वप्रयुक्तनीचत्वायोग्यत्वम् । भृत्यादिगतदुःखादिकं प्रति राज्ञो न स्वातन्त्र्यं तदाश्रयत्वप्रयुक्तनीचत्वयोग्यत्वात् । ब्रह्मणस्तु तदयोग्यत्वादस्ति तत्प्रत्यपि स्वातन्त्र्यम् । इन्द्रादीशनिमित्तैश्वर्यं प्रति तु ब्रह्मण आश्रयत्वयोग्यत्वेऽपि तस्य नीचत्वाप्रयोजकत्वादस्ति तत्प्रत्यपि तत् । आश्रयत्वमात्रं तु न नियामकम् । दण्डरूपाद्याश्रये कालादौ रूपीत्याद्यव्यवहारात् । यद्वा स्वगतत्वयोग्यत्वे सति यद्दोषत्वं तद्रहितमनिमित्तम् । कार्यबलेन तथा कल्पनात् । एवं च जयादेर्बन्धनादेश्च राजगतत्वयोग्यत्वेऽपि जयादेर्दोषराहित्यात्तत्प्रति स्वातन्त्र्यं बन्धनादेश्च दोषत्वान्न तत्प्रति । ब्रह्मणि त्विन्द्रादिशब्दनिमित्तैश्वर्यादेः स्वगतत्वयोग्यत्वेऽपि दोषराहित्याद्बन्धनादेर्दोषत्वेऽपि स्वगतत्वयोग्यत्वराहित्यादुभयं प्रति स्वातन्त्र्यं निमित्तम् । सर्वस्य तदधीनत्वात्सर्वशब्दाभिधेयतेत्यादिस्मृतेश्च ॥९॥

ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १ । ४ । १० ॥

अत्र कर्मक्रमादिलोपप्रसङ्गेन कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिसर्वशब्दानां समन्वयसमर्थनादस्ति संगतिः । अत्र ज्योतिरादिपदवाच्यं ब्रह्मान्यद्वेति चिन्ता । तत्र सर्वगुणपूर्तये सर्वशब्दानां ब्रह्मणि समन्वय इत्युक्तं समन्वयसूत्रे तन्न युक्तम् । 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वाक्यस्थानां ज्योतिरादिशब्दानां ज्योतिष्टोमादिकर्मण्येव प्रसिद्धेः । प्रसिद्धत्यागेनाप्रसिद्धपरत्वे चान्यस्य कर्मतदङ्गतत्क्रमदेशकालाधिकार्यादिप्रापकस्याभावेन नियतं कर्मानुष्ठानं न सिध्येदिति प्राप्ते । ज्योतिरादिसर्वशब्दमुख्यार्थो हरिरेव । यत एके शाखिनः—तं यच्छतं वर्षाण्यर्चेत् । तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षते । एतमेव सन्तं स इदं सर्वमध्यतो दधे । यदिदं किंच । तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षते । एतमेव सन्तमित्यादिनोपक्रम्य—ता वा एताः सर्वा ऋचः सर्वे वेदाः

सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यादित्यन्तेन शतर्चिनः शतर्चिन इति सर्वशब्दाभिधेयत्वेन हरिरेवाभिधीयते। न चैषां हरौ वृत्त्यभावः। एष इमं लोकमभ्यार्चदित्यादिना शतर्चादिपदानां भगवति योगोक्तेः। या एता ऋचः सर्वे वेदाः समुद्रादिघोषा एकैव व्याहृतिः। तत्प्रतिपाद्य एकः परमात्मेत्यर्थः॥ १०॥

नन्वेवं कर्मविरोध इति शङ्कां परिहरति—

**ॐ कल्पनोपदेशाच्च ॐ॥ १। ४। ११॥**

मध्वादिवदविरोधः। यथाऽऽदित्यादौ लोकक्लृप्तरूढिमनिवार्यैवासावादित्यो मध्वित्यादावुपासनार्थं मध्वादिपदानां महायोगादिना भगवत्परत्वोपदेशान्न विरोधस्तथा महायोगादिना ज्योतिरादिपदानां हरिपरत्वेऽप्यविरोधः। अ इति ब्रह्मेति ब्रह्मवाचितयोक्तेऽकारेण सह सर्वशब्दानां समानार्थत्वस्य, अकारो वै सर्वा वागिति श्रुत्योक्तेश्च। सृजतोऽनुवर्तन्ते नैवासृजतः कं वा विदधते कं वा निषेधन्ति स्तुतिमात्रमेव ते स्युरिति श्रुतौ विध्यादिभागस्यापि प्रलये स्तुतित्वोक्तेश्च। यद्वै किंच तदध्यगीष्ट नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इत्यादौ नामैवैतदित्यन्ते छान्दोग्ये सर्ववैदिकशब्दानां भगवन्नामत्वोक्तेश्च। तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके। अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पना॥ तत्रापि परमो मुख्यो वाच्योऽशेषै रवैर्हरिः। तत्तन्मुख्याविरोधेन तदन्यार्थस्य संग्रहः॥ वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः। तावन्ति हरिनामानि कीर्तितानि न संशयः॥ इति स्मृतेः। न च कर्मविधायकेन यजेतेत्यनेनैकवाक्यतामापन्नस्य ज्योतिरादिशब्दस्य तत आच्छिद्य ब्रह्मपरत्वायोगः। सुबामन्त्रिते सह सुपेत्यादौ च सुबित्यादिः सुपेत्यादिनैकवाक्यतामापन्नस्यानुव्यचलदित्यादौ तिङन्तेन सह समासविधायकत्वदर्शनात्॥ ११॥

**ॐ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॐ॥ १। ४। १२॥**

अत्राऽऽधाराधेयत्वादिलिङ्गेनान्यत्रैव प्रसिद्धानां पञ्चजनादिशब्दानां हरौ समन्वयप्रतिपादनादस्ति संगतिः। यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित इति बृहदारण्यकस्थपञ्चजनादिशब्दवाच्यं ब्रह्मान्यद्वेति चिन्ता।

तत्र न पञ्चजनादिपदवाच्यं ब्रह्म । तेषां बहुत्वविशिष्टवाचित्वात् । बहुत्वस्याद्वितीये ब्रह्मण्यभावात् । नन्वन्यगतबहुत्वस्य ब्रह्माधीनत्वादित्युक्तन्यायेन तत्र शब्दवृत्तिरस्तु । न च वशीकृतबहुजने राज्ञि तथा प्रयोगो न दृष्ट इति वाच्यम् । तत्र बहुत्वस्य राजानधीनत्वात् । अक्षरादिशब्दवदन्यत्रादर्शनेऽपि ब्रह्मणि संभवाच्च । तस्मात् पूर्वपक्षोदय इति चेत्र । यथा ज्योतिरुपक्रमादिति पूर्वोक्तादृसमन्वये स्थित एवेह वाक्यसमन्वयः संभवति न वेति विचारः । यथा वा ज्योतिरुपक्रमादित्यत्र तद्धीनत्वन्याये स्थित एव गुणपूर्त्यर्थं पदस्य समन्वयविचारः । तथा तदधीनत्वन्याये स्थित एव तमाच्छाद्य ब्रह्मणि बहुत्वाद्यभिन्न न वेतीह विचारादिति प्राप्ते । पञ्चजनाकाशादिशब्दवाच्यो हरिरेव । भगवतोऽनन्तस्यापि पादाधिकरणन्यायेनैकस्मिन्बहुत्वोपपत्तिः । यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित इत्यादिषु बहुत्वसंख्योपसंग्रहेऽपि न विरोधः । तस्याऽऽकाशादिषु नियामकरूपेणान्तर्भावात् । मूलरूपेणातिरिक्तत्वाच्च । यथा महान्ति भूतानि भूतेभ्यस्त्वहमेव चेत्यत्र । प्रविष्टानि तथा तेषु न तेष्वहमिति स्मृतेरिति सूत्रार्थः ॥ १२ ॥

ननु बहुत्वोपपत्तावप्याधाराधेयभावसंभवेन न तदाश्रयत्वं हरेरिति शङ्कां परिहरति—

ॐ प्राणादयो वाक्यशेषात् ॐ ॥ १ । ४ । १३ ॥

प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन इति वाक्यशेषात् । प्राणादीनां प्राणदत्वलिङ्गस्य भगवति सत्त्वेन स एव वाच्यः । आधाराधेयभावस्त्वभेदेऽपि संभवति । कालः सदाऽस्ति देशः सर्वत्रास्ति घटाभावे घटो नास्ति प्रमेयत्वेऽप्रमेयत्वमित्यादिवत् । किंच वस्तुवस्तु यावन्ति नियम्यानि नियामकत्ववद्रूपाण्यपि तावन्तीति शरीरगतप्राणादिपञ्चकनियामकरूपेषु पञ्चत्वं तथा तद्गताकाशनियामकरूपस्य षष्ठत्वादाकाशश्चेति समुच्चय आधारभूतशरीरनियामकरूपस्याऽऽधेयभूतप्राणादिनियामकरूपेभ्यो भिन्नत्वेन तानि प्राणाधारत्वं च युक्तम् ॥ १३ ॥

ननु वाक्यशेषोक्तानां प्राणादीनां विष्णुत्वेऽपि न पञ्चजनानां विष्णुत्वं वाक्यशेषे चतुर्णामेवोक्तेरिति शङ्कां परिहरति—

ॐ ज्योतिषैकेषामसत्यन्ने ॥ १ । ४ । १४ ॥

येषामन्नपदं नास्ति ते काण्वादयो दूरस्थेनापि ज्योतिषां पञ्चत्वं वद-न्तीत्यर्थः । माध्यंदिनानां पञ्चजनानामप्युक्तिः काण्वानां यस्मादर्वाक्सं-वत्सरोऽहोभिः परिवर्तते तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति किंचिद्दूरोक्तेन ज्योतिषां ज्योतिषा पञ्चत्वसंभवात् । यत्तु यस्मिन्नित्यत्र समस्तेन पञ्चजनशब्देनोक्तानां समाहाराणां समस्तेन पञ्चशब्देन पञ्चसंख्या-न्वयः प्रतीयते । एवं पञ्चपञ्चकाः पञ्चविंशतिः संपद्यते । तस्मात्पञ्च-विंशतितत्त्वानामुपसंग्रहादिति प्राप्ते । न संख्योपसंग्रहादपि प्रधाना-दीनां श्रुतिमत्त्वम् । कस्मान्नानाभावात् । नाना ह्येतानि पञ्चविंशतित-त्त्वानि । नैषां पञ्चशः पञ्चशः साधारणधर्मोऽस्ति । येन पञ्चविंशति-रन्तराले पञ्चसंख्या निविशेरन् । अतिरेकाच्च । आत्माकाशाभ्यां संख्याया अतिरेकादात्मनो हि पञ्चविंशतान्तर्भावे यस्मिन्नित्यधिकरणोक्तिविरोधः । आकाशस्य तु पृथगुक्तिविरोध इति सिद्धान्त इति । तन्न । श्रुति-स्मृतिसिद्धतत्त्वानां वैदिकेनापह्नवस्य कर्तुमशक्यत्वात् । किंच पञ्चविंश-तितत्त्वान्येवाप्रामाणिकान्युतैतद्वाक्यप्रतिपाद्यानि । नाऽऽद्यः । तं षड्विंश-मिति प्राहुरिति । तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति । महानव्यक्ते लीयत इति । पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्विंश-तिकं गणं प्राधानिकं विदुः । इत्यादिस्मृतिभिश्च पञ्चविंशतितत्त्वानां प्रति-पादनात् । नान्त्यः । अस्मद्विरोधात्तेषामसिद्धेश्च । यत्तु नानाभावादिति । तन्न । पृथिव्यादिषु भूतत्वस्य, शब्दादौ तन्मात्रत्वस्य, घ्राणादिषु ज्ञानेन्द्रिय-त्वस्य, वागादिषु कर्मेन्द्रियत्वस्य, महदहंकारप्रकृतिपुरुषेषूक्तविंशत्यन्यत्वस्यो-पसंग्राहकस्य सत्त्वात् ॥ १४ ॥

**ॐ कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥१।४।१५॥**

अत्रोत्पत्त्यादिलिङ्गेनान्यत्रैव प्रसिद्धानामाकाशादिशब्दानां विष्णौ सम-न्वयसमर्थनादस्ति संगतिः । तैत्तिरीये श्रूयते—आत्मन आकाशः संभूतः । आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्य औषधय ओषधीभ्योऽन्नमन्नात्पुरुष इति । अत्राऽऽकाशादिशब्दा अन्यपरा ब्रह्मपरा वेति चिन्ता । तत्र नाऽऽकाशादिशब्दा ब्रह्मपराः । अकार्ये तस्मिन्कार्यत्वायोगात् । व्यङ्ग्यव्यञ्जकभावस्याप्येकस्मि-न्विरोधादिति प्राप्ते । आकाशादिष्ववान्तरकारणत्वेन कार्यत्वेन च स एव स्थितः । यथाव्यपदिष्टस्यैव परेशस्य य आकाशे तिष्ठन्नित्यादि-

नाऽऽकाशादिषूक्तेरित्यर्थः । आकाशादिशब्दानां ब्रह्मपरत्वेन तावत्साधकान्तरं वाच्यम् । तदधीनत्वात् । ज्ञेयत्वावचनाच्च । चमसवदविशेषादित्यादिभिरेव सिद्धेः । नापि कार्यत्वं बाधकम् । आविर्भावलक्षणोत्पत्तेरुक्तत्वात् । नाप्येकस्यैव कार्यकारणभावानुपपत्तिः । आकाशादिगतत्वेनाभिव्यक्तभगवद्रूपात् । वाय्वादिगतभगवद्रूपान्तराभिव्यक्तेर्व्यङ्ग्यव्यञ्जकभावरूपस्य कार्यकारणभावस्य बहुरूपत्वादुपपत्तेः । चशब्दो न केवलमात्मशब्दवाच्यो हरिरपि त्वाकाशादिशब्दवाच्यश्च । यद्वा—न केवलं कारणत्वेन किंतु कार्यत्वेन चेत्यर्थ इति व्याख्येयः । एवं च कार्यत्वे सति कारणत्वरूपावान्तरकारणत्वमपि सिद्धं हरेः । यथाव्यपदिष्टशब्दस्त्वन्तर्याम्यधिकरणोक्तन्यायस्मरणार्थः । यत्तु वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते क्वचित्तत्तेजोऽसृजदिति तेजआदिकेति विरोध इति प्राप्ते । कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानं कारणे तु न विगानम् । कुतः । यथाव्यपदिष्टोक्तेः । यथा हि क्वचिच्चेतनः कारणत्वेन व्यपदिष्टः—सोऽकामयत बहु स्यामिति । तथैव तदैक्षत ।·तत्तेजोऽसृजतेति क्वचिदुक्त इति । तन्न । आकाशादिष्वित्यस्यान्वयार्थं सृष्टिक्रमादिद्वारकविगानशब्दस्याध्याहार्यत्वात् । अध्यायासंगतेश्च ॥ १५ ॥

**ॐ समाकर्षात् ॐ ॥ १ । ४ । १६ ॥**

अत्र चोक्तन्यायैर्ब्रह्मणि कल्पनोपदेशादिति न्यायेन चान्यत्रापि मुख्यत्वे सिद्धेऽपि मुख्यता किमक्षादिशब्दवदुभयत्रापि तुल्या किंवा ब्रह्मण्यधिकाऽन्यत्र तु हीनेति चिन्ता । तत्र हीनत्वे तु मुख्यवृत्तित्वं न स्यादन्यथा लक्षणादिरपि मुख्यवृत्तिः स्यादिति प्राप्ते । यथा हि मुख्ययोर्योगरूढोऽर्थो यद्वदमुख्ययोर्गौणलक्षणयोर्भेदस्तथा रूढयोश्च योगयोः । उचितं प्राज्ञरूढेर्हि प्राबल्यं मुख्यरूढितः । उत्कर्षाच्च निमित्तस्य युक्तो नैमित्तिकस्य स इति ।. रूढित्वेऽपि विद्वदविद्वद्रूढयोर्योगत्वेऽपि महायोगयोस्तारतम्यं युक्तम् ॥ १६ ॥

ननु तेषां शब्दानां जगत्यन्यत्रैव प्रसिद्धेर्न हरौ समन्वय इत्यत आह—

**ॐ जगद्वाचित्वात् ॐ ॥ १ । ४ । १७ ॥**

लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तच्छ्रोतॄणां व्युत्पत्तेः परेशे

बहुलव्यवहाराभावेन व्युत्पत्त्यभावाज्जगति प्रसिद्धेरन्यथोपपत्तेः। अग्निर्माणवक इति व्यवहारोऽग्निशब्दमुख्यार्थस्य पुंसो माणवकेऽग्निशब्दे व्युत्पत्तिवद् ब्रह्मणि व्युत्पत्तिमजानतां जगत्येव व्युत्पत्तिसंभवादिति भावः॥ १७ ॥

**ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ॥१।४।१८॥**

तदधीनत्वात्तच्छब्दवाच्यमित्युक्तम्। तज्जीवमुख्यप्राणयोर्लिङ्गम्। अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति। वायुना हि सर्वे लोका नेनीयन्त इति चेन्नोपासात्रैविध्यादित्यत्र तदन्तर्यामिसंबन्धितया व्याख्यातत्वादित्यर्थः॥ १८ ॥

ननु वैदिकशब्दानामन्यत्र समाकर्षे प्रयोजनाभावान्मुख्यत एवान्यवाचकत्वमिति शङ्कां परिहरति—

**ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १ । ४ । १९ ॥**

समाकर्षेण वेदः कर्मादिकमपि वदतीति युक्तमेव कर्मादिज्ञानस्यापि भगवद्ज्ञानार्थत्वादिति जैमिनिर्वक्ति। कुत एतदिति चेन्न। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति तस्मै स होवाच द्वे विद्ये वेदितव्ये। कथं नु भगवः स आदेशो भवति यथा सौम्यैकेन मृत्पिण्डेन' इत्यादिप्रश्नव्याख्यानाभ्यां सर्वमिदं कर्मादिकं कस्मिन्विज्ञाते विज्ञातं भवति ज्ञातस्याप्यस्य फलं कस्मिन् ज्ञाते भवति। एतज्ज्ञानमात्रस्य निष्फलत्वादिति शौनकप्रश्ने सर्वमपरविद्यया विज्ञातं भवति विज्ञानं परविद्ययेति परविद्याविषयपरमात्मज्ञाने सफलं भवत्यतो द्वे विद्ये वेदितव्ये इत्यङ्गिरसो व्याख्यानात्। तथा यस्मिन्परमात्मनि ज्ञाते सर्वं कर्मादिकं ज्ञातमपि सफलं स्यात्तद्विषय उपदेशः कथं स्यात्तं प्रकारं कथमहं जानीयामिति श्वेतकेतुप्रश्ने यथैकेन मृत्पिण्डेन ज्ञानेन ज्ञातमपि घटादिकं ज्ञानफलं भवति मृत्त्वेन विशेषज्ञानात्। एवं परमात्मनि विज्ञाते सर्वं ज्ञानफलं भवतीत्युद्दालकव्याख्यानात्। अन्यज्ञानस्य परमार्थज्ञानार्थत्वं ज्ञायत इत्यर्थः। स्पष्टमेके शाखिनः—यदक्षरं यो न वेद स कर्मादिविषयर्चा किं करिष्यति यतः सर्वा ऋचः परमे व्योमन्यक्षर इति तज्ज्ञानार्थमेव कर्मादिकं वदन्ति॥ १९ ॥

नन्वपकर्षे प्रयोजनाभाव इत्यत आह—

ॐ वाक्यान्वयात् ॐ ॥ १ । ४ । २० ॥

यद्यप्यन्यावचनेऽपीशज्ञानं भवति तथाऽपि यद्वाऽन्वय एव नु स्यात् । अन्यस्य वचने तु वाक्यान्वयो भवति ॥ २० ॥

वाक्यान्वयो हि पृथक्पृथगर्थेषु वाचकत्वया स्थितो ह्यस्याप्यस्मिन् भगवत्परत्वं कथमित्याकाङ्क्षायामाह—

ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ १ । ४ । २१ ॥

नान्यः पन्था विद्यतेऽयनायेति ज्ञानादेव मोक्ष इति प्रतिज्ञातं कुतो ज्ञानमित्याकाङ्क्षायां तत्प्रतिज्ञासिद्ध्यर्थं हेतुत्वेन सपरिकरं कर्मोच्यतेऽतः कर्मज्ञानमवश्यं संपाद्यमित्येवमाकारेण कर्मादिवचनस्य ज्ञानोपयोगित्वमित्याश्मरथ्याचार्यो वक्ति ॥ २१ ॥

युक्त्यन्तरमाह—

ॐ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॐ ॥ १ । ४ । २२ ॥

मोक्षार्थं ज्ञानमेवावश्यमिति सिद्धे तत्केन साधनेन सिध्यतीत्यपेक्षायां कर्मादिकमुच्यत इति । उत्क्रमिष्यतो ज्ञानेन मोक्षमिच्छतः कर्मादरः कर्तव्य इत्यौडुलोमिराचार्यो मन्यते ॥ २२ ॥

रीत्यन्तरेण कर्मवचनस्य ज्ञानोपयोगं दर्शयति—

ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ १ । ४ । २३ ॥

कर्मसाध्यज्ञानान्मुक्तिरिति सिद्धे कथं ज्ञातव्यो हरिरित्याकाङ्क्षायां सर्वं कर्मादि तत्रेशे स्थितं सर्वाधारत्वादिना ज्ञातव्य इत्येष सेतुर्विधरण इत्याद्युक्ताधारत्वसिद्ध्यर्थमाधेयादिरूपं कर्मादि वेदेनोच्यते । इति ज्ञानोपयोगित्वमन्यत्र च तस्य काशकृत्स्नाचार्यो वक्ति । यच्चोक्तं परैर्ब्रह्मपरद्रष्टव्यादिवाक्ये जीवोपक्रमो जीवब्रह्माभिधाभिप्रायेण तत्र च मतत्रयं जीवो ब्रह्मविकारतया भिन्नाभिन्नः । अभिन्नत्वे चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धिर्लिङ्गम् । न हि जीवस्य ब्रह्मणोऽत्यन्तभेदे तज्ज्ञानेन जीवज्ञानमित्याश्मरथ्यमतम् । संसारे भिन्नस्य जीवस्योत्क्रान्त्यनन्तरं मुक्तावेवैकभावो ब्रह्मभावः । तथा च काल्पनिकोऽभेदस्तु सत्य इति काशकृत्स्नमतमिति । तन्न । जीवोपक्रमस्यैवाभावात् । श्रुतौ हि का मियेति चतुर्थी-

प्रत्ययेन तृतीयार्थेऽस्मिन्नेव प्रकरणे जायायै का प्रियेत्यत्र जायाया इति चतुर्थ्याव्यत्ययदर्शनात् । एवं च जायादीन्प्रति यज्ञादीनामहं प्रियः स्यामितीच्छया न प्रियत्वं किंतु परेच्छयैवेत्यर्थः । द्युभ्वाधिकरणन्यायेनाऽऽत्मशब्दस्येशे मुख्यत्वात् । निर्णीतोपसंहारानुरोधादुपक्रमस्य व्याख्येयत्वाच्च । पत्यादीनां स्वीयत्वेन प्रियत्वात्स्वयमेव निरुपाधिकप्रिय इति परोक्ताङ्गीकारे दुःखादेरपि स्वीयत्वेनैव वाऽप्रियत्वात्स्वयं निरुपाधिकाप्रियः स्यात् । किंचाऽऽत्मपदस्य स्वयमर्थ[नि]र्णयत्वे संबन्धित्वेन निरुपाधिकप्रियत्वानुपपत्तेः । आत्मत्वेनवाङ्गीकारे तु जीवोपक्रमेऽप्युपसंहारे चेशाङ्गीकारे क्षतेरभावात् । श्रवणादावात्मत्वेनैव सत्पक्षसिद्धजीवातिरिक्त ईशो भासतेऽन्यथा श्रवणादिवैयर्थ्यापत्तेः । तृतीयसूत्रे ब्रह्मणि जगतोऽवस्थितेरित्यस्मद्योजनेनैव युक्ताभावेनावस्थितेरिति । परोक्तास्थितेरिति हि कुत्रेत्याकाङ्क्षापत्तेः ॥ २३ ॥

ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ १ । ४ । २४ ॥

अत्र स्त्रीलिङ्गत्वलिङ्गेनान्यत्र प्रसिद्धानां विष्णौ समन्वयसमर्थनादस्ति संगतिः । अत्र प्रकृत्यादिशब्दा अन्यवाचका उत विष्णुवाचका इति चिन्ता । तत्र—एषा ह्येव प्रकृतिरविकृतिरित्यादिवाक्यस्य प्रकृत्यादिवाच्यो न विष्णुः । तेषामन्यत्र प्रसिद्धत्वात्स्त्रीलिङ्गत्वादिति प्राप्ते । स्वदेहस्थप्राणिनां हेतुत्वं स्त्रीत्वमुच्यते । नचास्ति ब्रह्मणस्तस्माच्छब्दास्तस्य वाचकाः । प्रकर्षेण करोतीति प्रकृतिर्हरिरित्यर्थः । हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि सर्वाणि पुरुषमभिविशन्तीति प्रतिज्ञादृष्टान्तानुपरोधात् ॥२४॥

युक्त्यन्तरमाह—

ॐ अभिध्योपदेशात ॐ ॥ १ । ४ । २५ ॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति श्रुतौ, प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यत इति स्मृतौ च तदिच्छाया मायाप्रकृतिपदवाच्यत्वोपदेशात् । संभवाम्यात्ममाययेति स्मृत्या मायाशब्दस्येच्छार्थत्वोक्तेः । अभिध्यायतीत्याभिध्यानस्वरूपमित्यर्थः ॥ २५ ॥

नन्विच्छाद्वारैव प्रकृतिपदवाच्यता न तु साक्षादिति शङ्कां परिहरति—

ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ १ । ४ । २६ ॥

एष स्त्र्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोक इतीच्छामद्वारीकृत्य साक्षात्स्त्रीपुरुषपदवाच्यत्वाम्नानात् ॥ २६ ॥

न हि संकेतमात्रं तदित्याह—

**ॐ आत्मकृतेः परिणामात् ॐ ॥ १ । ४ । २७ ॥**

एकोऽहं बहु स्यां तदनुप्रविश्य सच्च त्यच्चाभवदित्याद्यनुसारेण प्रकृत्यादौ प्रविश्य तां परिणमय्य तत्परिणामकत्वात्तत्र स्थित्वाऽऽत्मनो बहुधाकरणात्प्रकृतिवाच्यो हरिः । 'अविकारोऽपि परमः प्रकृतिं च विकारिणीम् । अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ॥ इति नारदीयोक्तेः ॥ २७ ॥

ननु परमात्मनः प्रकृतिपदवाच्यत्वं तस्य लिङ्गत्वादिति शङ्कां परिहरति—

**ॐ योनिश्च हि गीयते ॐ ॥ १ । ४ । २८ ॥**

अव्यवधानेन कार्योत्पत्तिहेतुत्वं प्रकृतित्वं तच्चास्यैव गीयते । यद्भूतयोनिं परिपश्यन्ति धीरा इति विष्णुरेवाशेषस्त्रीशब्दवाच्य इति सिद्धम् । यत्तु न केवलं ब्रह्म जगत्कर्त्रेव किंतु प्रकृतिश्चोपादानमपि । एवं च येनाश्रुतं श्रुतं भवतीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्तस्य वाऽनुपरोधो भवतीति सूत्रार्थ इति । तन्न । प्रकृतिशब्दसमन्वयत्यागेन प्रकृतित्वव्युत्पादकत्व आकाशस्तल्लिङ्गादित्यादेरप्याकाशत्वादिव्युत्पादनपरत्वापत्तेः । विवर्तवादिनोऽधिष्ठानतत्त्वज्ञानेनाध्यस्तस्य नाशेन प्रतिज्ञाया असंभवाद्दृष्टान्तोऽप्यसिद्धः । न हि घटो मृद्यध्यस्तः । यत्तु ब्रह्मण्येवोत्पत्तिलयाम्नानाद्ब्रह्मैवोपादानमिति । तन्न श्रुत्यादौ रजतादेर्लयाद्यदर्शनान्निमित्तनाऽऽदौ लयदर्शनाच्च ॥ २८ ॥

**ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ १ । ४ । २९ ॥**

अत्र निषेधमुखत्वादिनाऽन्यत्र प्रसिद्धासदादिशब्दानां समन्वयकथनादस्ति संगतिः । अत्रासदादिपदवाच्योऽन्य उत विष्णुरिति चिन्ता । तत्राव्यधानेन हेतुत्वं प्रकृतित्वं ब्रह्मणि युक्तं रूपाहानेः । न तु निषेध्यत्वादिरूपत्वं रूपहान्यापत्तेरिति प्राप्ते । अस्त्येव तेषां ब्रह्मपरत्वम् । एष ह्येव शून्यः । तोदनाच्छादनाच्च तुच्छः । भावयितुं न योग्य इत्यभावः । नाश्यत्वादभक्ष्यत्वान्नाशः । एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेनावधारणार्थं सर्वस्यायुक्तस्याध्यात्मसूत्रतो

द्विरुक्तिं कुर्वते प्राज्ञाः । अध्यायान्ते विनिर्णय इति । अतोऽसदादिशब्दवाच्यत्वस्य हरेरुपपन्नत्वाद्युक्तमशेषस्वरवर्णपदवाक्यात्मकं शास्त्रयोनित्वम् । ततो जगज्जन्मादिकर्तृत्वं मुख्यानन्तगुणत्वं सिद्धम् ॥ २९ ॥

इति श्रीवेदान्तसिद्धान्तमुक्तावल्यां वनमालिविरचितायां प्रथमाध्यायस्य चतुर्थः पादः ॥

प्रथमाध्यायः समाप्तः ॥

---

## अथ द्वितीयोऽध्यायः ।

महाभूतानि यद्योगाद्विरोधं सर्गकर्मणि ।
जहति स्वं हयास्यं तं वन्देऽनन्तं गुणालयम् ॥ १ ॥

सिद्धः समन्वयो यासां श्रुतीनां हयकंधरे ।
अविरोधोऽधुना तासां सद्गुणार्णव उच्यते ॥ २ ॥

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न । अन्यस्मृत्यनवकाशदोषप्रसङ्गात् । पूर्वोक्तसमन्वयेऽनेन विरोधः परिह्रियत इत्यध्याययोर्हेतुहेतुमद्भावसंगतिः । समन्वयाक्षेपसमाधानार्थत्वात्तत्र तदानन्तर्यमुक्तम् । युक्तिभिः समयैः शुद्धवेदैर्युक्त्युपबृंहितैः । वेदैश्चाप्यविरोधोऽत्र क्रमात्पादेषु कीर्त्यते । अत्रानुमानमात्रस्य कामचारत्वेनातिदुर्बलत्वात्समयानां च वेदवदकामचारत्वेऽप्यतिदीर्घेण बहुजनपरिगृहीतत्वेऽपि पौरुषेयतया शङ्कितदोषत्वेन दुर्बलत्वाच्छ्रुतिमात्रस्य समयाद्बलवत्त्वेऽपि सोपपत्तिश्रुतिवत्प्रबलत्वाभावात्पदात्यादिभङ्गानन्तरमेवाश्ववारादिवदनुमानानन्तरमेव विरोधिसमयादेः प्रवृत्तेः पादक्रमः । अत्र च लौकिकार्थविषयाप्तवाक्यरूपस्मृत्याविरोध उच्यते । न च स्मृत्यविरोधस्य युक्तिपादे कथनमनुचितम् । पाशुपतादिस्मृतीनां समयत्वेन स्वोक्तार्थे संमतित्वेन श्रुतियुक्तिकथनेन चतुःस्वरूपत्वात्तदविरोधस्यैकैकाविरोधप्रतिपादके पादविशेषेऽनन्तर्भावेऽप्यविरोधाध्यायान्तर्भावेनाध्यायस्याऽऽदावन्ते वा निवेशे कर्तव्ये प्रथमातिक्रमे कारणाभावाच्चतुरात्मकत्वेन प्रबलतया प्रथमं निरसनीयत्वाच्चाध्यायादावेव निवेशः । अत्र पूर्वोक्ते विष्णोः कारणत्वादौ श्रुतिसमन्वयो युक्तो न युक्तो वेति चिन्ता । तत्र न

युक्तं शिवादेः कारणत्वप्रतिपादकशैवागमादिविरोधात् । न च षोडशिग्रहणाग्रहणवद्विकल्पः । पुंतन्त्रेऽनुष्ठेये तत्संभवेऽपि तद्वतन्त्रे सिद्धे वस्तुनि तदयोगात् । न च विरोधाधिकरणन्यायेन स्मृतेरेवाप्रामाण्यम् । वाक्यस्य प्रामाण्यं प्रत्याप्तमूलत्वात्समूलानुसारेण निर्मूलस्य नेयत्वादन्यथा तासां स्मृतीनामनवकाशेनाप्रामाण्यलक्षणदोषप्रसङ्ग इति प्राप्ते । विष्णोरेव सकलस्मृतिसिद्धजगज्जन्मादिकारणत्वम् । परमसर्वज्ञाप्तश्रीनारायणप्रणीतपञ्चरात्राद्युपबृंहितश्रुतिविरोधात्पाशुपतकपिलादीनामप्रामाण्यत्वात् । अन्यथा श्रीनारायणैकनिष्ठकारणत्वबोधकस्मृतीनामनवकाशोऽप्रामाण्यं स्यात् । तथा हि—तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम । अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते । न च स नारायण इत्यत्र किं मानम् । अतश्च संक्षेपमिमं शृणु त्वं नारायणः सर्वमिदं पुराणः । स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः । अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति । तथा रुद्रं प्रति ब्रह्मणा—बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः । एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपीति पुरुषानेकत्वविष्ण्वाधिक्ये सिद्धान्तत्वेनोच्यते । एतदेव प्रामाणिकम् । अतिक्रान्तमस्मदादिदृष्टपुरुषविलक्षणं वस्तु द्रष्टव्यं न तु सर्वसमानत्वेन ज्ञेयम् । उत्तरत्रापि—शृणु पुत्र यथा ह्येषः पुरुषः शाश्वतोऽव्ययः । न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम । ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् । महापुरुषशब्दं स बिभर्त्येकः सनातन इति। बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या। चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम्। चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः। प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर। श्रीपराशरोऽप्याह—प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः पुरुषोत्तमः । स विष्णुनामा वेदेषु वेदान्तेषु च गीयते । इत्याद्यनन्तस्मृत्युपबृंहितश्रुतिविरोधादप्रमाणं पाशुपतादिस्मृतिः । न च रुद्रादीनामपि क्वचित्पुराणेतिहासादौ च कारणत्वं श्रुतमस्तीति वाच्यम् । सात्त्विकेषु पुराणेष्वितिहासेषु च—को धर्मः सर्वधर्माणां भवतः परमो मतः। किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनादिति सामान्यतः प्रश्ने हि 'जगत्प्र-

भुं देवदेवमनन्तं पुरुषोत्तममित्यादि ' ' यतः सर्वाणि भूतानि प्रभवन्ति युगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ' इतिवद्रुद्रादिविषयकोत्तरस्यालीकत्वात् ॥ १ ॥

नन्वत्याप्तप्रणीतपाशुपतादिस्मृतेरप्रामाण्यं न युक्तमिति शङ्कां परिहरति—

ॐ इतरेषां चानुपलब्धेः ॐ ॥ २ । १ । २ ॥

तासु स्मृतिषूक्तानां दृष्टादितरेषां फलानामुक्तानुष्ठानपरित्यागयोः कृतयोरपि प्रत्यक्षतोऽनुपलब्धेस्तेषामाप्तत्वानिश्चयाद्यद्यपि विष्णुप्रणीतस्मृत्युक्तफलादिविसंवादस्तुल्यस्तथाऽपि ' सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति । एवंप्रकारममलं नित्यं व्यापकमव्ययम् । समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ' इत्यादिस्मृतिभिः सुहृत्त्वस्य हेयगुणराहित्यस्य चोक्तेराप्तत्वसिद्धेः । उक्तं हि भगवत्प्रणीतपञ्चरात्रस्य प्रमाणज्येष्ठत्वं महाभारते—इदं महोपनिषदं चतुर्वेदसमन्वितम् । सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् । नारायणमुखाद्गीतं नारदोऽश्रावयत्पुनः । ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् । ये चान्ये ब्रह्मसदने सिद्धसंघाः समागताः । तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम् । अस्मात्प्रचक्षते धर्मान् मनुः स्वायंभुवः स्वयम् । श्रीवाराहे—ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां तु तच्छ्रोत्रपदवीं नोपयास्यतीति । महाभारते—सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानाव्रतानि वै । पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम् । सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागमं यथान्यायम् । न चैनमभिजानन्ति तमोभूता विशांपते । तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः । निष्ठा नारायणमृषिमिति ॥ २ ॥

ननु नावैष्णवस्मृतीनां सर्वासामप्रामाण्यं योगस्मृत्युक्तफलाव्यभिचारेणाऽऽप्तप्रणीतत्वनिश्चयादिति शङ्कां परिहरति—

ॐ एतेन योगः प्रयुक्तः ॐ ॥ २ । १ । ३ ॥

तदुक्तफलानां स्वेदनगात्रभञ्जनादीनां प्रत्यक्षोपलब्धावपि प्रथमं स्वेदनं द्वितीयं गात्रभञ्जनमित्याद्युक्ताभ्यासावस्थोत्कर्षसंपत्तिकाल एव स्वेदनादीनामदृष्टेराप्तत्वानिश्चयात् । अतोऽवैदिकस्मृतीनामप्रामाण्यत्वाच्च श्रुत्युक्तविष्णोर्जगत्कर्तृत्वस्य तद्विरोध इति सिद्धम् ॥ ३ ॥

ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २ । १ । ४ ॥

अत्र विष्णोः कारणत्वे प्रमाणत्वेनोक्तवेदादिप्रामाण्यस्य युक्तिविरोधपरिहारादास्ति संगतिः । श्रुत्यादिः प्रमाणं न वेति चिन्ता । तत्र कारीर्या यजेत वृष्टिकाम इत्यादिश्रुतेः कारीर्याद्यनुष्ठानेऽपि वृष्टस्याद्याप्यविद्यमानाभिधायकत्वादप्रामाण्यं पाशुपतादिवदिति प्राप्ते । श्रुतेः पाशुपतादिस्मृतितो नित्यत्वेन वैलक्षण्यात्स्मृतेस्तन्मूलत्वेन वैलक्षण्याच्च पाशुपतादिवदप्रामाण्यम् । वाक्यप्रामाण्यं हि वक्तृदोषानिबन्धनम् । न हि नित्ये वेदे दोषाः कल्पयितुं शक्याः । तदनुकूलत्वात्स्मृतेरपि तत्सिद्धम् । तन्नित्यत्वं च वाचा विरूपयेति । अनादिनिधना नित्येति च शब्दादेव ॥ ४ ॥

ननु तदुक्तादर्शनाद्दुष्टत्वमिति शङ्कां परिहरति—

ॐ दृश्यते तु ॐ ॥ २ । १ । ५ ॥

फलादर्शनस्य कर्तुरन्योपपत्तेर्न श्रुतेरप्रामाण्यम् । न च पाशुपतादिस्मृतेरपि तथा स्यात् । वेदस्य निर्दोषत्वेन स्वतः प्रामाण्ये सिद्धेऽप्यभिचारस्य गत्यन्तरं हि कल्पनीयम् । पाशुपतादेः शङ्कितदोषत्वेन स्वतः प्रामाण्यासिद्धेः । फलमन्तरेण साधकाभावात् ॥ ५ ॥

ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ २ । १ । ६ ॥

अत्र पुनर्विष्णोः सर्वकर्तृत्वादिप्रतिपादकवेदप्रामाण्ये युक्तिविरोधपरिहारादस्ति संगतिः । पूर्वं युक्त्यविरोध उक्तोऽत्र दृष्टयुक्त्यविरोध उच्यते । मृदब्रवीदापोऽब्रुवन्नित्यादिश्रुतिर्न प्रमाणमुत प्रमाणम् । तत्राऽऽप ऐक्षन्त । तत्तेज ऐक्षत । ओषधयः संवदन्त इत्यादिना मृदादीनां वचनदर्शनाद्यभिधानादप्रामाण्यम् । न च तथात्वेऽपि कुतोऽप्रामाण्यम् । मृच्चव इति जडत्वादित्यादियुक्तिविरुद्धत्वेन मृदादेर्वचनाद्यसत्त्वात् । असदभिधायकत्वमेवाप्रामाण्यम् । एवं चैकदेशाप्रामाण्येनान्यस्याप्यप्रामाण्यमिति न विष्णोर्जगत्कारणत्वसिद्धिरिति प्राप्ते । मृदाद्यभिमानिदेवतानामेव वचनादिकर्तृत्वेन व्यपदेशः । न च प्रबलप्रमाणश्रुतिविरोधाद्युक्तिरेवानुमानमस्तु । प्रत्यक्षसहकृतसतर्कयुक्तेः प्रबलत्वान्मृदादिपदस्याभिमानिन्यामपि मुख्यत्वाच्च । ननु देवताः किमभिमान्यव्यापिन्यस्तदेकदेशवर्तिन्यो वा । आद्ये विग्रहवत्यो न वा । नाऽऽद्यः। उपलम्भप्रसङ्गात् । न द्वितीयः। वचनाद्ययोगात् । नान्त्यः । तद्रहितदेशवद्देशान्तरे च व्यवहारोपपत्तेः । तद्वैयर्थ्यमिति चेन्न । विशेषानुगतिभ्यां तासां विग्रहवत्त्वेऽनुगतत्वे च सत्यपि सामर्थ्यविशेषानुपलम्भोपपत्तेः ॥ ६ ॥

नन्वप्रामाणिकदेवतातत्सामर्थ्यापेक्षया वेदाप्रामाण्यमेव लब्धमिति शङ्कां परिहरति--

ॐ दृश्यते ॐ ॥ २ । १ । ७ ॥

महद्भिर्दृश्यते । भविष्यति पुराणे-पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः । अचिन्त्यशक्तयस्तासां दृश्यन्ते मुनिभिश्च ता इति ॥ ७ ॥

ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ २ । १ । ८ ॥

अत्र ब्रह्मणो जगत्कारणत्वे युक्तिविरोधस्य परिह्रियमाणत्वादस्ति संगतिः । श्रुत्यसहितयुक्तिविरोधे मृदादिशब्दानामन्यार्थतेति किमु वाच्यमिति पूर्वसिद्धान्तन्यायेन पूर्वपक्षोत्थानादनन्तरसंगतिरगतार्थता च । अत्र विष्णोर्जगत्कारणत्वं विरुद्धमुत नेति चिन्ता । न कारणत्वं विष्णोर्युक्तम् । असदेवेदमग्र आसीदित्यादिश्रुतिभिर्विश्वप्रागभावस्य कारणत्वाभिधानात् । घटं प्रति प्रागभावस्येव विश्वप्रागभावस्यानन्यथासिद्धनियतपूर्ववृत्तित्वाच्च । न च श्रुतिः शून्यपरा । असतः प्राक् सत्त्वरूपहेतुत्वायोगात् । एवं च सिद्धे प्रागभावस्य हेतुत्वे प्रागभावान्तरेऽदृष्टमपि विश्वप्रागभावस्य कर्तृत्वम् । विमता भावाः प्रलयेऽसन्तः भावत्वात्कार्यवदित्यनेन प्रलये भावमात्रासत्त्वसिद्धेः । कार्यस्य च सकर्तृकत्वनियमात्परिशेषात्सिध्यति । दृश्यते चाचेतनेऽपि कर्तरि विहिततृतीयादिरिति प्राप्ते । न प्रागभावः कर्तृप्रतिषेधमात्रत्वात् । ज्ञानचिकीर्षादिमात्ररूपं कर्तृत्वं विवक्षितं न तु वैयाकरणसिद्धपारिभाषिकम् । तच्च प्रागभावे संभवि । युक्तिस्तु विमतोत्पत्तिर्भावाधीना । उत्पत्तित्वात् । विमतो विनाशः सशेषो विनाशत्वात् । विमतः कालो भाववान् कालत्वादिति युक्तिविरुद्धा । असदेवेत्यादिश्रुतिस्तु सदेव सोम्येदमग्र आसीत् । एको नारायण आसीदित्यादिश्रुतिविरुद्धा ॥ ८ ॥

ननु सत्सु वैलक्षण्यवदसत्स्वपि वैलक्षण्योपपत्तिरिति शङ्कां परिहरति--

ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ २ । १ । ९ ॥

असतः सकाशाज्जगदुत्पत्तावभ्युपेतायां प्रलये सन्मात्रावशेषः स्यात् । कार्यनाशे कारणस्य मात्रावशेषनियमात् । अतोऽसमञ्जसमकारणमतम् ॥९॥

ननु प्रलयेऽसन्मात्रावशेषो दृष्ट एवेति शङ्कां निरस्यति--

ॐ न तु दृष्टान्तभावात् ॐ ॥ २ । १ । १० ॥

न प्रलये सर्वासत्त्वम् । तदा पदार्थसत्त्वस्यैव दृष्टान्तबलेन साधयितुं शक्यम् । प्रयोगस्तु विमतोऽसत्त्वादिनोक्तः ॥ १० ॥

न केवलं प्रामाणिकत्यागप्राप्त्या प्रलये सर्वासत्त्वमनिष्टमपि त्वप्रामाणिकत्वादित्याह—

ॐ स्वपक्षदोषाच्च ॐ ॥ २ । १ । ११ ॥

न प्रलये सर्वासत्त्वे प्रत्यक्षं वाऽऽगमः । अनुमाने तु किं प्रलयः सर्वासत्त्ववानिति साक्षाद्भवेत्परम्परया वा । नाद्यः प्रलये सर्वासत्त्वपक्षे दृष्टान्ताभावेनानुमानस्य दुष्टत्वाद्व्यतिरेकेऽतिप्रसङ्गः । द्वितीयेऽप्ययमेव दोषः ॥११॥

तर्केण सदसतोः साधनबाधने आक्षिप्य समाधत्ते—

ॐ तर्काप्रतिष्ठानादन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ २ । १ । १२ ॥

तर्कसिद्धं प्रति तर्केण दूषणीयमिति वदन्प्रष्टव्यः । किं प्रामाणिकमप्रामाणिकं वा प्रतितर्कं दूष्यम् । द्वितीयो(ये )युक्त एव । प्रथमे त्वेवंवादिनो मते मोक्षोऽस्ति न वा । नचेन्नासौ वादी । प्रयोजनान्तरस्य शास्त्रान्तरेणापि सिद्धेः । अस्ति चेत्किं विप्रतिपन्नं प्रत्यागमेनैव साध्यत उत तर्केण । नाऽऽद्यः । अनिर्मोक्षवादिनाऽऽगमप्रामाण्यानभ्युपगमात् । अतो द्वितीयपक्ष एवाऽऽश्रयणीयः । तथा च प्रामाणिकस्यापि तर्कसिद्धस्य प्रतितर्केण बाधे सोऽपि चार्वाकतर्केण बाधितः स्यादिति मतं व्यर्थमेव भवेत् । अतः प्रामाणिकमेव तर्केणाङ्गीकार्यं नाप्रामाणिकम् । प्रमाणसहकारी प्रतितर्कः प्रामाणिको न त्वप्रामाणिकः प्रामाणिकं बाधते ॥ १२ ॥

ननु माऽस्त्वसत्कारणत्वम् । तथाऽपि विष्णोः कारणत्वं विप्रतिपन्नम् । निष्कारणमचेतनकारणं जीवकारणं वा कूलपतनदध्यादिवदिति निष्कारणत्वादिसाधकयुक्तिविरोधादिति शङ्कां परिहरति—

ॐ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॐ ॥ २ । १ । १३ ॥

सकारणत्वादौ दृष्टान्तसत्त्वेन निष्कारणत्वादौ दृष्टान्ताभावेन च शिष्टैः पराशरादिभिः कारणत्वेनापरिगृहीता जीवजडादयो व्याख्याताः । अहेतुत्वेनेति शेषः । कूलपतनादीनामपि निष्कारणत्वादि न संमतमिति भावः । ननु जीवकर्तृकत्वे दृष्टान्ताभावः । कथं घटादीनां जीवकर्तृ-

त्वदर्शनादिति चेन्न । दुःखादिकार्येषु जीवस्य कर्तृत्वाभावेनाजीवकर्तृत्वे दृष्टान्तसत्त्वात् । घटादिष्वपि जीवस्य स्वातन्त्र्यासिद्धेः । असदादिश्रुतिस्तु ब्रह्मपरेत्युक्तम् ॥ १३ ॥

**ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ २ । १ । १४ ॥**

अत्रापीशकारणत्वे युक्तिविरोधपरिहारादस्ति संगतिः । अत्रेशस्य जगत्कर्तृत्वं युक्तिविरुद्धमुत नेति । तत्र कर्माणि विज्ञानमयश्चाऽऽत्मा परेऽव्यये सर्व एकी भवन्तीति श्रुतिषु भोक्तुर्जीवस्य ब्रह्मत्वापत्तेः श्रवणात् । अतस्तयोरविभागः । अतः पूर्वमपि स एव । नह्यन्यस्यान्यत्वं संभवति । तथा च जीवाभिन्नत्वात्तस्य कारणत्वं न युक्तमिति प्राप्ते । स्याल्लोकवत् । यथा लोक उदक उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येवैवं स्यादत्राप्येकीभूतत्वेनोक्तजलेऽन्तर्भेददर्शनेन व्यभिचारात् । ऐक्योक्तिस्तु स्थानैक्याद्यालम्बनत्वेन जलैकीभावोक्तिवदुपचारिता स्यादिति भावः । यथोदक शुद्धे शुद्धमासिक्तं तादृगेव भवत्येवं मुनेर्विजानत आत्मा भवति गौतमेति । न हि जलानां स्वरूपैक्यं वृद्ध्याद्यनापत्तेः । निरञ्जनः परमं साम्यमुपैतीति भेदश्रुतेः । अन्यथा हंसेन विविच्यमानक्षीरनीरयोरप्यभेदः स्यात् । द्रुतस्वर्णताम्रयोर्मेलनेनाभेदे तत्कार्ये पणादौ केवलस्वर्णादिकार्यपणाद् मूल्यादिभेदश्च न स्यात् । क्षीरे सिक्ता सुरा च क्षीरं स्यात् ॥ १४ ॥

**ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ २ । १ । १५ ॥**

अत्र हरेः स्वातन्त्र्येण जगत्कारणत्वे युक्तिविरोधो निरस्यते । अत्र जन्मादिसूत्रे विवक्षितं ब्रह्मणः स्वतन्त्रसाधनान्तरनिरपेक्षकर्तृत्वं युक्तिविरुद्धमुत नेति चिन्ता । तत्र युक्तिविरुद्धं हरेः स्वतन्त्रकर्तृत्वम् । विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वाद्घटादिसृष्टिवदित्युक्तेः सत्त्वात् । अतो ब्रह्म स्वतन्त्रसाधनसापेक्षमेव जगत्कर्त्रीति न तस्य जन्मादिकारणत्वेन सर्वगुणपूर्णत्वसिद्धिरिति प्राप्ते । यद्यपि घटादिसृष्टिः स्वतन्त्रबहुसाधनसापेक्षा दृष्टा तथाऽपि न तद्दृष्टान्तेन ब्रह्मणो जगत्सृष्टिस्तथा कल्प्या । किंतु स्वतन्त्रसाधनस्य तदनन्यत्वं किंस्विदासीदधिष्ठानमारम्भणं कतमदिति स्वतन्त्राधिष्ठानाद्याक्षेपकारम्भणशब्दादिभ्यः । आर-

भ्यतेऽनेनाऽऽरम्भणं साधनम् । अधिष्ठानमधिकरणम् । आक्षेपस्य विपर्ययपर्यवसानात्स्वतन्त्रसाधनादि नाऽऽसीदित्यर्थः । अनुमानमप्रयोजकं च । न च किंच शब्दप्रश्नाक्षेपयोः समत्वात्प्रश्न एव कुतो न स्यादिति वाच्यम् । उत्तराकथनादाक्षेपकार्थत्वनिर्णयात् ॥ १५ ॥

युक्त्यन्तरमाह—

ॐ भावे चोपलब्धेः ॐ ॥२ । १ । १६ ॥

यदि भगवत्सृष्टौ तदतिरिक्तं स्वतन्त्रं साधनमस्ति तर्हि वेदादिप्रमाणैरुपलभ्येत । न चोपलभ्यतेऽतो नास्तीत्यर्थः ॥ १६ ॥

न त्वद्भ्यः संभूत इति श्रुतौ, प्रकृतिं स्वामवष्टभ्य विसृजामीति स्मृतौ चेशान्यप्रतीतेर्न तदुपलब्धिरिति शङ्कां निरस्यति—

ॐ सत्त्वाच्चावरस्य ॐ ॥ २ । १ । १७ ॥

अवरस्य तदधीनसाधनस्य सत्त्वात् । तम आसीत्तमसा गूढमग्रे प्रकेतम् । अस्मान्मायी सृजते विश्वमेतत् । मायीत्यनेन मायायास्तदधीनत्वमुक्तम् ॥१७॥

उक्तमाक्षिप्य समाधत्ते—

ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥२।१।१८॥

नासदासीन्नो सदासीदिति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न । धर्मान्तरेण मुकुलत्वस्वातन्त्र्यादिनैव निषेधो न स्वरूपेण । तम आसीदित्यादिवाक्यशेषात् । नैवेह किंचनाग्र आसीन्मिषादिति वाक्ये मिषत्त्वेनैव निषेधात् ॥ १८ ॥

ननु साधनमङ्गीकृत्य तस्येशाधीनत्वाङ्गीकारपक्षपातस्य स्वरूपेणैवाभावस्वीकारो ज्यायान् । साधनशून्यसृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादिति शङ्कां निरस्यति——

ॐ युक्तेः शब्दान्तराच्च ॐ ॥ २ । १ । १९ ॥

स्वायत्तसाधनानङ्गीकारे महिमाधिक्यं लभ्यते । साधनस्वरूपस्य तन्निष्ठसाधनत्वस्येशाधीनत्वे महिमाधिक्यद्योतकत्वात् । अस्मान्मायी सृजते विश्वमेतत् । अद्भ्यः संभूतो हिरण्यगर्भ इतीशसृष्टौ कारणान्तरबोधकविलक्षणशब्दस्य सत्त्वाच्च ॥ १९ ॥

विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या सृष्टित्वात्पटादिसृष्टिवदित्याह—

ॐ पटवच्चेति ॐ ॥ २ । १ । २० ॥

ननु विमता सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसाध्या सृष्टित्वात्पटसृष्टिवत् ॥ २० ॥

विमतं साधनं स्वतन्त्रं साधनत्वात्तुर्यादिवदिति शङ्कां निरस्यति—

ॐ यथा प्राणादिः ॐ ॥ २ । १ । २१ ॥

न तत्साधनं स्वतन्त्रं यत्प्रेरणार्थं भगवतोऽनुप्रविष्टत्वात् । यथा शरीरेन्द्रियप्राणादिः । यः प्राणे तिष्ठन्नित्यादिश्रुतेः । अन्यथा प्रवेशवैयर्थ्यात् । ननु हरिप्रवेशे किं मानमिति चेन्न । प्रधानं पुरुषं चापि प्रविश्याऽऽत्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥ इति वैष्णवोक्तेः । अन्ये तु पूर्वं व्यावहारिकं भेदमुपेत्य च स्याल्लोकवदित्युक्तम् । अत्र तु कार्यस्य विश्वस्य कारणब्रह्मणोऽनन्यत्वमुच्यते । वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमितिश्रुतेरित्याहुः । तत्र न हि ब्रह्माभेदस्तदनन्यत्वम् । सत्ये ब्रह्मण्यनृतविश्वाभेदस्यैव वाच्यत्वात् । यत्तु नानन्यत्वमभेदं ब्रूमः किंतु भेदव्याप्तं धाम इति । तन्न । भेदाभावेऽभेदस्याऽऽवश्यकत्वात् । भेदाभावे सत्यानृतव्यवस्थायोगाच्च । अभेदाभावेन व्यवस्थायां तेनैवैकविज्ञानेन सर्वविज्ञानाभावोऽपि स्यात् । नापि ब्रह्मव्यतिरेकेणासत्त्वं तदनन्यत्वम् । विशेषनिषेधस्याभ्यनुज्ञानार्थत्वेनाऽऽनन्दादिवज्जीवचैतन्यवच्च ब्रह्मात्मकतापत्तेः । एकविज्ञानेन सर्वविज्ञानायोगाच्च । न हि शुक्तितत्त्वज्ञानाद्रजतज्ञानं भवति । यत्तु भामत्यां शुक्तौ ज्ञातायां रजतं तत्त्वतो ज्ञातं भवति । सा हि तस्य तत्त्वम् । एवं ब्रह्मज्ञानात्सर्वं सत्त्वतो ज्ञातं भवतीति । तन्न । ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं स्यादित्यापत्तेः । मृन्मयादिदृष्टान्तासंगतेश्च । न हि घटादिर्मृदादिष्वध्यस्तः । मृदादिज्ञानान्निवृत्त्यापत्तेः । स्वरूपमसाधारणधर्मो वा तत्त्वम् । न त्वधिष्ठानम् । तथा ह्यानन्दो ब्रह्मणः, शुक्तित्वं तत्त्वं न स्यात् । श्रुत्यर्थस्तु वाचया वागिन्द्रियेणाऽऽरम्भणमुत्पादनं यस्य सांकेतिकस्य भाषाशब्दस्य तन्नामधेयम् । विकारो विकृतम् । कर्मणि घञ् । विकृतं देशादिभेदेन संस्कृतापभ्रंशरूपेण विक्रियमाणत्वान्मृत्तिकेत्यादिसंस्कृतनामधेयं तु सत्यं देशादिभेदेऽप्येकाकारम् । सादृश्यादेकविज्ञानेन मृन्मयादिदृष्टान्ताः । प्रधानज्ञानेनाप्रधानज्ञाने संस्कृतापभ्रंशदृष्टान्ताः । भाषाशब्दज्ञानाद्धि यत्फलं व्यवहारादिकं तत्राधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद्भवतीति तज्ज्ञो विद्वानित्युच्यते । प्रधान-

पुरुषज्ञानाह्वानपूजानाशादौ लोके जनपदः सर्वोऽपि ज्ञात आहूत इत्यादेः पुराणादौ च—शशास पृथिवीं सर्वां सशैलवनकाननाम् । नाशिता पृथिवी सर्वा धार्तराष्ट्रैः सुदुर्नयैरित्यादिव्यवहारदर्शनात् । अन्येषां ज्ञानाद्यत्फलं भवति तदधिकं ब्रह्मज्ञानाद्भवति । यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ इति स्मृतेः । यत्तु भामत्यां भावपदेन कारणस्य सत्ताज्ञानं च विवक्ष्यते, उपलब्धिपदेनापि कार्यस्य सत्ता ज्ञानं च । एवं च कारणसत्त्व एव सत्त्वात्कारणोपलम्भ एवोपलभ्यमानत्वाच्च कार्यस्य कारणानन्यत्वमिति द्वितीयसूत्रार्थ इत्युक्तम् । तन्न । भावशब्दोपलब्धिशब्दयोगवृत्तिर्विभक्तिविपरिणामः । कारणस्य कार्यस्येति पदद्वयाध्याहार इत्यनेकदोषापातात् । चिन्मात्रस्य निर्विशेषस्य सर्वज्ञत्वादिविशिष्टस्य च ब्रह्मणोऽनुपलब्धावेव प्रपञ्चोपलम्भेन प्राक्तनस्य ब्रह्मप्रपञ्चस्यानन्यत्वस्यासिद्धेश्च । यच्चोक्त सदेव सोम्येदमिति श्रुतेः । अवरकालीनस्य कार्यस्य वियदादेरुत्पत्तेः प्रागेव सत्त्वाच्च । कारणादनन्यत्वमिति तृतीयार्थ इति तज्जन्यत्वादित्यस्य • त्वदभिमतानृतत्वविरोधित्वात् । यच्चोक्तमसदेवेदमग्र आसीदिति कार्यस्य प्रागसत्त्वमिति शङ्कां चतुर्थे निरस्यतीति । तन्न । अस्य वाक्यस्य तदसदेव सन्मनोऽनुकुरुतेति वाक्यशेषात्कारणपरत्वेन कार्यासत्त्वाप्रापकत्वात् । यच्चोक्तमसदकारणादिति युक्तेः सदेवेत्यादिशब्दान्तराच्च कार्यस्य प्रागुत्पत्तेः सत्त्वं कारणानन्यत्वमिति पञ्चमार्थ इति । तन्न । शब्दान्तरादित्यस्य सत्त्वाच्चावरस्येत्यनेन गतार्थत्वात् । षष्ठसप्तमोक्तौ तु संवेष्टितपटप्राणदृष्टान्तौ न विवर्तवादिनोऽनुकूलौ । न हि जगतो ब्रह्मणीव प्रसारणादेः पटादावध्यासः ॥ २१ ॥

ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २ । १ । २२ ॥

अत्र श्रुत्यनुभवसंवादियुक्त्यविरोध उच्यते । अत्र जन्मादिसूत्रे ब्रह्मण एव स्वतन्त्रकर्तृत्वं युक्तिविरुद्धमुत नेति चिन्ता । तदर्थं जीवस्य स्वतन्त्रकर्तृत्वसाधकचेतनत्वादियुक्तिः श्रुतिसंवादिनी न वेति । तत्र न युक्तं हरेः कर्तृत्वम् । जीवस्यैव कर्तृत्वानुभवात् । स हि यत्कार्यमारभते तत्समापयतीत्यनुभूयते । न चायं भ्रमः । बाधकाभावात् । न

वाऽस्तु जीवः कर्ता स वेशाधीनः । अनुपलभ्यमान ईशः कल्पनीयः। तस्य च प्रेरकत्वमिति गौरवापत्तेः । जीवाद्भवन्ति भूतानीत्यादिश्रुतेश्चेति प्राप्ते । यदि जीवः स्वतन्त्रः कर्ता जीवाद्भवन्तीति श्रुतौ व्यपदेशादुच्यते तर्हि तस्य हितकारणं च ॥ २२ ॥

जीवकर्तृत्वमेवाऽऽश्रयणीयमिति शङ्कां निरस्यति—

**ॐ अधिकं तु भेदनिर्देशात् ॐ** ॥ २ । १ । २३ ॥

ईश एव कर्ता । न च तस्य श्रमादिदोषः । अधिकशक्तिमत्त्वेन जीवाच्छ्रमादियुक्तात्तस्य भेदनिर्देशात् । श्रोता मन्ता द्रष्टा बोद्धा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरः पुरुषः स म आत्मेति विद्यात् । एष त आत्मा सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यादिश्रुतेः । भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेति स्मृतेः ॥ २३ ॥

युक्त्यन्तरमाह—

**ॐ अश्मादिवच्च तदनुपपत्तिः ॐ** ॥ २ । १ । २४ ॥

चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्तिर्जीवस्य । यथा दारुमयीं योषां नरः स्थिरसमाहितः । इङ्गयत्यङ्गमङ्गानि तथा राजन् इमाः प्रजाः ॥ इति भारताद्युक्तेः ॥ २४ ॥

जीवस्य स्वतः कर्तृत्वाभावमाक्षिप्य समाधत्ते—

**ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ** ॥ २ । १ । २५ ॥

जीवे कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न । यथा हि गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते । अन्नरसादिरूपेण प्राणः परिणमत्यसाविति वचनात्स एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एव । य आत्मानमन्तरो यमयतीत्यादिश्रुतेः ॥ २५ ॥

ननु लाघवाज्जीवः कर्ताऽस्त्विति शङ्कां निरस्यति—

**ॐ देवादिवदपि लोके ॐ** ॥ २ । १ । २६ ॥

नेशस्य कर्तृत्वे गौरवम् । स हि सर्वस्य कर्तेति श्रुतेः । नाप्यनुपलब्धिविरोधः । अदृष्टानामपि देवादीनां विद्यमानत्वात् ॥ २६ ॥

युक्त्यन्तरमाह—

ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दव्याकोपो वा ॐ ॥२।१।२६॥

न केवलं हिताकरणादिदोषो जीवस्य स्वतः कर्तृत्वे किंतु वक्ष्यमाणोऽपि । तथा हि—किं जीवाः सर्वकर्मेषु सर्वात्मना प्रवर्तन्तेंऽशेन वा । नाऽऽद्यः । एकाङ्गुलिना तृणादानादौ तदननुभवात् । नान्यः । निरवयवत्वश्रुतिव्याकोपेनांशाभावात् । न चेशेऽपि तु दोषः । तत्राचिन्त्यसामर्थ्यस्य वक्ष्यमाणत्वात् । यत्नतोऽपि युक्तिविरुद्धं तदीश्वरकृतमिति न्यायेन जीवकर्तृत्वमयुक्तमिति तस्येशाधीनत्वोपपत्तेः ॥ २७ ॥

ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २ । १ । २८ ॥

अत्र हरेः कर्तृत्वे कृत्स्नप्रसक्त्यादियुक्तिविरोधनिरासात्संगतिः । अत्र पूर्वोक्तकर्तृत्वं हरेर्न युक्तमुत युक्तम् । तत्र न युक्तम् । जीवपक्षोक्तदोषादिति प्राप्ते । एतावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । अत्यतिष्ठद्दशाङ्गुलम् । सेयं देवतैक्षत । हन्ताहमिमास्तिस्रो देवताः । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति यथा ब्रह्मणो जगदुत्पत्तिः श्रूयते तथा विकारव्यतिरेकेणावस्थानमपि शब्दमूलम् । तथा च निरवयवस्याप्यचिन्त्यशक्त्या जगत्कर्तृत्वाद्युपपत्तेः । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणमिति स्मृतेः । जीव एवोक्तविरोधो नेश इत्यर्थः ॥ २८ ॥

युक्त्यन्तरेणाऽऽह—

ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ २ । १ । २९ ॥

विरोधनिरासकविचित्रशक्तिमत्त्वादात्मनि न विरोधः । पराऽस्य शक्तिर्विविधैव श्रूयत इति श्रुतेः । उक्तं हि वैष्णवे—मैत्रेय उवाच—निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते । श्रीपराशर उवाच—शक्तयः सर्वभावानामचिन्त्याज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्मतेति । निर्गुणस्य प्राकृतगुणहीनस्याप्रमेयस्य देशकालाद्यपरिच्छिन्नस्य शुद्धस्य प्रकृतिसंबन्धराहित्यस्य ब्रह्मणः सर्गादिकर्तृत्वं कथम् । यथाऽग्नेरुष्णता तथा सर्गादिहेतुभूता भावशक्तयः स्वभावशक्तयः सन्ति ।

अचिन्त्या ज्ञानगोचराश्च चिन्त्यत्वादिना वैदिकज्ञानगोचराः । सर्गस्थितिविनाशांस्तु भगवान्मधुसूदनः । तैस्तै रूपैरचिन्त्यात्मा करोत्यव्याहतान्विभुरिति । आद्यश्चशब्द एवार्थः । भगवत एव विचित्रशक्तिमत्त्वं नान्येषाम् । कुत एतदतो हीतिशब्देन—विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयः तादृश्यः स्युः । एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुविष्ट इति श्वेताश्वतरादिश्रुतिः सूचिता ॥ २९ ॥

ननु यथा शब्दैकगम्यत्वादिनेशे युक्त्यविरोधस्तथा चेतनत्वादिना जीवेऽप्यस्त्विति शङ्कां निरस्यति—

**ॐ स्वपक्षदोषाच्च ॐ ॥ २ । १ । ३० ॥**

ये दोषा इतरत्रापि ते गुणाः परमे मताः । न दोषः परमे कश्चिद् गुण एव निरञ्जन इति श्रुतेः । दोषा भगवदितरत्र प्रतीताश्चेत्तर्हि दोषा एव न तु कयाचन विधयाऽदोषतां नेतव्याः । तत्र दोषाणां संभवेन कल्पकाभावात् । त एव चेद्धरौ प्रतीयन्ते तर्हि तेऽचिन्त्यशक्त्यादिना गुणतो नेयाः । तस्य निर्दोषत्वादिना श्रुतिसिद्धत्वात् । चशब्द एवार्थे ॥३०॥

ननु विचित्रशक्तिर्यद्विषया यदा च नश्यति तदा तत्र विरोधः स्यादिति शङ्कां निरस्यति—

**ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ २ । १ । ३१ ॥**

सार्वदिकसर्वविषयशक्तियुता देवताऽस्ति सदा । सर्वत्र तत्कार्यदर्शनात् । सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पो यः सर्वज्ञः सर्वविदेतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इति श्रुतेः । सर्वनियन्तृत्वात्सर्वस्वरूपमित्यर्थः ॥ ३१ ॥

हरेर्जगत्कर्तृत्वमाक्षिप्य समाधत्ते—

**ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ २ । १ । ३२ ।**

नन्वचक्षुरश्रोत्रं तदपाणिपादमितिश्रुतेर्हस्तादिकरणाभावान्न युक्तं कर्तृत्वमिति चेन्न । अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिभ्यः । पाण्यादिराहित्यं तु प्राकृतपाण्याद्यभिप्रायम् ॥ ३२ ॥

ॐ प्रयोजनवत्त्वात् ॐ ॥ २ । १ । ३३ ॥

अत्रेश्वरस्य जगत्कर्तृत्वे निष्फलादियुक्तिविरोधपरिहारादस्ति संगतिः । अत्र पूर्वोक्तं स्रष्टृत्वादिकं न युक्तमुत युक्तम् । तत्र न तावदीशस्य प्रयोजनमुद्दिश्य प्रवृत्तिरपूर्णत्वापातात् । न च प्रयोजनानुद्देशेनापि । अग्नेरूर्ध्वज्वलनादाविव स्वभावादेव प्रवृत्तिः । चेतनत्वात् । न च दयया प्रवृत्तिः । दयासाध्यफलाभावात् । आप्तकामत्वादिति प्राप्ते । क्रमेण सृष्ट्वेत्यादिकर्तृत्वं त्वीशस्य स्वभावादेव । न च चूतादीनां वसन्तादौ फलित्वादौ प्रयोजनं दृश्यते ॥ ३३ ॥

फलानुद्देशेन कीदृशी प्रवृत्तिरत आह—

ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ २ । १ । ३४ ॥

यथा बालोन्मत्तादिः प्रयोजनं विनैव सुखोद्रेकादितो लीलां करोति तथेशोऽपि । किंचाऽऽयाससाध्येषु फलमपेक्षते न त्वनायससाध्येष्वङ्गुलीचालनादिषु । अस्तीशस्यानायासकर्तृता ॥ ३४ ॥

ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ २ । १ । ३५ ॥

अत्र हरेः सर्वकर्तृत्वे वैषम्यादिदोषप्राप्तियुक्तिपरिहारादस्ति संगतिः । अत्र हरेः पूर्वोक्तं कर्तृत्वं युक्तमुत न युक्तम् । तत्र न युक्तम् । ईशो हि जीवकर्मादिसापेक्षो न वा । आद्ये । नासौ स्वतन्त्रः । द्वितीये । कांश्चित्सुखयन्कांश्चिद्दुःखयन्विषमो निर्घृणश्च स्यादिति प्राप्ते । कर्मापेक्षया फलदातृत्वान्न वैषम्यादिः । पुण्येन पुण्यं लोकं नयति पापेन पापमित्यादिश्रुतेः । समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् । इति स्मृतेश्च ॥ ३५ ॥

उक्तमाक्षिप्य समाधत्ते—

ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥ २ । १ । ३६ ॥

यदपेक्षयाऽसौ फलं ददाति तत्कर्माप्येतदधीनम् । एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषत इति श्रुतेरिति चेन्नानादित्वात् । पूर्वपूर्वकर्मापेक्षयैवेशस्य फलदातृत्वात्कर्मकारित्वाच्च । पुण्यपापादिकं विष्णुः

कारयेत्पुण्यकर्मणा । अनादित्वात्कर्मणश्च न विरोधः कथंचन। इति स्मृतेश्च ॥ ३६ ॥

ननु नियमेन कर्मापेक्षत्वे स्वातन्त्र्यं न स्यादिति शङ्कां निरस्यति—

ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ २ । १ । ३७ ॥

कर्मापेक्षत्वेऽपि न स्वातन्त्र्यहानिः। अपेक्ष्यकर्मसत्तादेरपि तदधीनत्वात् । ननु कर्म कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेति श्रुत्यनुसारेण कर्मणोऽपि तदधीनत्वेन वैषम्यापत्तिरिति चेदुपलभ्यते चेनादृशं वैषम्यादिकम्। न चोक्तदोषः । तर्हि किं जीवानामिव प्रत्यवायहेतुतया दोषः । यद्वा—समोऽहं सर्वभूतेष्वित्यादिशास्त्रस्याप्रामाण्यापादकतया । अथवा समत्वरूपसद्गुणविरोधित्वेन नीचत्वापादकतया । नाऽऽद्यः । ईशस्य विधिनिषेधातीतत्वात् । न द्वितीयः । अनादिसिद्धयोग्यतानुसारित्वस्यैव तत्र समशब्दार्थत्वात् । उक्तं च—सेवा योग्यातिरेकेण स्वानामपि न दास्यति । अपराधातिरेकेण नान्यस्यातः समो हरिरिति । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्। तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । इति गवैवोक्तत्वात् । तृतीयेऽपि । विविधतत्तत्स्वभावकरणाद् वैषम्यादिकं किंवाऽनादिनित्यतत्तत्स्वभावोल्लङ्घनात् । यद्वाऽनादिसिद्धविविधतत्तत्स्वभावस्यान्यथाकरणे शक्तत्वेऽपि तदकरणात् । यद्वाऽनादितत्तत्स्वभावनियमात् । नाऽऽद्यः । चेतनस्य स्वभावस्यानादित्वात् । न द्वितीयः । ईशस्य तत्तत्स्वभावानुसारेण फलदातृत्वात् । न तृतीयः। तस्य वैषम्यानापादकत्वात् । स्वभावमन्यथा कर्तुं न शक्तोऽप्यनुवर्तते । नासौ लोकेऽपि विषमो न[तु] निर्घृण उच्यते । न हि हंसान्काकीकर्तुं समर्थोऽपि यो मुनिर्न कुरुते स विषमो निर्घृणश्चोच्यते । न चतुर्थः । स्वभावनियामकत्वस्य निरतिशयस्वातन्त्र्यरूपमहागुणानुगुणत्वेन नीचत्वानापादकत्वात् ॥ ३७ ॥

ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ २ । १ । ३८ ॥

अत्र हरेः पूर्णत्वे युक्तिविरोधपरिहारादिति संगतिः । अत्र विष्णोरुक्तः निर्दोषगुणपूर्णत्वं युक्तमुत न युक्तम् । तत्र न युक्तम् । गुणिनः कदाचिद्दोषित्व-

नियमादीश्वरस्य गुणित्वे दोषित्वं दोषाभाववद्गुणाभावो वेति प्राप्ते । ईशः सदा प्राप्तसर्वसद्गुणः, तत्र प्रेप्सुत्वे सति तत्र शक्तत्वात्संमतवत् । तथा सदा सर्वदोषरहितः । तज्जिहासुत्वे सति तत्र समर्थत्वात्संमतवत् । प्रेक्षादिकं च प्रेक्षावत्त्वादिति वच्छब्देनोक्ता ये गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का चिन्त्या । अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि प्रतीता इतिसर्वगुणोपपत्तिश्रुतेश्च ॥ ३८ ॥

इति श्रीवनमालिविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां सारसंग्रहे ब्रह्मसूत्रे द्वितीयाध्यायस्य प्रथमः पादः ।

---

## अथ द्वितीयः पादः ॥

युक्त्यविरोधमुक्त्वा समयाविरोध उच्यते । सर्वविरोधानां युक्तिमूलत्वेन तद्विरोधस्य प्राथम्यात्प्रथमपादे निरासः । इतरविरोधत्रयेणाऽऽदिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वाच्छ्रुतिसमन्वयसिद्धे ब्रह्मणो जगत्कारणत्वे समयविरोधं परिहर्तुं नानास्मिन्पादे निराकरोति । न चेतरेषां चानुपलब्धेरिति । कपिलकणादादिसमयानामनुपलब्ध्याऽनाप्तत्वेन निराकृतत्वेन व्यर्थोऽयं पाद इति वाच्यम् । तत्र सामान्यतो निराकृतानामत्र विशेषतो निराकरणात् । न ह्यनादिकालानुवृत्तानां प्रतीतसुन्दराणां सामान्यतो निराकरणेऽप्यधिकारिणो निःशङ्का प्रवृत्तिर्भवति । तत्र द्विविधाः समयाः । हैतुकाः पाषण्डाश्चेति । योगसांख्यकणादाक्षपादादयो हैतुकाः । बौद्धपाशुपतादयः पाषण्डाः । पाषण्डादिभ्यो हैतुकाः प्रबलाः । युक्तिमत्त्वात् । हैतुकेषु सेश्वरकणादादिभ्यो निरीश्वराः सांख्यादयो वैदिकेश्वरवादस्यातिविरोधिनः प्रथमत एव निराकार्याः । न च चार्वाकोऽत्यन्तविरोधी तन्मतस्य तुच्छत्वेनेतरेषां चानुपलब्धेरिति न्यायाविषयत्वेन प्रथमनिरासानर्हत्वात् । सांख्यमतमपि केवलाचेतनकर्तृचेतनसहिताचेतनकर्तृत्वाभ्यां द्विविधम् । तत्र कर्तृकोटौ चेतनप्रवेशस्यानङ्गीकारेणात्यन्तं विरोधाद्यस्याऽऽद्याधिकरणे निरासः । गुणभूतेश्वरमङ्गीकुर्वतो मते प्रागुक्तदोषासंभवाद्द्वितीये तन्निरासः । श्रुत्यनुमानाभ्यां केवलस्येश्वरगुणकस्य वा जडकर्तृत्वनिरासोऽप्ययुक्तः । तयोरप्रमाणत्वादिति द्वितीयाक्षेपेणोत्थितस्याचेतनस्य देहस्यैव कर्तृत्वाङ्गीकारेण सांख्यमतसांनिकृष्टस्योत्तरसूत्रे वक्ष्यमाणपुरुषाश्मदृष्टान्तानिर्वाहकनिरासाविषयस्य चार्वाकस्य

तृतीये निरासः । अनन्तरं चार्वाकप्रत्युक्तो विषयाद्यभावदोषो नास्माकमिति तृतीयाक्षेपेणोत्थितस्य जीवसहिताचेतनकर्तृत्वस्य निरासः । जीवसहित-प्रधानस्य कर्तृत्वमपि जीवस्योपसर्जत्वप्रधानाभ्यां द्विविधम् । तत्र चेतनस्या-चेतनोपसर्जनत्वमत्यन्तं विरुद्धमिति चतुर्थे आद्यस्य निरासः । चतुर्थो-क्ताङ्गित्वानुपपत्त्युपधारेण प्रवृत्तस्य द्वितीयस्य पञ्चमे निरासः । एवं चतुर्विधे निरीश्वरे सांख्ये चार्वाके च निरस्ते निरीश्वरपक्षोक्तदोषा नास्मा-कमीश्वरमङ्गीकुर्वतां किंत्वीश्वरोऽष्टगुण एव न त्वानन्दाद्यनन्तगुणक इति पञ्चमाक्षेपेणोत्थितस्य काणादादिमतस्य षष्ठे निरासः । एवं हैतुकेषु निरस्तेषु पाषण्डनिरासावसरः । पाषण्डिनोऽपि वेदाप्रामाण्याङ्गीकारानङ्गीका-राभ्यां द्विधा । तत्राऽऽद्योऽतिविरोधित्वादादौ निराकार्यः । स च बौद्धजैनभेदेन द्विधा । तत्र बौद्धशास्त्रस्य प्रथमनिर्मितत्वात्प्रबलत्वाच्चाऽऽदौ बौद्धा निराकार्याः । तेऽपि वैभाषिकाः सौत्रान्तिका माध्यमिका योगाचाराश्चेति चतुर्धा । तत्र यद्यपि परमाणुपुञ्जरूपः क्षणिको बाह्यार्थो घटादिः सन् प्रत्यक्ष इति वदतः सौत्रान्तिकात्सोऽनुमेय इति वदन्वैभाषिकोऽत्यन्तविरोधी ततोऽपि ज्ञानातिरेकेण बाह्योऽर्थ एव नास्तीति वदन्योगाचारोऽतितरां विरोधी । ततोऽपि सर्वशून्यवादी माध्यमिकोऽतितरां विरोधीति माध्य-मिकयोगाचारवैभाषिकसौत्रान्तिकाः क्रमेण निराकार्याः । तथाऽपि पर-माण्वारम्भवादनिरासेन तत्पुञ्जवादोपस्थितेः पुञ्जरूपबाह्यपदार्थवादिनैकीकृ-त्यावान्तरभेदमविवक्षित्वा तार्किकं निरसितुमित्थमुपन्यासः । ईश्वरदोषो नास्माकं तद्बोधकवेदस्यैवाप्रामाण्यत्वादिति षष्ठाक्षेपेण प्रवृत्तयोर्वैभाषिकसौ-त्रान्तिकयोः सप्तमे निरासः । अष्टमे परमाणुपुञ्जवादिनं प्रत्युक्तो दोषो नास्माकमिति सप्तमाक्षेपेणोत्थितस्य विज्ञानवादादप्यतिविरुद्धस्य शून्य-वादस्य निरासः । नवमे शून्यवादिनं प्रत्युक्तो नासतो दृष्टत्वादिति दोषो नास्माकमित्यष्टमाक्षेपेणोत्थितस्य विज्ञानवादस्य निरासः । दशमे शून्य-वाद्युक्तमसत्त्वं विज्ञानवाद्युक्तं सत्त्वं च स्यादिति वदतां स्याद्वादिनामस्माकं नैकैकपक्षदोष इति नवमाक्षेपेण प्रवृत्तस्य क्षपणकमतस्य निरासः । एवमवैदिकपाषण्डे निरस्ते वैदिकाभिमतपाषण्डनिरासावसरः । स च शैवस्कान्दगाणपत्यशाक्तादिभेदेनानेकधा । तत्र सर्वेभ्यः शैवसमयः प्रबल इति तस्यैकादशे निरासः । यद्यपि स्कान्दादिवन्महावाममध्यम-

वामाणुवामादिभेदेन त्रिविधं शाक्तमपि शैवमतनिरासकन्यायेनैव निरस्तं तथाऽपि स्त्रीमात्रादुत्पत्त्यसंभवादिविशेषदोषविवक्षया द्वादशे तन्निरस्तमित्यधिकरणानामवान्तरसंगतिः—

**ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ २ । २ । १ ॥**

अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः स्रष्टृत्वादिकं न घटत इति तदर्थं सांख्यसमयविरोधात्किं श्रुतिरप्रमाणमुत नेति । तदर्थं युक्तिमूलत्वेनाभिप्रेतसांख्यसमयोक्तप्रधानस्य जगद्रचयितृत्वादियुक्तमुत नेति चिन्ता । नेशो जगत्कारणं तद्विसदृशत्वात् । न हीशस्य महदादिसादृश्यं वादिभिरङ्गी क्रियते । न च प्रकृतिप्रेरकत्वेनेशोऽङ्गीकार्यः । तस्या एव स्वतन्त्रकर्तृत्वाभ्युपगमादिति प्राप्ते । कार्यं स्वसदृशकारणवत्कार्यत्वाद्घटवदित्यनुमानेन कारणतया कल्पितं प्रधानं न कर्तृ । स्वतः प्रवृत्तिरूपरचनाया अनुपपत्तेर्जडत्वान्मृदादिवत् । विमतं सकर्तृ कार्यत्वाद्घटादिवदिति स्वतः प्रवृत्तिमान् चेतनः कर्ता सिद्धः । स एवेशः ॥ १ ॥

एवं प्रधानस्य कर्तृत्वरूपकारणमचेतनत्वेन निराकृत्य युक्त्यन्तरेण तन्निराकरोति—

**ॐ प्रवृत्तेश्च ॐ ॥ २ । २ । २ ॥**

महदादिसृष्टिश्चेतनेच्छानुसारिणी सृष्टित्वात्पटसृष्टिवदित्यनुमानाविरुद्धत्वाच्च नाचेतनस्य कारणत्वम् । न च पटसृष्टावपि न चेतनस्य व्यापारः । अहं करोमीति चेतनप्रवृत्तिदर्शनात् ॥ २ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ २ । २ । ३ ॥**

अचेतनं क्षीरं यथा दध्यातञ्चनेन परिणमते, वत्सविवृद्धये प्रवर्तते स्वभावात् । स्वभावादेव लोकोपकाराय जलं स्यन्दते, पतति च कूलादि । तथाऽचेतनमपि प्रधानं प्रवर्ततामिति चेन्न । ईश्वराधिष्ठितानामेव तेषां प्रवृत्तिः । योऽप्सु तिष्ठन्नपोऽन्तरो यमयत्येतस्य वाऽक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्त इत्येवंजातीयं हि शास्त्रं सर्वस्य लोकपरिस्पन्दितस्येश्वराधिष्ठिततां दर्शयति ॥ ३ ॥

ननु पयोम्बुप्रवृत्तेरीशाधीनत्वेऽप्यन्यस्यास्तदधीनत्वे किं मानमिति शङ्कां निरस्यति—

ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ २ । २ । ४ ॥

सर्वप्रवृत्तीनामीशाधीनत्वस्य श्रुतिप्रसिद्धत्वान्न कुत्राप्युक्तहेतोरनवस्थिति-र्व्यभिचारः । नाप्यचेतनप्रवृत्तौ निदर्शनमित्यतो मानं विरुद्धं निष्प्रमाणं च स्वतोऽचेतनप्रवृत्तिमतमनपेक्षितमेव प्रेक्षावताम् ॥ ४ ॥

ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ २ । २ । ५ ॥

स्वतन्त्रकर्तृत्वे सेश्वरसांख्यसमयनिरासादस्ति संगतिः । स्वतन्त्रजग-त्कर्तृत्वमीशस्यायुक्तमुत युक्तमिति चिन्ता । तत्र नेशस्य तद्युक्तम् । यथा हि पृथिव्येव तृणादिकार्याणां प्रधानकारणं पर्जन्यादि त्वनुग्राहकमात्रं तथा प्रधानं मुख्यकारणमीशस्त्वनुग्राहकमात्रमिति प्राप्ते । न पर्जन्यवदनुग्राहकत्वमात्रं सर्वपदार्थानां सत्ताप्रदानायेशसर्वगतत्वोक्तिरीशप्रेरणामन्तरेण कस्यापि वस्तुनः सत्त्वस्यैवाभावात् ॥ ५ ॥

ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ २ । २ । ६ ॥

अत्र चार्वाकसमयनिरासादस्ति संगतिः । तत्रेशस्य जगत्कर्तृत्वमयुक्त-मुत युक्तमिति चिन्ता । तत्र न युक्तं पूर्वपूर्वस्मादुत्तरोत्तरोत्पत्तेः । अदृष्ट-पदार्थाभावाभ्युपगमेऽपि क्वचित्स्वभावादेव मदिरोत्पत्तिवदुपपत्तेश्च । श्रुतिप्रा-माण्यस्य तेनानभ्युपगमात् । न हि बाह्यसामग्र्यां सत्यां कार्यानुत्पादो दृष्टो येनादृष्टं कल्प्येत । अतोऽदृष्टवस्तुनो भावान्नेशः कारणमिति प्राप्ते । युक्तं हरेः कर्तृत्वम् । यदुक्तमदृष्टं नास्तीति । तन्न । तथा सत्य-र्थस्य प्रयोजनस्याभावात्त्वत्समयस्यैवानारम्भणीयत्वापत्तेः । न च धर्माद्यभावबोधनद्वारा लोकोपकारः । तदभावज्ञाने परस्परं हिंसादि-नाऽपकारस्यैव प्राप्तेः । अज्ञात एव शास्त्रार्थवत्त्वेन विषयोऽप्यसंभवी । अतश्चार्वाकमतस्यानुपपन्नत्वाद्विरोधाभावाद्युक्तं जगत्कर्तृत्वम् ॥ ६ ॥

ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ २ । २ । ७ ॥

अत्र निरीश्वरसांख्यैकदेशविरोधनिरासादस्ति संगतिः । ईशस्य जग-त्कर्तृत्वमयुक्तमुत युक्तमिति चिन्ता । तत्र न युक्तम् । प्रधानस्यैव कर्तृ-त्वेनेश्वराङ्गीकारस्य वैयर्थ्यात् । न चाचेतनस्य स्वतः प्रवृत्तिर्न युक्ता । केवलस्य कारणत्वानुपपत्तावपि पुरुषोपसर्जनस्य तदुपपत्तेः । यथा चेतन-संबन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छत्येवमचेतनाऽपि प्रकृतिः पुरुषसंबन्धात्प्रवर्तेत् इति प्राप्ते । न ऋते त्वत्क्रियते किंचनार इत्या-

दिश्रुत्या शरीरप्रवृत्तेरपि परमात्माधीनत्वे सिद्धे पुरुषोपसर्जनप्रधानाधीनत्व-साधने दृष्टान्ताभावः ॥ ७ ॥

हैतुकमन्यश्चायं श्रुत्यवष्टम्भेनोक्तं दृष्टान्तदोषं न गणयतीत्यतो हेत्वन्तरेण दृष्टान्तसाध्यविकलतां साधयति—

**ॐ अङ्गित्वानुपपत्तेः ॐ ॥ २ । २ । ८ ॥**

यदि शरीरमेव पुरुषोपसर्जनं प्रवर्तेत तदा शरीरमङ्गि पुरुषोऽङ्गं स्यात् । तथा च पुरुषस्याङ्गित्वे शरीरस्याङ्गत्वेन च लौकिकपरीक्षक-व्यवहारो न स्यात् । विद्यते चासौ । अतो न पुरुषोपसर्जनशरीरस्य प्रवृत्तिरिति न दृष्टान्तो युक्तः ॥ ८ ॥

**ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ २ । २ । ९ ॥**

अत्र निरीशसांख्यैकदेशविरोधनिरासादस्ति संगतिः । तत्र प्रधा-नादेव जगदुत्पत्तिसंभवेनेश्वरानुपयोगः । न चाचेतनस्य तदनुपपत्तिः । पुरुषयु-क्तस्य तदुपपत्तेः । न चाङ्गित्वानुपपत्तिः । प्रकृत्युपसर्जनस्य पुरुषस्य कर्तृत्वाङ्गीकारात् । विमता प्रवृत्तिरचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वात् । अश्मानियनादिप्रवृत्तिवदिति प्राप्ते । युक्तमीशस्य कर्तृत्वम् । त्वदुक्ते माना-भावात् । न चोक्तमनुमानम् । दृष्टान्ते साध्याप्रसिद्धेः । तथा हि पुरुषस्य प्रवृत्तिशक्तिरस्ति न वा । आद्ये शरीरवैयर्थ्यम् । द्वितीये पुरुषा-ङ्गित्वमनुपपन्नम् । शरीरसंबन्धार्थं केवलस्य पुरुषस्य शक्त्यभावात् । यदि तत्रास्ति शक्तिस्तर्ह्यन्यत्रापि स्यादित्यन्यद्वैयर्थ्यम् । अतो न पुरुषस्य शरीरं संबन्धकेवलस्य पुरुषस्य शक्त्यभावात्क्रियायां शरीरोपकृतस्य प्रवृ-त्तिर्नापि केवलस्येतीश्वरोऽङ्गीकार्यः । तथाऽश्मानयनादिप्रवृत्तिरपि ॥ ९ ॥

एवं प्रत्येकं दूषितान्यनीश्वरमतानि सामान्यरूपेण निराकरोति—

**ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥ २ । २ । १० ॥**

सकलश्रुतिस्मृतियुक्तिविरोधादनीश्वरमतमसमञ्जसं सेश्वरं सांख्येन स्वात-न्त्र्यानङ्गीकारात्तन्मतमपि श्रुत्यादिविरुद्धम् ॥ १० ॥

**ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ २ । २ । ११ ॥**

अत्र हरेः सर्वगुणपूर्णत्वे वैशेषिकादिमतविरोधनिरासादस्ति संगतिः । अत्र हरेरनन्तगुणपूर्णत्वमयुक्तमुत युक्तमिति चिन्ता । तत्र न युक्तम् ।

द्रव्यगुणकर्मसामान्यविशेषसमवाया इति षडेव पदार्थाः । तत्र समवायि कारणं गुणाश्रयो वा द्रव्यम् । पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदेन नवविधम् । तत्राऽऽकाशादिपञ्चकं नित्यमेव। भूतचतुष्टयं परमाणुरूपं नित्यमन्यदनित्यम् । जातिमात्रसमवायित्वे सति कर्मान्यो गुणः । स च रूपादिभेदेन चतुर्विंशतिधा । संयोगासमवायिकारणं कर्मोत्क्षेपणादिभेदेन पञ्चविधमनित्यमेव । नित्यमेकमनेकसंबन्धसमवेतं सामान्यम् । नित्यसंबन्धः समवाय एक एव । नित्यद्रव्यवृत्तयोऽनन्ता विशेषाः । एतत्त्रितयं नित्यमेव । तत्रानित्यं समवाय्यसमवायिनिमित्तभेदेन त्रितयकारणेन जन्यम् । यत्समवेतं कार्यमुत्पद्यते तत्समवायि कारणं परमाण्वादि । आदिसृष्टौ परमाणवो द्व्यणुकादिक्रमेणावयविनमारभन्ते । समवायिकारणे प्रत्यासन्नं कारणमसमवायिकारणम् । तत्रावयविद्रव्यस्यावयवसंयोगः । कार्यगुणानां कारणगुणा एव समवायिकारणम् । कारणगतं परिमाणं कार्यगतपरिमाणं भावयति । परमाणुद्व्यणुकादिपरिमाणं न कार्यगतपरिमाणस्य कारणं संख्यादिनैव तज्जननत्वात् । एतदन्यत्कारणं निमित्तमीश्वरादृष्टकालादि । स चेश्वरः संख्यादिगुणयुक्तः कर्तृत्वोपयोगिज्ञानेच्छादिशाली च । शिष्टगुणायोग्य इति कथम् । तस्यानन्तगुणपूर्णत्वमिति प्राप्ते [ युक्तं हरेः पूर्णगुणत्वम् । वैशेषिकादिकल्पनाया अप्रामाणिकत्वात् । तथा हि—यदुक्तं परमाणुपरिमाणस्य हेतुत्वे कार्याणां परमाणुत्वप्रसङ्गः परिमाणस्य सजातीयपरिमाणारम्भकत्वादिति । तत्र किमिदं परमाणुत्वं तच्छब्दवाच्यत्वं तत्सदृशत्वं वा । आद्ये न नो हानिः । द्वितीये महत्त्वस्याप्यनारम्भकत्वं स्यात् । न हि कपालपरिमाणं घटपरिमाणेनात्यन्तसदृशम् । संकेतमात्रस्याप्रामाणिकत्वात् । महत्त्वाद्दीर्घत्वाच्चैव ह्रस्वाच्चद्व्यणुकपरिमाणात्परिमण्डलात्परमाणुपरिमाणाच्च तत्कार्यपरिमाणं जायताम् । तथा चैतद्दिशा सर्वा प्रक्रिया प्रामाणिकीति भावः । द्व्यणुकपरिमाणे कारणाभावाच्च । न च भिन्नतया प्रतीत्यभावः । भिन्नत्वेन प्रतीतेः । न च संख्याकारणं संख्यादेरेव । महत्त्वाद्यारम्भकत्वप्रसङ्गात् । संयोगस्य द्रव्यानिमित्तत्वमेव किं न स्यात् । भावेऽप्यपेक्षाबुद्धेरात्मगताद्वित्वनिमित्तत्वाभ्युपगमात् ॥ ११ ॥

एवमसमवायिकारणं निरस्य निमित्तकारणं निरस्यति—

ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ २ । २ । १२ ॥

ईशेच्छाया निमित्तत्वे सा नित्याऽनित्या वा । आद्ये प्रलयेऽपि सृष्टिः स्यात् । द्वितीये तस्या अपि निमित्तापेक्षायामनवस्थापत्तिः । वैदिक-पक्षे त्वचिन्त्येशशक्त्यैव समाधेयम् । पराऽस्य शक्तिर्विविधैव श्रूयत इति श्रुतेः । किंच संयोगस्य क्रियावदन्यतराश्रयकत्वनियमेन क्रियायाश्च कार्यत्वेन तत्रापि कारणापेक्षा । प्रयत्नोऽभिघातादिर्वा यद्युपपद्येत । तदणुषु तदभावादनुपपन्नाऽऽद्या क्रिया । ततः संयोगोऽप्यनुपपन्नः । न चाऽऽत्मयत्नः कारणं क्रियायाम् । तदा जीवशरीराभावेन यत्नासंभवात् । तस्यापि नित्यत्वे कारणापेक्षत्वान्नित्यत्वेऽनियामकत्वात् । न चात्माद्दष्टमाद्यक्रियायां हेतुः । तस्याचेतनत्वात् । न हि चेतनानधिष्ठितमचेतनं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेत्युक्तम् । अदृष्टस्याणुसंबन्धाभावाच्च । न चास्त्यदृष्टवदात्मसंयोगद्वारा संबन्धः । संयोगस्यापि क्रियादिसापेक्षत्वात् । निरवयवाण्वात्मनोरणूनां च संयोगासंभवाच्च । निरवच्छिन्नसंयोगस्वीकारे ह्यणुसंयुक्तात्मनोऽणुत्वप्रसङ्गात् । सर्वतोऽणावेकस्यैव संयोगस्याऽऽपत्तेश्च । तथा चाणुत्वहान्यापत्तेः । तस्मादनुपपन्नोऽणुवादः । न च भवतामपीशेच्छादेर्नित्यत्वेन सहकारिकारणस्यास्माकमिवानुपपन्नत्वेन सृष्ट्यनुपपत्तिः । अस्माभिः काले स्वाभाविकसृष्टिकालत्वादिविशेषाणामङ्गीकृतत्वेन तदुपपत्तेः । न च तेषां नित्यत्वेन प्रलयादौ सृष्टिः स्यात् । प्रवाहानादित्वस्वीकारेणाखण्डव्यक्तेरस्वीकारात् । अन्यथा प्रलये कालपरिमाणानापत्तेः । उक्तं हि श्रीवैष्णवे—प्रधानं पुरुषं चापि प्रविश्याऽऽत्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ । द्विपरार्धात्मकः कालः कथितो यो मया तव । तदहस्तस्य मैत्रेय विष्णोरीशस्य कथ्यते । व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा । तत्र स्थिते निशा चान्या तत्प्रमाणा महामुने । नैवाहस्तस्य न निशा नित्यस्य परमात्मनः । उपचारस्तथाऽप्येष तस्येशस्य द्विजोच्यते । इत्येवमेष मैत्रेय कथितः प्राकृतो लय इति । तथा च प्रलयेऽपि क्षणादिप्रवाहः स्वी क्रियते । न च कार्यमात्रोपादानस्य प्रधानस्य लीनत्वात्तदनुपपत्तिः । फलत्वेन तावतो भागस्य लयानङ्गीकारात् । तथा च यथा सर्वगताया अपि गोत्वादिजातेः सास्नादिमत्येव संबन्धः [ तथा ] सर्वगतायाश्चितो वृत्तिद्वारक एव संबन्धः । एवं नित्याया

अपीशेच्छायाः कालविशेषद्वारकस्य प्रकृत्यादावनित्यसंबन्धस्य स्वीकारात्चानुपपत्तिः ॥ १२ ॥

परपक्षे निमित्तकारणासंभवमुक्त्वा समवायिकारणं निरस्यति—

**ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ २ । २ । १३ ॥**

अवयवावयविगुणगुणिक्रियाक्रियावज्जातिव्यक्तिविशेषविशेषिणां संबन्धः समवायः । तथा च समवायस्यापि समवायिभ्यां भिन्नत्वसाम्यान्मृद्घटसमवाय इत्यादिविशेषणविशेष्यभावोपपत्तेः । समवायापेक्षापत्तेः । समवायस्य समवाय इति प्रतीत्युपपत्तये समवायान्तरापेक्षेत्यनवस्थापत्तेः । यदि समवायः स्वस्मिन्स्वयमेव विशेषणविशेष्यत्वादिबुद्धिजनकस्तर्हि द्रव्यादेरेव । गुण्यादिधीनिर्वाहकत्वेन तत्स्वीकारो व्यर्थः ॥ १३ ॥

परपक्षे कारणत्रयनिरासेन सृष्टिं निरस्य प्रलयं निरस्यति—

**ॐ नित्यमेव च भावात् ॐ ॥ २ । २ । १४ ॥**

समवायिकारणपरमाणूनां निमित्तस्येशेच्छाकालादेर्नित्यत्वात्प्रलयानुपपत्तिः । न चासवायिकारणनाशात्तदुपपत्तिः । पुनरुत्पत्तौ कारणाभावाद्वाह्यसामग्रीसत्त्वे दृष्टस्य स्वाभावापरावेन कार्यनिरोधकत्वादर्शनात् ॥ १४ ॥

परमाणूनां नित्यत्वं निराकरोति—

**ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ २ । २ । १५ ॥**

पार्थिवादिपरमाणूनां रूपादिमत्त्वहेतुना प्रकृतिनित्यत्वविपर्ययो भवति । यद्रूपादिमत्तस्य घटादेरनित्यत्वदर्शनादित्यर्थः ॥ १५ ॥

अप्रयोजकत्वशङ्कां निरस्यति—

**ॐ उभयथा च दोषात् ॐ ॥ २ । २ । १६ ॥**

यदि रूपवतां नित्यत्वं तर्हि घटादेरपि स्यात् । यद्यनित्यत्वं तर्हि समवायिकारणाभावात्सृष्ट्यनुपपत्तेः ॥ १६ ॥

अप्रामाणिकत्वेनाऽऽरम्भवादं दूषयति—

**ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ २ । २ । १७ ॥**

श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष्यता । अहमासं पण्डितको हैतुको वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकामिति मोक्षधर्मे सृगालेन स्वस्य सृगालयोनिहेतुत्वेनान्वीक्षिक्युक्ता । अत आरम्भवादस्यायुक्तत्वात्सिद्धोऽनन्तगुणो हरिः ॥ १७ ॥

**ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ २ । २ । १८ ॥**

अत्र हरेर्जगत्कारणत्वे बौद्धमतविरोधनिरासादस्ति संगतिः । बौद्धानां बहुविधत्वेऽपि परमाणुकारणताभ्युपगन्तृनिराससंगत्या वैभाषिकसौत्रान्तिकमतं निराक्रियते । अत्र हरेर्जगत्कारणत्वमयुक्तमुत युक्तम् । रूपविज्ञानवेदनासंस्कारसंज्ञारूपेणावस्थितं हि जगत्परमार्थसत् । सविषयाणीन्द्रियाणि रूपस्कन्धः । निर्विकल्पं विज्ञानस्कन्धः । सुखदुःखे वेदनास्कन्धः । सविकल्पकं संज्ञास्कन्धः । रागादिधर्माधर्मौ च संस्कारस्कन्धः । तदपि परमाणुपुञ्जमात्रम् । नन्ववयवी नाम कश्चित्तत्पुञ्जस्यैव घटादिबुद्ध्युपपादकत्वात् । विद्यमानं सर्वं क्षणिकम् । कालतः क्षणिकत्वं, देशतः परमाणुत्वमेव हि पदार्थानां सत्त्वम् । तच्चैतत्कार्यं कालस्वभावादिनिमित्तेन भवतीति किमीशेनेति प्राप्ते । समुदाये प्रत्येकहेतुके मिलितहेतुकेऽपि तदप्राप्तिः कार्यकारणभावानुपपत्तिः । कालादिनिमित्तकसमुदाय एकपरमाणुनिमित्तकोऽनेकनिमित्तको वा । नाऽऽद्यः । व्याघातात् । द्वितीये मिलितयोरमिलितयोर्वा । नाऽऽद्यः । मेलने सति समुदायः समुदाये सति मेलनमित्यन्योन्याश्रयात् । नोत्तरः । अमिलितपरमाणूनां सदा सत्त्वे तत्समुदायस्यापि सदातनत्वापत्त्या प्रलयाद्यनापत्तेः । स्थूलोऽयमेकश्चक्षुषा दृश्यत इत्यादिव्यवहारानापत्तेश्च ॥ १८ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥२।२।१९॥**

समुदायस्य सदातनत्वेऽपि विचित्रव्यवहाराभावात्प्रलयोपपत्तिः । न च व्यवहाराभाव एव । कुतः । व्यवहारादिश्चेदं चेदं चेत्यपेक्षातः । सा च परमाणूनां सामीप्यात् । न च प्रलये सामीप्यमस्तीतरेतरप्रत्ययादपेक्षाबुद्धिरूपाद्व्यवहारो भवति । तस्य तदानीमभावादिति चेन्न । समुदायोत्पत्तिमात्रं प्रत्यपेक्षाबुद्धेर्हेतुत्वात्सर्वदैव समुदायेऽपि विचित्रव्यवहाराभावापत्तेः । तथा हि विरलाः परमाणवो मिलितपरमाणनुत्पादयन्ति । ते च पुरुषेण दृश्यन्ते । ते चैकैकं कार्यमुत्पाद्य नश्यन्त्येव । तेऽप्येवं तेऽप्येवम् । तथा च कथं द्रष्टुः परस्परापेक्षाधीः । ततश्च व्यवहारादिकं कथं घटेत । न ह्यन्यत्र दर्शनमन्यत्र परस्परापेक्षाऽन्यत्र व्यवहारादिति युज्यते ।

त्वन्मते तेषां क्षणिकत्वात् । परमाणूनां स्थायित्वेऽल्पकाल एकस्माद्घटात्कुलालशालापूर्त्यापत्तेः ॥ १९ ॥

विरलपरमाणुभ्यः समुदायोत्पत्तिपक्षे व्यवहारासंभवं दर्शयित्वा विशेषकार्योत्पत्तिनिरस्यति—

**ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २ । २ । २० ॥**

दण्डादितो घटाद्युत्पत्तिर्न स्यात् । क्षणिकाद्दण्डान्तरोत्पत्तौ पूर्वदण्डस्य नाशात् । क्षणिकमते कारणस्य सदृशकार्यजननस्यैव न्याय्यत्वादन्यथा घटात्पटोत्पत्त्यापत्तेः । एकस्मिन्क्षण एकसजातीयविजातीयसंतानद्वयोत्पादनं त्वशक्यम् ॥ २० ॥

प्रतिक्षणं कार्योत्पत्तिं निरस्यति—

**ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २ । २ । २१ ॥**

प्रतिक्षणं न कार्योत्पत्तिर्युक्ता । तथा हि—किं कारणे विनष्टे कार्यमुत्पद्यते विद्यमाने वा । आद्ये कार्यकारणाभावप्रतिज्ञोपरोधः । यन्नष्टे यदुत्पद्यते तस्य तत्कार्यत्वेऽतिप्रसङ्गात् । क्षणिकस्य न द्वितीयः । एकस्मिन्क्षणे स्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणेऽपि तस्यावस्थाने कारणस्य क्षणिकत्वप्रसङ्गात् । क्षणिकस्य द्विक्षणावस्थाने तदुत्तरत्र विनाशकारणाभावात्पुनस्ततः कार्योत्पत्तयः स्युस्तेभ्यस्तथेति सर्वकार्याणां यौगपद्यं स्यात् ॥२१॥

क्षणिकवादे कार्योत्पादं निरस्यति—

**ॐ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॐ ॥२।२।२२॥**

संतानं विना प्रतिक्षणं यो नाशो यश्च संतानेन सह क्षणिकमेतद्द्वयमयुक्तम् । तथा हि—प्रतिक्षणे कारणं कार्यं निवर्त्य नश्यत्यनिवर्त्य वा । नाऽऽद्यः । तत्र स्वकार्यवियोगकाले कारणसत्त्वेन कार्योत्पत्त्यापत्तेः । न द्वितीयः । सतो हि घटादेरात्यन्तिको नाशः । सत्त्वादेवासौ कार्यान्तरमुत्पादयेदेव । तत्कार्यं चैवामिति कथं संतानोच्छेदः । त्वन्मते सहकारिवैकल्यानङ्गीकारेण कारणे सति कार्यावश्यंभावात् ॥ २२ ॥

अर्थक्रियाकारित्वं सत्वम् । यद्याद्यपटो घटान्तरमुत्पाद्य स्वयं न नश्येत्तदाऽनन्तकार्यापात इत्यर्थक्रियाकारित्वार्थं क्षणिकत्वं भावानामिति निरस्यति—

**ॐ उभयथा च दोषात् ॐ ॥ २ । २ । २३ ॥**

कारणे सति कार्यनियमोऽस्ति न वा । ये क्षणिकमते पूर्वापराभावेन कार्यस्यापि यावत्कारणभावित्वात्सव्येतरविषाणवन्न कार्यकारणभावः । द्वितीये तत्कालेऽर्थक्रियाकारित्वाभावापत्त्या कदाऽपि ततः कार्योत्पत्तिर्न स्यात् । ननु यत्सत्तत्क्षणिकम् । यथा दीपादि । सन्तश्चामी भावा इत्यनुमानेन क्षणिकत्वं सेत्स्यति । न च साध्यविकलता । दृष्टान्तस्य यद्विरुद्धधर्माधिकरणं तन्नाना । यथा घटपटौ तथा चायं दीपः ॥ २३ ॥

पूर्वोत्तरक्षणस्थो विरुद्धधर्माधिकरणं परिमाणविशेषदर्शनादिति शङ्कां निरस्यति——

ॐ आकाशे चाविशेषात् ॐ ॥ २ । २ । २४ ॥

नोक्तानुमानेन क्षणिकत्वसिद्धिः । यत्सत्तदक्षणिकम् । यथाऽऽकाशमित्यक्षणिकत्वस्यापि साधयितुं शक्यत्वात् ॥ २४ ॥

प्रतिपक्षेणानुमानं निरस्य बाधेनापि निरस्यति——

ॐ अनुस्मृतेश्च ॐ ॥ २ । २ । २५ ॥

तदेवेदमिति प्रत्यभिज्ञाबाधान्न क्षणिकवादो युक्तः । न च सा भ्रान्तिः । बाधकाभावात् । न च बाधकं विना भ्रान्तित्वम । विशेषदर्शनस्यापि तत्त्वापत्तेः । न च घटो निरन्तरक्षणवृत्तिध्वंसप्रतियोगी घटत्वान्मुसलाहतैकक्षणघटवदिति वाच्यम् । घट इति किं परमाणवः पक्षी कियन्ते समुदायो वा । नाऽऽद्यः । दृष्टान्ताभावात् । न द्वितीयः । तस्यावस्तुत्वात् । अतो वैभाषिकादिमतस्यानुपपन्नत्वेनापि विरोधाद्युक्तं हरेर्जगत्कर्तृत्वम् ॥ २५ ॥

ॐ नासतो दृष्टत्वात् ॐ ॥ २ । २ । २६ ॥

अत्र शून्यमतविरोधनिरासात्संगतिः । हरेर्जगत्कर्तृत्वमयुक्तं युक्तं वा । तत्र शून्यादेवाशेषं जगदुदेति । न च तस्य कर्तृत्वानुपपत्तिः । संवृत्तिसंबन्धेनोपपत्तेः । अतः शून्यादेव जगदुदयेन किमीश्वरेणेति प्राप्ते । न शून्यस्य कारणत्वम् । मानाभावात् । न तत्र प्रत्यक्षमस्ति । नाप्यनुमानम् । क्वाप्यसतः सत्कारणत्वादर्शनेन दृष्टान्ताभावात् ॥ २६ ॥

नन्वदृष्टमप्यसतः कारणत्वं स्वीकृतं चेत्को दोष इति शङ्कां निरस्यति—

ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ २ । २ । २७ ॥

उदासीनानां हेयोपादेयधीवर्जितानां खपुष्पादीनां सकाशात्सौरभाद्युत्पत्तिः

ॐ नैकस्मिन्नसंभवात् ॐ ॥ २ । २ । ३३ ॥

अत्र जैनमतविरोधनिरासात्संगतिः । तत्र न युक्तं हरेर्जगत्कर्तृत्वम् । सदसदुभयमुभयविलक्षणं चैतत्सर्वं चेति हि सप्तभङ्गी । जगदात्माद्दष्टसाधनैर्भविष्यतीति किमीशेन । सदित्याद्यः प्रकारः । असदिति द्वितीयः । उभयं सदसदात्मकमिति तृतीयः । उभयविलक्षणमिति चतुर्थः । सदसदुभयविलक्षणमिति पञ्चमम् । असत्त्वे सति तद्विलक्षणं चेति षष्ठः । सर्वं सदसदात्मकं चैतत्सर्वं सदसद्विलक्षणमिति सप्तमः । स्यादस्ति स्यान्नास्ति । स्यादस्ति च नास्ति च । स्यादस्ति चावक्तव्यश्च । स्यान्नास्ति चावक्तव्यश्च । स्यादस्ति च नास्ति चावक्तव्यश्चेत्याहुः क्षपणकाः । वस्तुनो यद्येकान्तसत्त्वं स्यात्तदा कोऽपि न प्रवर्तेत । सिद्ध इच्छाकृत्योरसंभवात् । यदि नास्तीत्येकान्तता । तदाऽपि प्रवृत्तिनिवृत्त्योरसंभवः । आप्तुमशक्यत्वान्नित्यनिवृत्तत्वाच्च । अनैकान्तिकत्वे तु क्वचित्कदाचित्कस्यचित्कथंचित्सत्त्वात्तत्संभव इति । स्यादितिनिपातोऽनियमद्योतकः । एवं च सत्त्वमसत्त्वं सदसत्त्वं, सद्विलक्षणत्वं, सत्त्वे सति तद्विलक्षणत्वमसत्त्वे सति तद्विलक्षणत्वं सदसत्त्वे सति तद्विलक्षणत्वमित्यनियतसप्तप्रकारमिथ्याभूतमिति कथं तत्रेशः कारणमिति प्राप्ते । नैवम् । एकस्मिन्धर्मिण्यनियतसत्त्वासत्त्वादीनां विरोधेनासंभवात् । व्यवस्थितसदसत्प्रकारद्वयातिरिक्तः प्रकारोऽप्रामाणिकः । अप्रामाणिकस्याप्यङ्गीकारे प्रकाराणां धारापत्तेः । सामान्याभावापत्तेर्वा सप्तत्वोक्त्ययोगात् । यत्तु शरीरपरिमित आत्मेति तत्सर्वशरीरगतचेष्टोपपत्त्यर्थं स्वी क्रियते । देहावच्छेदं विनाऽऽत्मनः परिमाणाभावप्रसङ्गभयाद्वा ॥ ३३ ॥

तत्राऽऽद्यं निरस्यति——

ॐ एवं चाऽऽत्माकार्त्स्न्यम् ॐ ॥ २ । २ । ३४ ॥

यथाऽऽत्मा सर्वशरीरचेष्टोपपत्त्यर्थं तत्परिमाणः स्यात्तर्हि पिपीलिकादिदेहस्थस्तत्परिमाणं स्यात् । तस्य कर्मवशादश्वादिदेहप्राप्तौ तत्रापूर्णता स्यात् । गजदेहस्थस्याणुदेहेऽतिरेकः स्यादिति देहपरिमाणभङ्गः ॥ ३४ ॥

ननु यदा यदा यद्देहं प्राप्नोति तदा तत्परिमाण इति शङ्कां निरस्यति——

ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥२। २ । ३५॥

तद्देहस्थस्याऽऽत्मनो देहपरिमाणत्वे देहस्य विकारत्वेनानित्यत्वेनाऽऽत्मनोऽपि तत्त्वापत्तिः । तथा चानिर्मोक्षप्रसङ्गेन शास्त्रवैयर्थ्यम् ॥ ३५ ॥

द्वितीयं निरस्यति—

**ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ २ । २ । ३६ ॥**

देहावच्छेदं विनाऽऽत्मनः परिमाणाभाव इति मते मोक्ष आत्मपरिमाणमस्ति न वाऽन्त्ये स्वरूपाभावप्रसङ्गात् । न हि परिमाणं विना द्रव्यमस्त्यतो मोक्षे परिमाणानुरोधेन देहः स्वीकृतः स्यात् । न चेष्टापत्तिः । स देहोऽनित्यो[ नित्यो ]वा । नाऽऽद्यः । संसारसमानतापत्तेः । यद्यात्मा देहश्चोभयं नित्यं तर्हीदानींतनसर्वदेहानां नित्यत्वापत्तेः । अन्त्यावस्थितेरन्त्यावयविनो देहस्य मोक्षेऽभावेनाऽऽत्माभावप्रसङ्गात् । देहस्य नित्यत्वे तूभयनित्यत्वाद्देहात्मनोराविशेषापत्तेरिति सूत्रार्थः । तस्माज्जैनमतस्यायुक्तत्वाद्युक्तं हरेः कारणत्वम् ॥ ३६ ॥

**ॐ पत्युरसामञ्जस्यात् ॐ ॥ २ । २ । ३७ ॥**

अत्र हरेर्जगत्कर्तृत्वे पाशुपतमतविरोधनिरासादस्ति संगतिः । तत्र पशुपतिः सर्वज्ञो जगत्कर्ता मायामुपादानीकृत्य हरिहरहिरण्यगर्भादिजगदुत्पत्त्यादि करोतीति प्राप्ते । यं यं कामये तं तमुग्रं कृणोति तं ब्रह्माणं तमृषिं तं सुमेधाम् । अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । पारतन्त्र्यजननमरणादिदोषित्वेन श्रुतो रुद्रो न जगत्कर्ता । ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे शरवे हिंसनशीलाय हन्तुं वै हन्तुमेव न तु भीषणाद्यर्थम् । एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमावित्यादिना पारन्त्र्येणासामञ्जस्याद्रुद्रो जगत्कर्ता ॥ ३७ ॥

युक्त्यन्तरमाह—

**ॐ संबन्धानुपपत्तेश्च ॐ ॥ २ । २ । ३८ ॥**

सृष्टेः प्रागप्रपञ्चेन रुद्रस्याशरीरत्वात्कार्यकारणभावसंबन्धानुपपत्तेर्न रुद्रः कर्ता ॥ ३८ ॥

युक्त्यन्तरमाह—

**ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ २ । २ । ३९ ॥**

भगवत इव रुद्रादेर्नित्यशरीरकत्वाभावेन निरधिष्ठानकत्वादपि न रुद्रादेर्जगत्कर्तृत्वम् । न रुद्रः कर्ता । निरधिष्ठानत्वात् । यः कर्ता स साधिष्ठानः । यथा कुलालादिः ॥ ३९ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ २ । २ । ४० ॥**

ननु रुद्रस्य देहाधिष्ठानाभावात्कर्तृत्वानुपपत्तिः । कारकग्रामस्यैव साक्षात्प्रयत्नेनाधिष्ठेयतयाऽस्मदादिदेहसमानत्वेन न देहान्तरापेक्षा । कारकस्य मायादेः प्रलये सत्त्वादिति चेन्न । यदि हि कारकग्रामस्यैव साक्षात्प्रयत्नाधिष्ठेयतया देहादिवदेव कर्तृतोपयोगिता तर्हि तदुपादानसाक्षात्प्रयत्नाधिष्ठेयदेहहानोपादाननिमित्तकोत्पत्तिमरणे इव तादृशकारकव्रातहानोपादाननिमित्तकोत्पत्तिमरणे च पशुपतेः स्याताम् । ततो दुःखादि स्यात्ततः कर्तृत्वं न स्यात् । न च स्वमतेऽप्ययं दोषः । आत्मनि चैवं विचित्राश्च हीत्यचिन्त्यशक्त्या समीहितत्वात् ॥ ४० ॥

युक्त्यन्तरमाह—

**ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ ॥ २ । २ । ४१ ॥**

अयं पशुपतिः शरीरी न वा । आद्ये परिच्छिन्नत्वान्न कर्तृत्वम् । द्वितीये देहाभावे नेच्छासंभवः । ननु हरावप्येते विकल्पा इति चेद्यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् । ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक इति । बुद्धिमान्मनोवानङ्गप्रत्यङ्गवानिति । स देहः सुखगन्धश्च ज्ञानभाः सत्यपराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमोक्षर इति श्रुतिभिरेव सर्वानुपपत्तिपरिहारः ॥ ४१ ॥

**ॐ उत्पत्त्यसंभवात् ॐ ॥ २ । २ । ४२ ॥**

अत्र शाक्तमतनिरासात्संगतिः । तत्र सर्वज्ञा हि गुणवती शक्तिरेव जगत्कर्त्रीति प्राप्ते । पुरुषाननुगृहीतायां स्त्रियां कार्योत्पत्त्यसंभवादित्यस्ति शक्त्यनुग्राहकपुरुषः ॥ ४२ ॥

पुरुषानुगृहीता शक्तिः कारणमिति मतं निरस्यति—

**ॐ न च कर्तुः करणम् ॐ ॥ २ । २ । ४३ ॥**

यदि पुरुषः शक्त्यनुग्राहकोऽङ्गी क्रियते तदा तस्योत्पत्त्युपयोगिज्ञानाद्यभावादुत्पत्त्यनुपपत्तिरेव ॥४३॥

ननु सर्वज्ञ एवास्त्विति शङ्कां निरस्यति—

**ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ २ । २ । ४४ ॥**

यदि नित्यज्ञानादि तस्याङ्गी क्रियते तत एव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भावः ॥ ४४ ॥

शाक्तमतत्रयं निरस्य समुदितं निरस्यति—

ॐ विप्रतिषेधाच्च ॐ ॥ २ । २ । ४५ ॥

सकलश्रुत्यादिविरुद्धत्वाच्च शाक्तमतं हेयम्। केचित्तु पञ्चरात्रे यदुच्यते— वासुदेवात्संकर्षणो नाम जीवो जायत इति। तन्न। जीवानादित्वस्य श्रुत्यादिसिद्धत्वेन कृतहानाद्यापत्तेः। जीवोत्पत्त्यसंभवादित्याद्येनोक्त्वा यच्चोच्यते संकर्षणाख्याज्जीवात्प्रद्युम्नो नाम मनो जायत इति। तदपि न। कर्तुः करणान्तरसहायं विना कर्तृत्वासंभवादिति द्वितीयेनोक्त्वाऽथ संकर्षणादयो न जीवरूपाः किंतु परमात्मरूपा एवेति तेषामपि तद्वदेव ज्ञानैश्वर्यादिसद्भाव इति मतम्। तथाऽप्युत्पत्त्यभावस्याप्रतिषेध एव सर्वेषां भगवद्रूपत्वेनातिशयाभावादिति तृतीयेनोक्त्वा। परस्परं वेदेन विप्रतिषेधश्चास्मिन् शास्त्रे दृश्यते। ज्ञानैश्वर्यादीनां क्वचिद्गुणत्वोक्तेः। क्वचिच्च स्वरूपोक्तेः। चतुर्वेदेषु परं श्रेयोनुपलब्ध्या शाण्डिल्य इदं शास्त्रमधीतवानिति वेदनिन्दादर्शनाच्चेति चतुर्थेनोक्तम्। तथा च पञ्चरात्राप्रामाण्यप्रतिपादकमाधिकरणमाहुस्तत्र ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोका इतिहासपुराणाः पञ्चमो वेद इत्यादिश्रुतिविरोधात्। कृतं शतसहस्रं हि श्लोकानां हितमुत्तमम्। इतिभारतोक्त्या पञ्चरात्रस्य निरुपपदश्लोकशब्दार्थत्वात्। भारतं पञ्चरात्रं च मूलं रामायणं तथा। इतिहास इति प्रोक्तं ब्राह्मं तु पुराणकमिति पाद्मोक्तेः। वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैव हि। दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपीति वाराहे। सांख्ययोगः पाशुपतं वेदारण्यकमेव च। ज्ञानान्येतानि भिन्नान्युताहो नेति चोच्यतामिति। सांख्ययोगः पाशुपतं वेदारण्यकमेव च। ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणेति सांख्यादीनां परस्परं विरोधमुक्त्वा— पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्। ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते। पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप। एकान्तभावोपगता वासुदेवं विशन्ति ते। इदं महोपनिषदं चतुर्वेदसमन्वितम्। सांख्ययोगकृतान्तेषु पञ्चरात्रानुशब्दितम्। अस्मात्प्रवक्षते धर्मान्मनुः स्वायंभुवः स्वयम्। वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ। तत्र प्रशासते राज्यं धर्मेणामित्रघातिनः। × नानृता पञ्चरात्रकं समभवन्मनोष्टं नचाभवत्। संस्थिते

× महाभारते दृष्ट्वैतत्प्रकरणमत्रत्या त्रुटिः पूरयितव्या।

तु नृपे तस्मिन्शास्त्रमेतत्सनातनम् । अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मयेति महाभारते । वेदसमत्वस्योपनिषत्त्वस्य साक्षात्प्रामाण्यवेदमूलत्वयोर्मनुस्मृतेरेतन्मूलकत्वस्याप्युपदेशप्रवर्तितत्वस्यासत्कालेऽनिविरोधो तस्य चोक्तत्वात् । श्रुत्वा ब्रह्ममुखाद्रुद्रः स देवेभ्योऽश्रावयत्पुनरिति । ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोऽक्षतम् । इदं शास्त्रं प्रजापालोत्तमो वोऽभिधास्यति । कृतं शतसहस्रं वै श्लोकानां हितमुत्तममिति । उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः । तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धतम् । युष्मत्कृतमिदं शास्त्रं प्रजापालोऽवदत्ततः । बृहस्पतिसकाशाद्वै प्राप्स्यनि(सि) द्विजसत्तमेत्यादिना शिष्टपरिग्रहोक्तेश्च । तथा वक्ता नारायणः स्वयमिति वक्तुर्भ्रान्त्याद्यभावस्य हितकाम्ययेत्यादिना विप्रलिप्स्याद्यभावस्य चोक्तेः । तथा च गौण्यसंभवादिति न्यायेन श्रुत्यन्तरविरोधेन श्रुतेर्गौणार्थत्ववत्पञ्चरात्रेऽपि श्रुतिविरुद्धांशस्य गौणार्थत्वमेव त्वयाऽपि वाच्यं तत्त्वप्रामाण्यम् । किंच यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । ज्ञानघन एव एतेभ्यः समुत्थाय तान्येवानुविनश्यति । यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्व एवाऽऽत्मानो व्युच्चरन्तीति श्रुतावपि जीवोत्पत्तिः श्रूयते । न च श्रुतिर्देहयोगात्तत्परा । पञ्चरात्रस्यापि तथात्वात् । प्रत्युत त्वन्मत एव विशिष्टरूपो जीवो न नित्यः । जीवशब्दलक्ष्यशुद्धचिद्रूपबिम्बगतत्वेन बन्धमोक्षयोर्वैयधिकरण्यादिदोषापत्तेश्च । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादौ जीवरूपस्य सादित्वस्वीकाराच्च । किंच वासुदेवात्संकर्षणस्योत्पत्तिरित्यादावचिन्त्यशक्तेर्भगवत उपासकार्थं नाना नित्यसंकर्षणादिरूपेणाऽऽविर्भावाच्च । उक्तं हि भारतादौ-सृष्ट्वा संकर्षणं देवं स्वयमात्मानमात्मना । सृज त्वमात्मना कृष्ण प्रद्युम्नं चाऽऽत्मसंभवम् । प्रद्युम्नाच्चानिरुद्धत्वं यं प्राहुर्विष्णुमव्ययम् । अनिरुद्धोऽसृजत्सोऽयं ब्रह्माणं लोकधारिणमिति ॥ ४५ ॥

इति श्रीवेदान्तसिद्धान्तमुक्तावल्यां सारसंग्रहे ब्रह्मसूत्रे द्वितीयाध्यायस्य द्वितीयः पादः ।

अथ तृतीयः पादः ।

श्रुत्यविरोध उच्यतेऽस्मिन्पादे-

**ॐ न वियदश्रुतेः ॐ** ॥ २ । ३ । १ ॥

श्रुतिविरोधोऽधिभूताध्यात्मभेदेन द्विधा । तत्र जिज्ञासोरध्यात्मविषयविचारस्यान्तिमत्वादधिभूतादिविषयश्रुतीनामत्र परिहारः । अत्र ज्ञोऽत एवेत्यारभ्याऽऽपादसमाप्तेर्जीवविचारः । 'असंभवस्तु' 'नाऽऽत्मा श्रुतेः' इत्यधिकरणद्वये परमात्मविचारः । एकैकस्मिन्नधिकरणेऽधिभूतादिविचारः । विचारबाहुल्यात्क्रमोल्लङ्घनम् । अधिभूतं भूतानि । अध्यात्ममिन्द्रियाणि । अधिदैवं तदभिमानी देवता । अत्र हरेः सर्वस्रष्टृत्वं वियदनुत्पत्तिश्रुतिविरुद्धं न वा । तत्राऽऽकाशस्योत्पत्त्यङ्गीकारे बहुमानविरोधः । वियदनुत्पत्तिमद्विभुत्वादिति प्राप्ते । न वियदनुत्पत्तिमत् । तथा मानाभावात् ॥ १ ॥

ननूत्पत्तौ मानाभाव एव मानमिति शङ्कां निरस्यति-

**ॐ अस्ति तु ॐ** ॥ २ । ३ । २ ॥

आत्मन आकाशः संभूत इत्युत्पत्तौ श्रुतिरस्ति ॥ २ ।

न त्वनादित्वश्रुतिविरोध इति शङ्कां निरस्यति-

**ॐ गौण्यसंभवात् ॐ** ॥ २ । ३ । ३ ॥

अनादिर्वाऽयमाकाशः शून्यो लौकिक इत्यादिर्गौणी । अन्यथोत्पत्तिश्रुतिबाहुल्यासंभवात् । आकाशे नीलिमोदेतीति श्रुतेः । रूपवत्त्वेनोत्पत्तिः । आकाशतदभिमानिनोः पराधीनविशेषलाभलक्षणोत्पत्तिर्मुख्या ॥ ३ ॥

श्रुतिमुदाहरति-

**ॐ शब्दाच्च ॐ** ॥ २ । ३ । ४ ॥

अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इत्यथ यान्यनित्यानि प्राणाः श्रद्धा भूतानि भौतिकानीति भूतानित्यत्वश्रुतेः ॥४॥

नन्वनुत्पत्तिर्न भाक्ता । न जायते म्रियत इत्यादौ मुख्यत्वदर्शनादिति शङ्कां निरस्यति-

**ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ** ॥ २ । ३ । ५ ॥

यथा ब्रह्मशब्दः परमात्मनि मुख्यश्चतुर्मुखे चामुख्यस्तथाऽनादिशब्दो ब्रह्मणि मुख्य आकाशे चामुख्यः ॥ ५ ॥

युक्त्यन्तरमाह—

**ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ २ । ३ । ६ ॥**

ब्रह्मणोऽन्यस्य नित्यत्व इदं सर्वमसृजतेति प्रतिज्ञाहानिः । आकाशस्यापि सर्वस्मादव्यतिरेकात् । आत्मा वा इदमेक एवाग्र आसीत् । सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । इदं वा अग्रे नैव किंचनाऽऽसीदिति श्रुतिभ्यः ॥ ६ ॥

अनुमानेन हरेरेवानादित्वमाह—

**ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ २ । ३ । ७ ॥**

यावद्विकारं विभागः । विकारं विना नास्तीत्यर्थः । लोकवत्संमतवत् । अविभागात्परानन्दो नित्यो नित्यगुणात्मकः । विभागो ह्यल्पशक्तिः स्यान्न तदस्ति जनार्दन इति स्मृतेः । वियदुत्पत्तिमद्विभक्तत्वाद्घटादिवत् । ब्रह्म नोत्पत्तिमदविभक्तत्वाद्व्यतिरेकेण घटादिवत् । एको विभक्तः परमः पुरुषो विष्णुरुच्यते । प्रकृतिः पुरुषः कालस्त्रय एते विभागतः । चतुर्थस्तु महान्प्रोक्तः पञ्चमाऽहंकृतिर्मता । तद्विभागेन जायन्त आकाशाद्याः पृथक् पृथक् । यो विभागी विकारः स सोऽविकारः परो हरिः । स्मृतेः पराधीनविशेषावाप्तिः प्रकृतेरुत्पत्तिः । सा चास्ति ब्रह्मान्येषामिति ॥ ७ ॥

**ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ २ । ३ । ८ ॥**

अत्र वायोर्नित्यत्वश्रुतिविरोधो निरस्यते । तत्र वायुरनादिः । वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते । वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि जायन्त इति प्राप्ते । मुख्यवायुरुत्पत्तिमानेव । अनुत्पन्नत्वेनाश्रुतत्वात् । प्राणाद्वायुरजायतेत्यादावुत्पन्नत्वेन श्रुतत्वाच्च । न चोक्तश्रुतिविरोधः । स्वरूपविषयकत्वेनैवाऽऽकाशानुत्पत्तिश्रुतिव्याख्यानेनैव व्याख्यातत्वात् । उत्पत्तिश्रुतेः शरीरविषयत्वात् । न वाऽत्र मानाभावः । अथ हैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति । प्राणः श्रद्धाऽऽकाश इति श्रुतेः ॥ ८ ॥

**ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ ॥ २ । ३ । ९ ॥**

अत्र ब्रह्मोत्पत्तिश्रुतिविरोधो निरस्यते । तत्र—असद्वा इदमग्र आसीत्ततो वै सदजायतेति सतोऽपि ब्रह्मण उत्पन्नत्वान्न जगत्कारणत्वमिति प्राप्ते ।

न ब्रह्मण उत्पत्तिर्मानाभावात् । न चोक्ता श्रुतिर्मानम् । असतः कार्योत्पत्तेरदृष्टत्वादसंभवाच्च । न साधत इत्यरुद्ब्रह्मैव । न त्वासादयति कश्चनेति श्रुतावेतदिति शेषः ॥ ९ ॥

ॐ तेजोऽतस्तथा ह्याह ॐ ॥ २ । ३ । १० ॥

अत्र तेजोजन्मश्रुतिविरोधो निरस्यते । तत्र वायोरग्निरितिश्रुतेर्न विष्णोः सर्वस्रष्टृत्वमिति प्राप्ते । न वायोरग्नेरुत्पत्तिर्ग्राह्या । तत्तेजोऽसृजदितिश्रुत्या हरेरेव तदुक्तेः । वायुद्वारा ब्रह्मण एवाग्नेरुत्पत्तेः ॥ १० ॥

ॐ आपः ॐ ॥ २ । ३ । ११ ॥

अत्रापां जन्मश्रुतिविरोधो निरस्यते । तत्र तेजस एवाबुत्पत्तिः । अग्नेरापो जायन्त इति श्रुतेः । न चान्यश्रुतिविरोधः । विमता आपस्तेजसो जायन्ते । अप्त्वात्स्वेदादिवदिति तेजोजन्मश्रुतेः सयुक्तिकत्वादिति प्राप्ते । ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत । तदिदं सर्वमिति श्रुतेः । न चान्यश्रुतिविरोधः । तेजोद्वारा हरेरेव तदुक्तेः । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्यादिमानात् ॥ ११ ॥

ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ २ । ३ । १२ ॥

सर्वस्य साक्षादन्यद्वारा वा ब्रह्मकार्यत्वे सिद्धे द्वारविषयकश्रुतिविरोधो निरस्यते । तत्र ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहीति । ता अन्नमसृजन्तेत्यद्भ्योऽन्नसृष्टिः श्रूयते । अद्भ्यः पृथिवीति कुत्रचित्पृथिवीसृष्टिरतो विरुद्धत्वादप्रामाण्यमिति प्राप्ते । पृथिव्येवान्नपदेनोच्यते । तत्तेजोऽसृजत तदपोऽसृजत । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादेः प्रकरणस्य भूतविषयत्वात् । यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येत्यस्यां श्रुतावन्नस्य कृष्णरूपं प्रतीयते । तच्च प्राचुर्येण पृथिव्या लिङ्गम् ॥ १२ ॥

ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ २ । ३ । १३ ॥

एवमधिभूताधिदैवोत्पत्तिविषयकश्रुतिविरोधं निरस्य तत्संहारविषयकश्रुतिविरोधं निरस्यति । तत्र प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाऽऽप्यायस्वेत्यन्यः संहर्तेति प्राप्ते । तदभिध्यानाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यनादिबन्धलयस्य निमित्तत्वलिङ्गात् । सादिप्रलयकर्तृत्वं सुतरां तस्य

तदभिध्यानात्तस्मिन्मनोयोजनात् । अन्ते परिपाके विपुलबन्धकमाया-निवृत्तिः । न चोक्तवाक्यविरोधः । तमोद्रेकाच्च कल्पान्ते रूद्ररूपी जनार्दनः । मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः ॥ इति हरेरेव तद्रूपेण संहर्तृत्वोक्तेः ॥ १३ ॥

ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ २ । ३ । १४ ॥

अत्राधिभूतादिसंहारश्रुतिविरोधो निरस्यते । तत्र यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्यविशेषश्रवणात् । उत्पत्तिक्रमस्योपस्थितत्वादनियमेनोत्पत्तिक्रमेणैव वा लयः । इदं पराक्रमादुपपद्यते । क्रमाद्विलीयते इति श्रुतेरिति प्राप्ते । व्युत्क्रमेणैव लयः । न चोभयथाश्रवणात्कुतो नियमः । लोक आरोहणाद्वैपरीत्येनावरोहणदर्शनेन व्युत्क्रमश्रुतेः सयुक्तिकत्वात् । जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते तेजो वायौ प्रलीयते । इति व्युत्क्रमेण स्मृतावपि लयोक्तेः ॥ १४ ॥

ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥ २ । ३ । १५ ॥

अत्राधिभूतादिलयश्रुतिविरोधो निरस्यते । तत्र न सर्वाणि व्युत्क्रमेणैव लीयन्ते । विज्ञानत्वं मनसस्तत्त्वादुत्पन्नम् । मनसश्च विज्ञानमिति श्रुतेः ॥१५॥

पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लयः । यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानमात्मनीति श्रुतेरिति प्राप्ते । न क्रमेण लयः । लिङ्गस्याविशेषात् ॥१६॥ तदेवाऽऽह—

ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ॥ २ । ३ । १६ ॥

यद्यपि यच्छेद्वाङ्मनसीति तत्त्वलयोपक्रमस्तथाऽपि तेषां न तथोत्पत्तिः । विज्ञानतत्त्वान्मनस्तत्त्वस्योत्पत्तेः । तद्व्यपदेशो मनसश्च विज्ञानमिति व्यपदेशो भवति । तथा चायं व्यपदेशो भाक्तो मनोरूपेन्द्रियावबोधविषयः । न चेन्द्रियादिपरत्वासंभवः । चराचरविषयकमनोभावेन चराचरव्यपाश्रयस्तद्विषयको बोधो मनोविज्ञानतत्त्वेन्द्रियावबोधसाधारणो न तु मनोविज्ञानतत्त्वविषयकः ॥ १६ ॥

ॐ नाऽऽत्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥२।३।१७॥

अत्रेशलयश्रुतिविरोधो निरस्यते । ईशो लीयते न वा । नित्यानां नित्योऽन्तस्तमसि निलीन इति श्रुतौ संदेहबीजे । तत्र परेशो लीयते तमसि निलीन इति श्रुतेः । न चेयं नेशपरा । इदं सर्वमसृजतेत्यादि-तल्लिङ्गात् । ईशो लयवांश्चेतनत्वाज्जीववदित्यादियुक्तेश्चेति प्राप्ते । नेशो लीयते । तल्लयस्याश्रुतत्वात् । नित्यो नित्यानामिति नित्यत्वोक्तेश्च । एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति । नैनं पश्यति कश्चनेति श्रुतेः । तथा च द्रष्ट्रन्तराभावेनादृश्यत्वरूपनिलीनत्वम् । प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः पुरुषोत्तम इति वैष्णवे हरेः सर्वाधारत्वोक्तेः ॥ १७ ॥

ॐ ज्ञोऽत एव ॐ ॥ २ । ३ । १८ ॥

अत्र जन्मश्रुतिविरोधं निरस्यति । तत्र सर्वकर्ता विष्णुरित्युक्तं न युक्तम् । जीवस्यानादित्वादिति प्राप्ते । सर्वं एत आत्मानो व्युच्चरन्तीति श्रुतेर्जीव उत्पद्यते । जीवनित्यत्वश्रुतिः स्वरूपाभिप्राया देहादिनामरूपोत्पत्तिश्रुत्या न विरुद्धा ॥ १८ ॥

न चानादित्वमङ्गीकृत्योत्पत्तिवचनस्य वन्ध्यात्वमुपेत्य मातृत्वसाम्यादित्याशङ्कां निरस्यति—

ॐ युक्तेश्च ॐ ॥ २ । ३ । १९ ॥

तदुपाधेरुत्पन्नत्वादुत्पत्तिः । न चोपाधिमात्रं जीवोत्पत्तिः । पराधीनविशेषलाभस्योत्पत्तेरत्र विवक्षितत्वात् ॥ १९ ॥

ॐ उत्क्रान्तिगत्या गतीनाम् ॐ ॥ २ । ३ । २० ॥

अत्र जीवपरिमाणश्रुतिविरोधं निरस्यति । तत्र जीवो व्याप्त एव । व्याप्ता ह्यात्मान इति श्रुतेरिति प्राप्ते । जीवोऽणुरेव । गत्यादिमत्त्वात् । पत्रिशरीरवत् । न च मध्यमपरिणामः । अनित्यत्वापत्तेः । स यदाऽस्माच्छरीरादुत्क्रामति सहैव तैरुत्क्रामतीत्युत्क्रान्तिः । ये चैके चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते गच्छन्तीति गतिः । तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मण इत्यागतिश्च श्रूयते । न हि विभोस्ता युक्ताः ॥ २० ॥

जीवस्याणुत्वे सिद्धे प्रसङ्गात्किंचिच्चिन्त्यते । तत्र एकः प्रसूयते जन्तुरेक एव प्रमीयत इत्यादिश्रुत्यनुसारात्स्वयमेव जीवस्य गत्यादौ स्वातन्त्र्यमित्यत आह—

ॐ स्वात्मना चोत्तरयोः ॐ ॥ २ । ३ । २१ ॥

स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मेति । एष ह्येवाऽऽनन्दमादत्त एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष आगमयतीत्युत्तरयोर्वाक्ययोरीशपरत्वात् ॥ २१ ॥

उक्तमाक्षिप्य समाधत्ते—

ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ २ । ३ । २२ ॥

ननु व्याप्ता ह्यात्मान इत्यणुत्वविरोधिश्रुतेर्नाणुरिति चेन्न । स आत्मेदं सृजति बिभर्त्यन्तर्बहिश्चेत्यादेरीशाधिकारात् ॥ २२ ॥

ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २ । ३ । २३ ॥

एषो ह्यात्माऽभ्युद्गतो मानशक्तेरित्यात्मा शब्दोन्मानाभ्यां च हरिरेव सः । मानातिक्रान्तत्वं साकल्येन बहुवचनं त्ववनाशाद्यभिप्रायेण पाशाधिकरणन्यायेन युक्तम् ॥ २३ ॥

नन्वणोः सर्वस्मिन्देहे भोगानुपपत्तिरिति शङ्कां निरस्यति—

ॐ अविरोधश्चन्दनवत् ॐ ॥ २ । ३ । २४ ॥

यथा हरिचन्दनविप्रुषः शरीरैकदेशपातिनायाः सर्वदेहव्याप्तिस्तथाऽणोर्जीवस्यापि सर्वव्यापित्वसंभवादणोरप्यनुभवोपपत्तिः ॥ २४ ॥

ननु विपरीतदृष्टान्तोऽपि संभवतीति शङ्कां निरस्यति—

ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥२।३।२५॥

ननु चन्दनबिन्दोः शरीरैकदेशे सम्यगवस्थानस्यान्यत्रासम्यगवस्थानस्य चानुभवसिद्धत्वेन तथात्वस्य संभवः । न ह्यात्मनः क्वचिच्छरीरदेशे सम्यगवस्थानं क्वचिदसम्यगवस्थानमस्तीति चेन्न । हृदि ह्येष आत्मेति श्रुतेरात्मनोऽपि सम्यगवस्थानासम्यगवस्थानाभ्युपगमात् ॥ २५ ॥

स्वरूपतद्दशाभ्यामप्राप्तिप्रा(प्ति)रुक्ता । तत्र दृष्टान्तमाह—

ॐ गुणाद्वाऽऽलोकवत् ॐ ॥ २ । ३ । २६ ॥

यथाऽऽलोकस्य प्रभया व्याप्तिः स्वरूपेणाव्याप्तिस्तथा जीवस्य ज्ञानादिगुणेन व्याप्तिः स्वरूपेणाव्याप्तिः । न च गुणिनोऽणुत्वे गुणस्य व्याप्तिरयुक्ता । आलोकवदुपपत्तेः । न च प्रभा द्रव्यं, मानाभावात् । न च रूपित्वं मानं, घटादिरूपस्यैवोपलम्भात् । न हि व्योम्नि वर्तमानप्रभायां रूपं गृह्यते । न च रूपात्पृथगवस्थितिर्मानम् । तस्य द्रव्यस्य साधकतायां विवादात् । न च दीपावयवा आलोकः । दीपानुविधानाद्यनुपपत्तेः । न हि जीर्णकन्थातन्तूनां विकीर्णानां कन्थया सहानुविधानमस्ति । क्रमेणाप्रकाशाबाहुल्यापत्तेः । युगपदुत्पन्ना अवयवाः सर्वतो विकीर्णा इत्यनुभवाच्च । व्याप्तिसाधकानुमानं तु घटादिव्याप्तिसाधकाभाससमम् ॥२६॥

**ॐ व्यतिरेको गन्धवत्तथा हि दर्शयति ॐ ॥ २ । ३ । २७ ॥**

अत्र जीवविषयकश्रुतिविरोधो निरस्यते । अत्र जीव एकरूपोऽनेकरूपो वा । एकरूप एव स एकधा । न सप्तधा न दशधेति श्रुतेरिति प्राप्ते । अस्त्येव बहुत्वम् । अणोरप्यंशैर्बहुत्वोपपत्तेः । नन्वंशिनं विहायान्यत्रांशस्य गमनमनुपपन्नम् । गन्धादौ तथा दृष्टत्वात् । ऐक्यश्रुतेः स्वरूपाविभ्रमकत्वात् । न च भिन्नांशशून्यत्वादनुपपत्तिः । योगसंपदा तदुपपत्तेः । न चेश्वरसाम्यापत्तिः । योगिनामपि बहुत्वशक्तेर्योगाराधितेशप्रसादापन्नत्वात् । किमत्र मानमिति चेद्यथैक एव सन् गन्धवद्व्यतिरिच्यते । अथैकीभवत्यथ बह्वी भवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति । सोऽचिन्त्यः परम इति श्रुतिरेव ॥ २७ ॥

**ॐ पृथगुपदेशात् ॐ ॥ २ । ३ । २८ ॥**

अत्र जीवेशाभेदश्रुतिविरोधो निरस्यते । जीवः पराभिन्नो भिन्नो वा । तत्त्वमसीति श्रुतेरभिन्न एव जीव इति प्राप्ते । भिन्न एव परेशात् । भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसंघो ह्यपूर्णः । ज्ञाज्ञौ द्वावजावीशानीशौ पृथगात्मानं प्रेरितारं च मत्त्वा जुष्टस्ततस्तेनामृतत्वमेति । यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजातः स केवलीभूतः षड्विंशमनुपश्यतीत्यादिश्रुतिस्मृतिभिर्भेदोपदेशात् । न च विनिगमनाविरहः । द्वैतश्रुतेर्विरुद्धधर्माधिकरणत्वयुक्तिसनाथत्वात् ॥ २८ ॥

ननु द्वैतश्रुतेरप्रामाण्यं स्यादिति शङ्कां निरस्यति--

**ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २ । ३ । २९ ॥**

नाद्वैतश्रुतेरप्रामाण्यम् । परमात्मगुणसदृशानन्दादिगुणयुक्तत्वेन जीवस्याभेदव्यपदेशो गौण्या यथा सकलजगद्गुणसदृशगुणत्वेन प्राज्ञः परेशः सर्वं खल्विदं ब्रह्मेति व्यपदिश्यते तथा जीवः ॥ २९ ॥

**ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ २ । ३ । ३० ॥**

अत्र जीवानित्यत्वविरोधो निरस्यते । तत्रानित्य एव जीवः । स चाऽऽनन्त्याय कल्पत इति श्रुतेः । उपाधेरनित्यत्वेन प्रतिबिम्बस्यानित्यत्वदर्शनाच्चेति प्राप्ते । नित्य एव जीवः । प्रतिबिम्बनाशस्य वियोगोपाधितत्संनिधिनाशं विनाऽनुपपत्तेः । बिम्बस्येशस्य नित्यत्वादुपाधेर्यावदीशभावित्वात् । सर्वगतस्य संनिधेरपि सत्त्वात् । अनित्यत्वश्रुतेर्बाह्योपाधिविषयकत्वात् । उक्तं हि—जीवोपाधिर्द्विधा प्रोक्तः स्वरूपो बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे तु प्रतिबिम्बः कथं भवेत् । कथं चाऽऽत्मविनाशाय प्रयत्नस्तस्य सेत्स्यति । तथा च यावत्परमात्मा तिष्ठति तावज्जीवस्तदुपाधिकस्तिष्ठत्यनाद्यनन्तत्वेन । एवं जीवोऽपि नित्य इति दर्शनात् ॥ ३० ॥

**ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ २ । ३ । ३१ ॥**

अत्र जीवविषयकश्रुतिविरोधो निरस्यते । जीवो ज्ञानादिरूपो न वेति चिन्तायां रसं लब्ध्वाऽऽनन्दी भवति, सोऽज्ञानाद्विमुक्तो ज्ञानी भवति, इत्यादिज्ञानाद्यात्मक इति प्राप्ते । अस्त्येवाऽऽनन्दादिस्वरूपः । न चोक्तवाक्यविरोधः । यथा हि पुरुषयोषिदादीनामपत्योत्पत्तिशक्तिस्वरूपसत्त्वेऽपि कालतस्तदभिव्यक्तेर्नायं पूर्वं पुमानिदानीं पुमानित्यादि युज्यते तथा मुक्तेः पूर्वं सतोऽपि ज्ञानानन्दादेरीशप्रसादेनाभिव्यक्तिनिमित्तेनाऽऽनन्दी भवतीत्यादिव्यपदेशोपपत्तेः ॥ ३१ ॥

युक्त्यन्तरमाह—

**ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरानियमो वाऽन्यथा ॐ । २।३।३२॥**

यदि जीवस्वरूपस्याऽऽनन्दादिरूपत्वमङ्गीकृत्यावरणाभावात्तन्निवृत्तिर्नोपेयते तर्हि देवानां मोक्षयोग्यानां नित्यमानन्दानुभवः स्यात् । असुरादीनां न कदाऽप्यानन्दानुभवः स्यात् । मध्यममानुषाणां च नित्यमानन्दादीनामुपलब्धिर्दुःखोपलब्धिश्च सैव स्यात् ॥ ३२ ॥

**ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ २ । ३ । ३३ ॥**

अत्र जीवकर्तृत्वबोधकश्रुतिविरोधो निरस्यते । जीवः कर्ता न वेति चिन्ता । यादृश एव कर्ता नान्यः कर्तेति श्रुतेरिति प्राप्ते । जीवस्यापि कर्तृत्वम् । अन्यथा विधिनिषेधशास्त्रं व्यर्थं स्यात् । अतस्तत्सार्थक्याय जीवस्यापि कर्तृत्वमुपेयम् ॥ ३३ ॥

ननु जीवस्य स्वतः कर्तृत्वाभावेऽपि परगतकर्तृत्वे विवेकाग्रहोऽस्त्येवात-स्तादृशकर्तारं प्रति शास्त्रमर्थवदिति शङ्कां निरस्यति—

**ॐ विहारोपदेशात् ॐ ॥ २ । ३ । ३४ ॥**

न जीवस्य काल्पनिकं कर्तृत्वम् । जक्षन्क्रीडन्रममाणः स्त्रीभिर्यानैर्वेत्यादि-श्रुत्या मोक्षे कर्तृत्वोपदेशात् ॥ ३४ ॥

ननु संसारे कल्पितमेव तदस्त्विति शङ्कां निरस्यति—

**ॐ उपादानात् ॐ ॥ २ । ३ । ३५ ॥**

मोक्षार्थं शास्त्रोपादानात् । ततश्च फलदर्शनात् । न च परानुष्ठि-तात्स्वीयत्वेन ज्ञानात्कर्मणः फलोत्पत्तिः ॥ ३५ ॥

श्रुत्याऽपि तत्साधयति—

**ॐ व्यपदेशाच्च क्रियायां चेन्न निर्देशविपर्ययः ॐ ॥ २ । ३ । ३६ ॥**

आत्मानमेव लोकमुपासीतेत्यादावुपासनादिकर्तृत्वोपदेशात् । अन्यथा जीवातिरिक्तस्य जडस्येशस्यासंभवेन प्रयोजनाभावेन चोपासाकर्तृत्वाभावान्नि-र्देशो निरर्थकः ॥ ३६ ॥

ननु कथं तर्हीश एव कर्तेति प्रागुक्तमिति शङ्कां निरस्यति—

**ॐ उपलब्धिवदनियमः ॐ ॥ २ । ३ । ३७ ॥**

यथेदं वस्त्वहं जानामीति जीवज्ञाने नियमो नास्ति स्वेच्छया न ज्ञानलाभस्तथा करोतीति क्रियायामपि । ईशस्य तु तत्सत्त्वात्स एव कर्ते-त्युक्तं न तु सर्वथा जीवो न कर्तेति । य आत्मानमन्तरो यमयतीति स्वतन्त्रकर्तृत्वस्य तत्रैवोक्तत्वात् ॥ ३७ ॥

स्वातन्त्र्यपारतन्त्र्यनिमित्तौ नियमानियमाविति परिहारं वक्तुं जीवेशयोः स्वातन्त्र्यपारतन्त्र्ये साधयति—

**ॐ शक्तिविपर्ययात् ॐ ॥ २ । ३ । ३८ ॥**

ईशस्य पूर्णशक्तिमत्त्वात्स्वातन्त्र्यं, जीवस्य तदभावादस्वातन्त्र्यम ॥ ३८ ॥

युक्त्यन्तरमाह—

ॐ समाध्यभावाच्च ॐ ॥ २ । ३ । ३९ ॥

समाधानमलंबुद्धिरीशस्यास्ति तस्य स्वातन्त्र्यम् । तदभावाज्जीवस्यास्वातन्त्र्यम् ॥ ३९ ॥

ननु जीवस्य परतन्त्रत्वे कर्तृत्वं न स्यात् । स्वतन्त्रः कर्तेति शङ्कां निरस्यति—

ॐ यथा च तक्षोभयथा ॐ ॥ २ । ३ । ४० ॥

यथा ह्यनियतोऽपि तक्षा कर्तोच्यते तथा जीवोऽपि ॥ ४० ॥

ननु जीवस्य कर्तृत्वं तक्ष्ण इव चेतनाधीनं, नेशस्यापि तत्र कर्तृत्वमिति वा । आद्य ईशस्यैव कर्तृत्वान्मतहानिः । द्वितीये न जीवस्य कर्तृत्वमिति शङ्कां निरस्यति—

ॐ परात्तु तच्छ्रुते ॐ ॥ २ । ३ । ४१ ॥

कर्तृत्वं परेशात् । कर्तृत्वं कारणत्वं च स्वभावश्चेतनावृत्तिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति श्रुत्येशाधीनं जीवनिष्ठकर्तृत्वमुक्तमिति । नायं सिद्धान्तः ॥ ४१ ॥

ननु तदधीनकर्तृत्वं तस्यैव न जीवस्येत्युक्तदोषतादवस्थ्यमिति शङ्कां निरस्यति—

ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ २ । ३ । ४२ ॥

यतोऽयं परो विधिनिषेधावैयर्थ्याय वैषम्यादिपरिहाराय च जीवस्यानादिकर्मप्रलययोग्यतापेक्ष एव जीवं प्रेरयति न त्वनपेक्ष इति नोक्तदोषः ॥४२॥

ॐ अंशो नानाव्यपदेशादन्यथा वाऽपि दाशकितवादित्वमधीयत एके ॐ ॥ २ । ३ । ४३ ॥

अत्र जीवविषयकश्रुतिविरोधो निरस्यते । तत्र जीवो हरेरंशोऽनंशो वेति चिन्तायां नांश इति निर्णयः । नैवांश इति श्रुतेः । नाप्यनंशत्वानिर्णयः । अंशा एवेति श्रुतेः । न च विकल्पः । वस्तुनि तदभावात् । अतोऽप्रमाणमिति प्राप्ते । जीवोंऽश एव । मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः । द्वा सुपर्णा सयुजा सखायाविति श्रुतौ, पिताऽहमस्य जगतो माता धाता पितामहः । त्वमेव माता च पिता त्वमेव

त्वमेव बन्धुरित्यादिस्मृतौ च नानासंबन्धव्यपदेशात् । संबन्धित्वमेवांशत्वमत्र द्रोणो बृहस्पतेर्भागः, कर्णः सूर्यांशोऽर्जुनः शक्रांशः, चन्द्रमण्डलाद्गुरुमण्डलं शतांशमित्यादौ तद्भिन्नत्वे सति तत्सदृशत्वादिकमंशत्वमुक्तं यथा तथा तादृशसंबधानां जीवेऽपि सत्त्वात् । अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं कस्यापि कश्चनेत्यन्यथा च श्रुतिः । ब्रह्मदाशा ब्रह्मदासा ब्रह्मकितवा ब्रह्मैव दाशा इत्यभेदेनाप्येकेऽधीयते । आत्मा वै जायते पुत्र इत्याद्यनुसारेण दाशोपलक्षितजीवानां देहादिनामरूपोत्पत्तिर्हरेर्भवतीत्यभेदव्यपदेशात् । अन्यश्च परमो राजंस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येका एवेति साधव इत्याद्यनुसारादन्तर्यामितया स्थितत्वेनाभेदव्यपदेशाद्वा ॥ ४३ ॥

श्रुतिमप्याह—

**ॐ मन्त्रवर्णात् ॐ ॥ २ । ३ । ४४ ॥**

पादोऽस्य विश्वा भूतानीत्यादिश्रुत्यांऽशोक्तिः ॥ ४४ ॥

**ॐ अपि स्मर्यते ॐ ॥ २ । ३ । ४५ ॥**

ममैवांशो जीवलोके जीवभूतः सनातन इति स्मृतिः ॥ ४५ ॥

अनंशत्वश्रुतेर्गतिमाह—

**ॐ प्रकाशादिवन्नैवं परः ॐ ॥ २ । ३ । ४६ ॥**

यथा मत्स्यादयः स्वरूपाभिन्नांशास्तथा जीवः परस्यांशो न भवति । तेजोंशस्य कालाग्नेः खद्योतस्य च । यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च भेदस्तथा स्वरूपांशाभिन्नत्वेनांशत्वोक्तिः ॥ ४६ ॥

**ॐ स्मरन्ति च ॐ ॥ २ । ३ । ४७ ॥**

एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् । अंशावतारः पुरुषोत्तमस्य । अंशेनावतीर्णो भगवानित्यादिभगवदंशैः सर्वमवतिष्ठत इत्युक्तम् । के तेंऽशा इत्याकाङ्क्षायां वराहादीनामंशत्वमुक्त्वा जीवानामपि तदुक्तम् । ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः । इति । तथा च मत्स्यादयोऽभिन्नांशाः । जीवस्तु भिन्नांशः ॥ ४७ ॥

युक्त्यन्तरमाह—

**ॐ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॐ ॥ २ । ३ । ४८ ।**

जीवस्य परांशत्वेऽपि परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च । य आत्मानमन्तरो यमयति । तमेव विदित्वाऽमृत इह भवतीति । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । इति प्रतीयते न तु परस्य । वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधा सहस्रधाऽहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते तेषामनुज्ञा न बन्धो न मुक्तिः । सर्व एव ह्येते अजरा अमृताः परमानन्दा इति श्रुतेः । न मे मोक्षो न बन्धनमिति स्मृतेश्च । अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः । अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिके हरिः । अदेहबन्धयोग्यत्वाद्यथा सूर्यप्रभाऽक्षिणि । यथाऽमृतं समुद्रस्य श्लेष्मादेश्च द्विरूपता । अनुग्राह्यत्वमन्यस्य तेनैवाऽऽवृत्तिरोधनमिति वाराहोक्तेः । यथा वियद्गतादित्यस्तत्प्रकाशश्चैकप्रकारस्तदंशस्य चक्षुषो न तादृशी शक्तिस्तथांऽशत्वेऽपी शजीवयोः ॥ ४८ ॥

युक्त्यन्तरमाह—

ॐ असंततेश्चाव्यतिकरः ॐ ॥ २ । ३ । ४९ ॥

जीवस्य शक्त्या सम्यक्कृत्यभावात् । मत्स्यादीनां तत्सत्त्वादंशत्वेऽप्युक्तस्याव्यतिकरो व्यत्यासाभावः ॥ ४९ ॥

ॐ आभास एव च ॐ ॥ २ । ३ । ५० ॥

अत्र जीवप्रतिबिम्बविरोधो निरस्यते । जीवः परप्रतिबिम्बो न वेति चिन्तायाम् । न जीवः प्रतिबिम्बोऽन्यथैव प्रतिबिम्बत्वे परस्परं वैचित्र्यापत्तेरिति प्राप्ते । रूपं रूपं प्रतिरूपो बभूव । एकधा दशधा चैव दृश्यते जलचन्द्रवदिति श्रुतेः ॥ ५० ॥

वैचित्र्यहेतुमाह—

ॐ अदृष्टानियमात् ॐ ॥ २ । ३ । ५१ ॥

अदृष्टस्यानाद्यविद्याकर्मादेरनियमाद्वैचित्र्यादनाद्यविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ॥ ५१ ॥

ननु रागद्वेषादिनैव वैचित्र्यमस्तु किमदृष्टेनेति शङ्कां निरस्यति—

ॐ अभिसंध्यादिष्वप्येवम् ॐ ॥ २ । ३ । ५२ ॥

इच्छाद्वेषादिवैचित्र्यमप्यदृष्टादेव । नन्विच्छादावेव प्रवाहानादिताऽस्तु किमदृष्टेन । अदृष्टवैचित्र्यं विना दोषवैचित्र्यस्य जीववैचित्र्यनिमित्तत्वे तदभावे वैचित्र्यानाप्तेः ॥ ५२ ॥

ननु भूमिस्वर्गादिदेशवैचित्र्यादेव वैचित्र्यमिति शङ्कां निरस्यति-

ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥ २ । ३ । ५३ ॥

न भूम्यादिदेशवैचित्र्याद्वैचित्र्यम् । तत्प्राप्तेरप्यदृष्टापेक्षत्वात् । एकदेशगतानामपि वैचित्र्यदर्शनाच्चेति ॥ ५३ ॥

इति वेदान्तसिद्धान्तमुक्तावल्यां वनमालिविरचितायां सारसंग्रहे ब्रह्मसूत्रे द्वितीयाध्यायस्य तृतीयः पादः ।

---

अथ चतुर्थः पादः ।

ॐ तथा प्राणाः ॐ ॥ २ । ४ । १ ॥

अत्रापि श्रुतीनां परस्परं विरोधपरिहार एव पादार्थः । पादभेदोऽध्यात्मविषयतया तत्रादाविन्द्रियोत्पत्तिश्रुतिविरोधो निरस्यति प्राणा उत्पत्तिमन्तो न वेति चिन्तायाम् । नोत्पत्तिमन्तः । प्राणा एवानादय इति श्रुतेः । प्राणा नोत्पत्तिमन्तो निरुपादानाव्यतिरेकेण घटादिवदितियुक्तेश्चेति प्राप्ते । उत्पत्तिमन्त एव प्राणाः । आकाशाद्युत्पत्तौ कथितयुक्तिकलापात् ॥ १ ॥

नन्वाकाशाद्यनुत्पत्तौ श्रुत्यभावो हेतुरुक्तः कथमसाविह श्रुतेः सत्त्वादिति शङ्कां निरस्यति-

ॐ गौण्यसंभवात् ॐ ॥ २ । ४ । २ ॥

गौण्यनुत्पत्तिवादिनी मुख्याऽनुत्पत्तेरसंभवात् । एतस्माज्जायते प्राणो मन इत्यादिश्रुतेश्च ॥ २ ॥

प्राणानां नोत्पत्तिरिति शङ्कां परिहरन् प्रतिज्ञाहानिरिति युक्त्याऽप्येतमर्थमाह-

ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ २ । ४ । ३ ॥

प्राणानामुत्पत्त्यङ्गीकारे सर्वमसृजतेति प्रतिज्ञानुपरोधः ॥ ३ ॥

ॐ तत्प्राक् श्रुतेश्च ॐ ॥ २ । ४ । ४ ॥

अत्र मनोजन्मश्रुतिविरोधो निरस्यते । अत्र मन उत्पत्तिमन्न वेति चिन्तायाम् । नित्यं मनः । अनादित्वात् । न ह्यमनाः पुमांस्तिष्ठतीति प्राप्ते । उत्पत्तिमन्मनः । मनः सर्वेन्द्रियाणि चेत्यादिनोत्पत्तेरुक्तत्वात् । पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः। तदनुत्पत्तिवचनमल्पापचयकारणादिति स्मृतेः ॥४॥

ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ २ । ४ । ५ ॥

अत्र वागुत्पत्तिश्रुतिविरोधो निरस्यते । वागुत्पद्यते न वेति चिन्तायाम् । नोत्पद्यते । नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतमिति । वाचा च नित्या । न ह्येषोत्पद्यते । अस्यां श्रुतिरवतिष्ठत इति श्रुतेरिति प्राप्ते । तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपमिति मनःपूर्वकत्वाद्वाचोऽनुत्पत्तिर्न युक्ता । नित्यश्रुतिसंनिधानान्नित्यत्वमौपचारिकम् ॥ ५ ॥

ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ २ । ४ । ६ ॥

अत्र प्राणसंख्याश्रुतिविरोधो निरस्यते । प्राणाः सप्तोत द्वादशेति चिन्तायाम् । सप्तैव प्राणाः । सप्त प्राणा इति श्रुतेः । न च द्वादशान्तर्गताः सप्तापि द्वादशत्वेऽपि कारणविशेषमन्तरेण सप्तत्वोक्तेरयोगादिति प्राप्ते । सप्त प्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः । एवं प्राणद्वादशकं शरीरे नित्यसंस्थितमित्याद्यनुसाराद्द्वादशैव प्राणाः । सप्तत्वस्य द्वादशान्तर्गतत्वाच्च । न च विवक्षां विना सप्तत्वोक्तिर्व्यर्था । श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वेन तद्विवक्षया सप्तत्वश्रुतेः प्रवृत्तेः ॥६॥

ननु सप्तभ्योऽन्ये प्राणाः सन्ति । सत्त्वे सहपातभङ्गादिति शङ्कां निरस्यति—

ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॥ २ । ४ । ७ ॥

सहपाताभावेन प्राणान्तराभावः । अनादित्वाद्यभावेऽपि पाणिपादपायुगुह्यवाचः कार्यार्थानीन्द्रियाणि सन्त्येव ॥ ७ ॥

ॐ अणवश्च ॐ ॥ २ । ४ । ८ ॥

अत्र प्राणपरिमाणश्रुतिविरोधो निरस्यते । तासां परस्परविरोधेऽप्रामाण्यापत्त्या भगवत्यन्वयो न स्यादित्यवश्यं निरसनीयः । प्राणा व्याप्ता अणवो वेति चिन्तायाम् । व्याप्ता एव । दिवीव चक्षुराततमिति श्रुतेः । दूरादिश्रवणादियुक्तेश्चेन्द्रियाणां प्राप्यकारित्वादिति प्राप्तेऽणव एव प्राणाः । अणुभिः पश्यत्यणुभिः शृणोति प्राणा वा अणवः प्राणैर्ह्येतद्भवतीति श्रुतेः । ज्ञानोत्पत्तिक्रमकत्वयुक्तेश्च । यथोदयगिरिस्थस्य तेजसो युगपदण्डान्तर्वर्तित्वं तथैषामपि तेजसामतिशयितत्वेन व्याप्त्युपपत्तिः । अलातचक्रवद्वा ॥ ८ ॥

ॐ श्रेष्ठश्च ॐ ॥ २ । ४ । ९ ॥

अत्र मुख्यप्राणजन्मश्रुतिविरोधो निरस्यते । सर्वप्राणप्रेरको मुख्यः प्राण उत्पद्यते न वेति चिन्तायाम् । नोत्पद्यते । नैषः प्राण उदेति नास्तमेतीति

श्रुतेरिति प्राप्ते । आत्मन एष प्राणो जायत इति सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेतीति च श्रुतेः । यथेतरे प्राणा उत्पद्यन्ते तथा मुख्यः प्राणोऽपि ॥ ९ ॥

नन्वनुत्पत्तिश्रुत्यनुरोधेनोत्पत्तिश्रुतिरेव चेष्टाबाह्यवायुविषयतया व्याख्येयेति शङ्कां निरस्यति—

**ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ २ । ४ । १० ॥**

स प्राणमसृजत खं वायुं कर्मेति वायुकर्मणोः पृथगुपदेशात् ॥ १० ॥

**ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ २ । ४ । ११ ॥**

अत्र मुख्यप्राणश्रुतिविरोधो निरस्यते । तासामप्रामाण्ये भगवति समन्वयो न स्यादित्यवश्यं निरसनीयः । मुख्यः प्राणः स्वतन्त्रो न वेति चिन्तायाम् । स्वतन्त्र एव । प्राणादिदम विरासीत्प्राणो धत्ते प्राणो लयमभ्युपैति न प्राणः किंचिदाश्रित इति श्रुतेरिति प्राप्ते । मुख्यप्राणोऽपि चक्षुरादिवत्परमात्माधीन एव। सर्वं ह्येतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च। स ह्येकै(क ए)वैतान्नयति वशी करोतीतीतरैः सह पराधीनत्वानुशासनात् ॥ ११॥

ननु यदि चक्षुरादिवत्प्राणस्येशाधीनत्वं तदाऽवान्तरेशासंभवेन तस्य स्वातन्त्र्यश्रुतिर्व्यर्थेति शङ्कां निरस्यति——

**ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ॥ २ । ४ । १२ ॥**

अन्येषां प्राणानां करणत्वान्मुख्यस्य चाकरणत्वादन्येभ्य उत्तमत्वं युक्तम् । तानि ह वा एतानि सर्वाणि करणानि यथा प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इति दर्शनात् ॥ १२ ॥

**ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ २ । ४ । १३ ॥**

प्राणश्रुतिविरोधोऽत्र निरस्यते । मुख्यसंनिधापिताः प्राणापानव्यानसमानोदानादयो मुख्यप्राणदासास्तत्स्वरूपा एवेति चिन्तायाम् । सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदान इति । अथ प्राणो वाव सम्राडिति श्रुतेः । मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः । स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशमिति श्रुतिद्वयस्य समानबलत्वेन विरुद्धत्वाच्च । वस्तुनि विकल्पाभावाच्चाप्रामाण्यमिति प्राप्ते । अथ पञ्चवृत्त्यैतत्प्रवर्तते । प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समान इति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । प्राणाद्वाव

प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानः । यथा ह वै मनः पञ्चधा व्यपदिश्यते । मनो बुद्धिरहंकारश्चित्तं चेतनेति । एतेभ्यः पञ्च दासाः प्रजायन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहंकारादहंकारश्चित्ताच्चित्तं चेतनायाश्चेतनेति । मनोदृष्टान्तेन पञ्चदासवान्पञ्चवृत्तिश्च प्राणो व्यपदिश्यते । संकल्पविकल्पात्मकं मनः । निश्चयात्मिका बुद्धिः । अस्वरूपे स्वरूपमतिरहंकारः । स्मरणहेतुश्चित्तम् । चेतसो व्याप्तिश्चेतनेति श्रुतिद्वयाविरोधाद्युक्तः समन्वयः ॥ १३ ॥

ॐ अणुश्च ॐ ॥ २ । ४ । १४ ॥

मुख्यप्राणपरिमाणश्रुतिविरोधो निरस्यते । मुख्यप्राणो व्याप्तोऽणुर्वेति चिन्तायाम् । प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राण एवेदं सर्वमिति व्याप्तः प्राण इति प्राप्ते । अणुरेव मुख्यः प्राणः । स वा एषः प्राणोऽणुर्महान्नामान्तर्वाऽणुर्वीहिर्महान्प्राण इति श्रुतेः । अणुर्वै मुख्यः प्राणो य उत्क्रामति नाडीभिरिति सयुक्तिकश्रुतेश्च ॥ १४ ॥

ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥ २ । ४ । १५ ॥

इन्द्रियविषयकश्रुतिविरोधोऽत्र निरस्यते । इन्द्रियाणि जीवकरणान्युत ब्रह्मकरणानीति चिन्तायाम् । जीवस्यैव करणानि । जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः । यस्मात्तद्भागा एते दृश्यन्ते सर्वदेहिष्विति श्रुतेः । अतोऽप्रमाणमीशकरणत्वश्रुतिरिति प्राप्ते । यज्ज्योतिराद्यधिष्ठानकं ब्रह्म तदेवैतैः करणैः प्रवर्तयति । यः प्राणे तिष्ठतीत्यादितदामननात् । तेजःप्रभृतिभूतप्रेरकत्वेन तदंशचक्षुरादिप्रेरकत्वमपि ब्रह्मण इति भावः ॥ १५ ॥

ननु करणत्वश्रुतिरिति शङ्कां निरस्यति—

ॐ प्राणवता शब्दात् ॐ ॥ २ । ४ । १६ ॥

जीवेनैव करणैः कारयति परमात्माऽतो न विरोधः । एष ह्यनेनाऽऽत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति बुद्ध्या बोधयतीति श्रुतेः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेति स्मृतेश्च ॥ १६ ॥

युक्त्यन्तरमाह—

ॐ तस्य च नित्यत्वात् ॐ ॥ २ । ४ । १७ ॥

इन्द्रियाणां ब्रह्मकरणत्वेऽपि युज्यते जीवकरणत्वश्रुतिः । तस्य जीव-

करणसंबन्धस्यानादित्वात्परके ये बहुकालसंबन्धिन्युपचारात्तदीयत्वव्यवहारदर्शनात् ॥ १७ ॥

ॐ त इन्द्रियाणि तव्द्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ २ । ४ । १८ ॥

अत्र प्राणविषयकश्रुतिविरोधो निरस्यते । काचिच्छ्रुतिस्त्रयोदशेन्द्रियाणीत्याह । काचन तु द्वादशेति । विप्रतिपत्त्या च संदेहः । तत्किं सर्वेषां प्राणानामिन्द्रियत्वमुतैकस्य निवार्य द्वादशानामेवेति चिन्तायाम् । अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्तीति सामान्यश्रुत्या सर्वेषामिन्द्रियत्वमिति प्राप्ते । श्रेष्ठात्प्राणादन्यत्र द्वादशस्वेवेन्द्रियत्वम् । मुख्यप्राणमृते त एवेन्द्रियाणि । द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराडिति श्रुत्या व्यपदेशात् ॥ १८ ॥

ननु यदि मुख्यप्राणो नेन्द्रियं चक्षुरपि न स्याद्विशेषाभावादिति शङ्कां निरस्यति—

ॐ भेदश्रुतेः ॐ ॥ २ । ४ । १९ ॥

भेद एव मुख्यस्य प्राणेभ्यः । स्थिर एव हीदं मुख्यः प्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानीति श्रुतेः ॥ १९ ॥

ननु मुख्यः प्राण ईशवशो न वा । आद्ये नानिन्द्रियत्वासिद्धिः । ईशवशत्वस्य तुल्यत्वात् । अवान्तरवैलक्षण्यस्यान्यत्रापि सत्त्वात् । द्वितीये प्रागुक्तविरोध इति शङ्कां निरस्यति—

ॐ वैलक्षण्याच्च ॐ ॥ २ । ४ । २० ॥

ईशाधीनानामपीन्द्रियाणां प्रवृत्तिर्जीवप्रयत्नापेक्षैव । जाग्रत्येव सत्त्वेन सुषुप्तावसत्त्वेन च तथा दर्शनात् । मुख्यप्राणस्य त्वीशाधीनैव प्रवृत्तिर्नतु जीववशया । सुषुप्तौ तद्दर्शनात् । एष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते न यापयते [ न ]स्वपितीत्याचक्षत इतीन्द्रियाणां सुप्तौ प्रवृत्त्यभावमुक्त्वा प्राणाग्नय एवैतस्मिन्पुरे जाग्रतीत्यादिश्रुत्या मुख्यस्य पुरुषप्रयत्नानपेक्षेणेशाधीना प्रवृत्तिरुच्यते ॥ २० ॥

ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ २ । ४ । २१ ॥

अत्र शरीरादिविषयकश्रुतिविरोधो निरस्यते । शरीरादिकं विरिञ्चिसृष्टमीशसृष्टं वेति चिन्तायाम् । विरिञ्चो वा इदं विरेचयति विदधाति । ब्रह्मा वाव विरिञ्च इति विरिञ्चश्रुतेः । नामरूपक्लृप्तिः परादेवेति श्रुतेश्च । समबलत्वादुभयोरप्रामाण्यमिति प्राप्ते । नामरूपादिकं परादेव । त्रिवृत्कुर्वत इति हेतुगर्भं विशेषणम् । नामरूपादेस्त्रिवृत्करणापेक्षत्वात् । त्रिवृत्करणं विना नामाद्यनुपपत्तिः । त्रिवृत्कर्तृत्वं तु हरेरेव । सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादिश्रुतेः । ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ इति स्मृतेश्च हरेरेव मुख्यकर्तृत्वम् । विरिञ्चादेस्तु तदधीनकर्तृत्वमिति न श्रुत्योर्विरोधो न वाऽप्रामाण्यम् ॥ २१ ॥

ॐ मांसादिभौमं यथाशब्दमितरयोश्च ॐ ॥ २ । ४ । २२ ॥

अत्र शरीरकारणविषयकश्रुतिविरोधो निरस्यते । देहः किमाप्यः किंवा पार्थिवस्तैजसो भूतत्रयात्मको वेति चिन्तायाम् । आपो वाव मांसमस्थि च भवन्त्याप एवेदमिति श्रुतेराप्यं शरीरं पृथिवी शरीरमप्येतीति श्रुतेः । पार्थिवं शरीरं सोऽग्नेर्देवयोन्या आहुतिभ्यः संभूय हिरण्यशरीर ऊर्ध्वं स्वर्गलोकमेतीति श्रुतेस्तैजसम् । इमास्तिस्रो देवताः पुरुषं प्राप्येति श्रुतेस्त्रितयात्मकम् । तथा चैकतरनिश्चयाभावादप्रामाण्यमिति प्राप्ते । समुच्चय एव सर्वभूतानां देहेऽतो न विकल्पादिः ॥ २२ ॥

ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ २ । ४ । २३ ॥

भूतानां विशेषसंयोगादेव तद्वादः पार्थिवादिवादः । पार्थिवानामर्धे भागे पृथिवीतरार्धभागे त्रिभागीन्यन्यानि भूतानि । एवं जलीयेऽर्धभागे जलान्यार्धान्येवं तैजसेऽपि । द्विरुक्तिरध्यायार्थावधारणार्था । अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा । विचारो यत्र सज्ज्येत तत्पूर्वोक्तस्यावधारण इति गारुडोक्तेः ॥ २३ ॥

इति श्रीवनमालिमिश्रविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां सारसंग्रहे ब्रह्मसूत्रे द्वितीयाध्यायस्य चतुर्थः पादः ॥

इति द्वितीयोऽध्यायः ॥

अथ तृतीयोऽध्यायः ।

तत्र प्रथमः पादः ।

उपास्यो यो मोक्तुं मनसि भवपाशं मुनिवरैः
रमाद्यैरप्यन्यैर्जनिमतिगतैर्मुक्तनिकरैः ।
सकामैर्भोगार्थं सुरतरुरिवार्थ्यो ह्यखिलदः
स वाजिग्रीवो मे स्फुरतु हृदये संसृतिहरः ॥ १ ॥
सिद्धः समन्वयो यत्राविरोधेन रमाधवे ।
श्रुतीनां प्राप्तये तस्य कथ्यन्ते साधनान्यथ ॥ २ ॥

अथातो ब्रह्मजिज्ञासेति सूत्रे संक्षेपेण शास्त्रार्थे सूचिते ।किं तद्ब्रह्मेति शङ्कायां तत्स्वरूपं द्वितीयसूत्रे गदितम् । तदध्यायशेषेण समर्थितम् । तत्र विरोधाश्च द्वितीये निरस्ताः । अथ ब्रह्मजिज्ञासापदाभ्यां मुक्तिसाधनानि विहितानि । तेषामस्मिन्नध्याये विचारो वर्तिष्यते । हरिप्रसादः साक्षान्मुक्तिसाधनम् । स च तदपरोक्षज्ञानात् । न च तदुभयं विधातुं शक्यं पुरुषप्रयत्नागोचरत्वात् । अतो ज्ञानसाधनं विधेयम् । तच्च श्रवणमनननिदिध्यासनरूपजिज्ञासैव । तत्र भगवद्भक्त एवाधिकारी । भक्तिश्च माहात्म्यश्रवणेन संभवत्यपि वैराग्येण दृढा भवति । अतः साधनेषु वैराग्यमेवाऽऽदावपेक्षितम् । तदपि न पुरुषप्रयत्नविषयोऽतस्तदर्थं गत्यागतिस्वर्गनरकगर्भवासादिकं निरूप्यते । गत्यादेर्दुःखरूपतां श्रुत्वा भावयतः स्वर्गादावपि रागो निवर्तते—

ॐ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ॥ ३ । १ । १ ॥

अत्र हरिप्राप्तिसाधनवैराग्याय जीवस्य भूतविमोकसमर्थनादस्ति संगतिः । वैराग्यादिकं निरर्थकं स्यात् । यदि भूतावियोगो न स्यादित्यवश्यं साध्यः । तत्साधनं मुमुक्षुणाऽनुष्ठेयं न वेति चिन्तायाम् । नानुष्ठेयम् । वैराग्यादिकं मरणरूपभूतविमोचनस्य तद्विनाऽपि जायमानत्वादिति प्राप्ते । मोक्षार्थमपेक्षितमेव तत्साधनम् । आत्मा वाऽरे द्रष्टव्य इत्यादौ तद्विधानात् । न चोक्तदोषः । भूतविमोकस्य मोक्षत्वेऽपि पूर्वशरीरं परित्यज्य भूतसंपरिष्वक्तस्यैव गतेर्मरणं भूतविमोकस्यैवाभावात् । शरीरान्तरप्रतिपत्तौ भूतपरिष्वक्त एव गच्छति । यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्नपरिहाराभ्याम् ।

येन क्रमेण येन प्रकारेण पञ्चम्यामाहुतौ तस्यामद्भिः संपरिष्वक्तो जीवो लब्धदेहः पुरुषनामवान्भवति । किं तं क्रमं प्रकारं च वेत्थेति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नात्तथा श्वेतकेतोः परिहारासामर्थ्येन पित्रा पृष्टस्य प्रवाहणस्यैव परिहाराच्च जीवो भूतपरिष्वक्त एव गच्छतीति भावः । मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयादिति स्मृतेः । न चेयं स्मृतिरीशपरा । ग्राहयित्वेत्यर्थात् ॥ १ ॥

ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ ३ । १ । २ ॥

मुक्तिसाधनवैराग्यार्थं भूतपरिष्वक्तजीवस्य गतिसमर्थनादस्ति संगतिः । सर्वाणि भूतानि जीवं परिष्वज्य गच्छन्ति न वेति चिन्तायाम् । आपः पुरुषवचसो भवन्तीति प्रश्नव्याख्यानयोरपामेव गतिश्रवणात् । अतो मृतस्य समस्तभूतपरिष्वङ्गाभावादेकस्य शरीरानारम्भकत्वान्मरण एव मोक्षसिद्धेर्व्यर्थं साधनमिति प्राप्ते । सर्वभूतपरिष्वक्तो जीवो नाद्भिरेव । त्र्यात्मकत्वात् । क्षितितेजःसलिलात्मकत्वात्तद्ग्रहणेनान्यभूतानामपि प्राप्तेः । तासां त्रिवृतमेकैकामकरोत् । मिश्राणि हि भूतानीति श्रुतेः । ननु कथं तत्रायं शब्द इत्यत आह—भूयस्त्वादिति । मिश्रत्वेऽपि तत्तद्भूतस्याधिक्येन तत्तद्व्यवहार इति भावः । न चापामिव भूतान्तरस्यापि सत्त्वेनापामेव ग्रहणे को विशेषहेतुरिति चेन्न । अपां बाहुल्यात् । शुक्रशोणितलक्षणे बीजे द्रवबाहुल्यदर्शनात् ॥ २ ॥

ॐ प्राणगतेश्च ॐ ॥ ३ । १ । ३ ॥

अत्र पुनः परमात्मप्राप्तिसाधनवैराग्यसिद्ध्यर्थं जीवस्य भूतैः सह गतिसमर्थनादस्ति संगतिः । भूतानि जीवेन सह गच्छन्ति न वेति चिन्तायाम् । न गच्छन्ति । मानाभावात् । न च प्रश्नव्याख्याने विशेषमानम् । तैः सह गमनस्यानुक्तत्वात् । आर्थिककल्पनायाश्च विशेषमानं विना संभवादिति प्राप्ते । देहान्तरप्राप्तौ प्राणानां गतिः श्रूयते । तमुत्क्रान्तं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रान्तं सर्वे प्राणा अनूत्क्रामन्तीत्यादिश्रुतेः । आश्रयं विना गत्यसंभवेन प्राणगतिप्रयुक्ता तदाश्रयभूतानामपि भूतान्तरोपसृष्टानां गतिरवगम्यते । न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा । जीवतोऽदर्शनात् ॥ ३ ॥

ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ ३ । १ । ४ ॥

अत्र वैराग्याय प्राणानां जीवेन सह गतिसमर्थनात्संगतिः । प्राणा जीवेन सह गच्छन्ति न सह गच्छन्ति वेति चिन्तायाम् । न गच्छन्ति । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रमिति प्राणानामग्न्यादीन्प्रति गतिश्रुतेः । तथा च प्राणानां जीवेन गत्यभावे भूतानामपि तदभावे मरणमेव मोक्षोऽतः साधनं व्यर्थमिति प्राप्ते । नैतच्छ्रुतिबलेन प्राणाना जीवेन सह गतिर्वक्तव्या । प्राणानां भागेनाग्न्यादीन्प्रति गतेर्विद्यमानत्वेन श्रुतेस्तद्विषयत्वात् । न च किमत्र मानं, पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् । पुनः शरीरसंप्राप्तौ तमेवानुविशन्ति चेति ब्राह्मोक्तिरेव ॥ ४ ॥

ॐ प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥३।१।५॥

अत्र वैराग्यभूतानां जीवेन सह गतिः समर्थ्यते । भूतानि जीवेन सह गच्छन्ति न वेति चिन्तायाम् । न गच्छन्ति । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीत्युत्क्रान्तस्य श्रद्धासहितस्यैव प्रथमाग्नौ होमश्रवणात् । भूतानां सहगतावुपक्रमे तथोक्तिप्रसङ्गादिति प्राप्ते । प्रथमाग्नौ भूतसहितस्य होमश्रवणान्न भूतानां सहगतिः कल्प्या । प्रथमाग्नावप्यपां होम्यतया श्रवणाच्च । श्रद्धापदेनाजहल्लक्षणया श्रद्धयाऽद्भिश्च हि जीव उच्यते । उपसंहारेऽपां जीवेन सह गतिश्रवणात् । अतो भूतानां जीवेन सह सद्भावान्मरणस्य मोक्षत्वाभावाद्युक्तं वैराग्यादि ॥ ५ ॥

ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ३ । १ । ६ ॥

अत्र पुनर्वैराग्याय जीवस्य भूतैः सह गतिरुच्यते । भूतानि जीवेन सह गच्छन्ति न वेति चिन्तायाम् । अपां प्राणानां च गतेरिव भूतानां गतेरश्रुतत्वान्न तेषां सहगतिरिति प्राप्ते । प्राणानां भूतगतिं विना गतेरसंभवेन तेषामप्यार्थिकश्रवणात् । इष्टादिकारिणां प्रतीतेरथ यइमे ग्राम इष्टा पूर्तेदत्तमित्युपासते । ते धूममभिसंभवन्तीत्युपक्रम्येष्टादिकारिणां धूमादिना पितृयानेन गतिरुक्ता यथा तथेहापि तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति तस्या आहुतेः सोमो राजा संभवतीति श्रुतिसामान्यात्तेषां चाग्निहोत्रादिकर्मसाधनदधिपयःप्रभृतीनां द्रव्यभूयस्त्वात्प्रत्यक्षमेवाऽऽपः सन्ति । ततस्ताः श्रद्धापूर्वककर्म-

संबन्धिन्य आहुतिमय्य आपोऽपूर्वरूपाः सत्यस्तानिष्टादिकारिणो जीवानमुं लोकं फलदानाय नयन्तीति । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमासं ज्योतिर्योगी प्राप्य निवर्तत इति धूममार्गगतानामागतिः स्पष्टा । न च भूतानां गमनं विना केवलायां लोकान्तरप्रापकत्वं जीवस्याऽऽगतिर्वा संभवतीति सिद्धं भूतैः सह गमनं जीवस्य ॥ ६ ॥

**ॐ भाक्तं चानात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ ३ । १ । ७ ॥**

अत्र वैराग्यस्याऽऽवश्यकत्वमुच्यते । वैराग्यादि मुमुक्षुणाऽनुष्ठेयं न वेति चिन्तायाम् । नानुष्ठेयम् । तद्विनाऽपि कर्मणैव मोक्षसंभवात् । अपाम सोमममृता अभूमेत्यादिश्रुतेरिति प्राप्ते । अनुष्ठेयमेव वैराग्यादि । उक्तश्रुतौ भाक्तमेवामृतत्वम् । अनात्मविदामधिकारात । तद्यथेह पुण्यचितो लोकः क्षीयत एवमेवामुत्रेति सयुक्तिश्रुत्या क्षयिष्णुत्वोक्तेः । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्तीति स्मृतेः । तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनायेति भगवदपरोक्षज्ञानान्वयव्यतिरेकौ मोक्षे दर्शयति । कर्मणा ज्ञानमातनोति ज्ञानेनामृतो भवति । अथामृतानि कर्माणि । एतममृतत्वं नयन्तीति श्रुतेश्च ॥ ७ ॥

**ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ ॥ ३ । १ । ८ ॥**

अत्र वैराग्यादेरावश्यकत्वमुच्यते । वैराग्यादि मुमुक्षुणाऽवश्यमनुष्ठेयं न वेति चिन्तायाम् । नानुष्ठेयम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमित्यनुसारात्कर्मणो भोगादेव क्षयादिति प्राप्ते । ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छतीति श्रुतेः । भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः । कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यश इति स्मृतेश्च । उक्तश्रुतिरप्रारब्धाभिप्राया । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति स्मृतेश्च । अतो भोगमात्रात्कर्मक्षयाभावादनुष्ठेयं वैराग्यादि ॥ ८ ॥

**ॐ यथेतमनेवं च ॐ ॥ ३ । १ । ९ ॥**

अथ वैराग्यार्थं स्वर्गदा गतिरुच्यते । आगमनं गतिप्रकारेणैवान्यथा वेति चिन्तायाम् । यथेतमेव गच्छति यथेतमागच्छति । स भुङ्क्ते स कर्म कुरुते स परिवर्तत इति गतिप्रकारेणैवाऽऽगतिः । तथा स्वर्गगमनस्येवाऽऽग-

मनस्य क्लिष्टत्वाभावान्न वैराग्येण कृत्यमिति प्राप्ते । धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षतीत्यादिश्रुत्याऽन्यथा गमनं प्रतीयते । क्वचिद्गमनप्रकारेणाऽऽगमनाङ्गीकारेण श्रुतेस्तद्विषयत्वात् । अत आगतेरतिक्लिष्टत्वात्तन्निवृत्त्यर्थमनुष्ठेयं साधनम् ॥ ९ ॥

**ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥ ३ । १ । १० ॥**

अथ वैराग्याय गतागतादेः कर्मफलत्वं साध्यते । गमनागमनादि यज्ञादिकर्मफलं न वेति चिन्तायाम् । चरणादेव गतागतं न कर्मणः । तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयामिति श्रुतेः । आचार इति स प्रोक्तः कर्माङ्गत्वेन शुद्धिदः । अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतमिति स्मृतेः । कर्मणोऽन्यस्य चरणस्य प्रतीतेरिति प्राप्ते । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्तीत्युपक्रम्य तस्मिन्यावत्संपातमुषित्वा, अथैनमेवाध्वानं पुनरावर्तन्त इति श्रुतेः । त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्तीति स्मृतेश्च गतागतस्य कर्मफलत्वसिद्धेः । नान्यः पन्था विद्यतेऽयनायेतिश्रुत्या गतागतशून्यफलस्य कर्मसाध्यताया निषिद्धत्वाच्च । न च तद्य इहेति श्रुतिविरोधः । तस्या उक्तश्रुत्यनुरोधेन यज्ञाद्युपलक्षणत्वादिति कार्ष्णाजिनिराचार्यो मन्यते ॥१०॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ॥ ३ । १ । ११ ॥**

ननु रमणीयाः कपूया इत्येवास्तु । चरणेत्यस्याऽऽनर्थक्यमिति चेन्न । रमणीयत्वादेश्चरणापेक्षत्वात्तज्ज्ञापनार्थत्वेनोपपत्तेः । अयं भावः । किं चरणपदानर्थक्यान्नोपलक्षणं किंवा लक्षणत्वमभ्युपेत्य चरणपदकृत्यविचारः । आद्ये श्रुतिविरोध उक्तः । द्वितीये यज्ञादिकर्तृत्वे समाने केषांचिद्रमणीयत्वमन्येषां कपूयत्वमिति शङ्कामपाकर्तुं साध्वसाधुमत्त्वस्याऽऽचारापेक्षत्वेन रमणीयादिपदस्य यज्ञादिकारिणामपि रमणीयत्वादिज्ञापकत्वेन सार्थक्योपपत्तिः ॥ ११ ॥

युक्त्यन्तरमाह—

**ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥ ३ । १ । १२॥**

धर्मं चर माऽधर्ममिति कर्माङ्ग इव कर्मण्यपि प्रयोगः । अनेकसाधकवंशात्साङ्गसुकृतदुष्कृतकर्मस्वेव प्रयोग इति बादरिर्मन्यते । तुशब्दात्स्वसंमतिरपि सूच्यते ॥ १२ ॥

**ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ ३ । १ । १३॥**

अथ वैराग्यायानिष्टादिकारिणां गतागतदुःखं समर्थ्यते । गतागतमिष्टादिकारिणामेवोत सर्वेषामिति चिन्तायाम् । इष्टादिकारिणामेव प्रत्यवायभयवत्त्वेन गतागतं नाज्ञानाम् । बिभ्यत्प[ त ]तीति न्यायादनिष्टादिकारिणां कर्माभावान्न बन्धः । इष्टादिकारिणां तत्सत्त्वाद्बन्ध इति प्राप्ते । तच्च इह शुभकृतो ये वाऽशुभकृतस्तेऽशुभमनुभूयाऽऽवर्तन्ते पुनः कुर्वन्ति पुनर्गच्छन्तीति श्रुतौ, तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति स्मृतौ चानिष्टादिकारिणामपि गतागतं श्रुतम् ॥ १३ ॥

अनिष्टादिकारिणां न गतागतमात्रमतिदुःखं चास्तीत्याह—

**ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ॥ ३ । १ । १४ ॥**

यमशासनमनुभूय केषांचिदारोहः केषांचिदवरोहः । तुशब्दोऽवधारणे । सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति । तत्र ह ये परद्विषो गुरुद्विषः पतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि पतन्ति । न वैत उत्तिष्ठन्तेऽपि कर्हिचिदित्यादिश्रुतौ, ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः । ततो यान्त्यधमां गतिमित्यादिस्मृतौ गतिदर्शनात् ॥ १४ ॥

**ॐ स्मरन्ति च ॐ ॥ ३ । १ । १५ ॥**

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः । तत्र गत्वा पतन्त्येव ये द्विषन्ति जनार्दनम् । महातमसि मग्नानां न तेषामुच्छ्रितिः क्वचित् । इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च । सुखस्यानन्तरं

दुःखं दुःखस्यानन्तरं सुखमिति । अतोऽनिष्टादिकारिणामत्यनर्थत्वाद्भवितव्यं तत्र विरक्तेन ॥ १५ ॥

ॐ अपि सप्त ॐ ॥३।१।१६॥

अत्र वैराग्याय नित्यनरकं समर्थयति । नरकस्य नित्यफलदत्वमस्ति न वेति चिन्तायाम् । पुनरावृत्तिमदेव न नित्यफलदम् । यावदिन्द्राश्चतुर्दशेत्यादौ नरकभोगस्यानित्यत्वोक्तेरिति प्राप्ते । रौरवोऽयं महांश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रान्धतामिस्रौ द्वौ नित्यौ संप्रकीर्तितौ । इति सप्त प्रधानाभिर्बलीयस्तूत्तरोत्तरम् ॥ १६ ॥

ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ॥ ३ । १ । १७ ॥

अत्र वैराग्याय नरकस्य दुःखत्वं समर्थ्यते । नरकं सदुःखं न वेति चिन्तायाम् । नरके दुःखम् । तत्र गतानां प्रेरकतयेशोऽपि तत्रास्तीति स्वी क्रियते तर्हि दुःखिसहभागित्वात्तस्यापि दुःखित्वं स्यात् । यदि नारकिप्रेरक ईशो नोपेयते सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्ट इति श्रुतिविरोध इति प्राप्ते । नरकेऽपीशस्य प्रेरणरूपव्यापाराभ्युपगमादुक्तश्रुत्यविरोधः । न च भोगप्रसङ्गः । न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहेति, यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् । इति च स्मृत्या तस्य भोगराहित्योक्तेः । अतो नरकस्य सदुःखत्वाद्भवितव्यं तत्र वैराग्येण ॥ १७ ॥

ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ ३ । १ । १८ ॥

अत्र वैराग्याय गतिस्वातन्त्र्यं निरस्यते । पितृयानदेवयानौ भूतैः स्वातन्त्र्येण गम्यौ न वेति चिन्तायाम् । अस्त्येव गतिस्वातन्त्र्यं भूतानाम् । तेऽर्चिषमभिसंभवन्ति, ते धूममभिसंभवन्तीति । अथैतयोः पथोर्नैकतरेण तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि । जायस्व म्रियस्वैतत्तृतीयं स्थानम् । ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा इति स्मृतेः । न हि पुरुषप्रयत्नाविषये न गच्छन्तीति प्रयोग इति प्राप्ते । विद्याकर्मापेक्षयैतद्वचनम् । तयोरपि प्रकृतत्वात् । विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितास्त्रिधा यान्ति तिर्यक्त्वं नरकं तम इति स्मृतेः । न च तयोः

प्रकृतत्वात्तत्परामर्शः । तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति । अथ य इमे ग्रामइष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्तीति साधनभूतयोर्विद्याकर्मणोर्मार्गयोः प्रकृतत्वात् । न च साधनस्वातन्त्र्यात्फलेऽपि तत्स्यात् । साधने विधिसत्त्वात्फलेऽप्रत्वाच्च । गच्छतिप्रयोगस्तु रथो गच्छतीतिवदुपपन्नः ॥ १८ ॥

ॐ न तृतीये तथोपलब्धेः ॐ ॥ ३ । १ । १९ ॥

इह वैराग्यायान्धतमसो दुःखमात्रत्वं समर्थ्यते । अन्धतमसि सुखमस्ति न वेति । अस्त्येव । दुःखस्य सुखेन व्याप्तत्वादिति प्राप्ते । अधोगतिषु तृतीयेऽन्धतमसि सुखं नास्ति । अथाविद्वानकर्माऽर्वाग्गच्छति त्रिधा ह वाव गच्छति तिर्यग्यातना तम इति द्वे वाव सुखानुवृत्ते न तमः सुखानुवृत्तम् । केवलं ह्येवात्र दुःखं भवतीति श्रुतेरनुमानस्याप्रयोजकत्वात् ॥ १९ ॥

स्मृत्यनुमानाभ्यां साधयति—

ॐ स्मर्यतेऽपि च लोके ॐ ॥ ३ । १ । २० ॥

तिर्यक्षु नरके चैव सुखलेशो विधीयते । नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चनेति । लोके लोकसिद्धानुमाने विप्रतिपन्ना न सुखवन्तः । तथात्वेनेशानिष्टत्वात् । यद्यथेशानिष्टं तत्तथा न भवति । यथा शशो विषाणित्वेन । न चैते सुखित्वेनेशेष्टाः । अप्रियत्वात् । यो यस्य प्रियः स तस्य सुखित्वेनेष्टः । यथा राजविरोधी राज्ञः । अतिप्रिये यथा राजा न दुःखं सहते क्वचित् । अत्यप्रिये सुखमपि तथैव परमेश्वर इति ब्राह्मे ॥ २० ॥

प्रत्यक्षेणाप्येतमर्थमाह—

ॐ दर्शनाच्च ॐ ॥ ३ । १ । २१ ॥

नारायणप्रसादेन समिद्धज्ञानचक्षुषा । अत्यन्तदुःखसंलीनान्निःशेषसुखवर्जितान् । नित्यमेव तथाभूतान्विमिश्रांश्च गणान्बहून् । निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः । अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चतुर्मुख इति दर्शनवचनाच्च ॥ २१ ॥

अर्थापत्त्याऽप्याह—

ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ॥ ३ । १ । २२ ॥

तमोऽपि त्रिविधम् । तत्र तृतीयविषयः शब्दः । तेन संशोकजस्यावरोधः प्राप्तिर्भवति । तत्स्वरूपं श्रोतृणामपि मोहान्यथानुपपत्तेर्न तत्र सुखलेशोऽस्तीति भावः । अर्वागतौ तृतीयत्वस्य पूर्वमेवोक्तत्वेनात्र पुनस्तृतीयग्रहणवैयर्थ्यापत्तेस्तृतीयेऽपि तृतीयग्रहणे स्मरणाच्च । महातमस्त्रिधा प्रोक्तमूर्ध्वमध्यं तथाऽधरम् । श्रवणादिव मूर्छादिरधरस्य यतो भवेत् । तस्मान्न विस्तरेणैव कथ्यते राजसत्तमेति कौर्मे ॥ २३ ॥

ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ ३ । १ । २४ ॥

अत्र वैराग्याय कर्मिणां धूमभावो निरस्यते । कर्मिणो धूमादिभावापत्तिर्न वेति चिन्तायाम् । अस्त्येव तद्भावापत्तिः । धूमो भूत्वाऽभ्रं भवतीति सामानाधिकरण्यश्रवणात् । धूमादिदेवताभिः सहावस्थानात् । स्नेहात्ताभिः स्वपदं दातुं शक्यत्वाच्च । सकृदनुष्ठितयज्ञादाकल्पं परमसुखसंभवाद्व्यर्थं कर्मणि तत्फले च वैराग्यमिति प्राप्ते । तद्गतौ गतिः स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः । न ह्यन्यस्यान्यभावो युज्यते । अयं भावः । तद्गतौ गतिरित्याद्येकदेशस्वभावापत्त्यैव सामानाधिकरण्यं स्थानैक्याभिप्रायं वा । न तु देवतैक्याभिप्रायम् । तत्पदप्राप्त्यभिप्रायं वा । प्रागन्यस्यान्यभावानुपपत्तेः । पदप्राप्तिस्तु नियताधिकारिभिर्विद्ययैव गम्यत्वात् । युगपदनेककर्मिणां समवायेनैषामेकपदप्राप्त्ययोगाच्च ॥ २४ ॥

ॐ नातिचिरेण विशेषात् ॐ ॥ ३ । १ । २५ ॥

अत्र वैराग्याय कर्मिणोऽचिरेण गर्भवासादिप्राप्तिः समर्थ्यते । कर्मिणः स्वर्गान्निर्गत्य चिरेण गर्भं प्राप्नुवन्त्यचिरेण वेति चिन्तायाम् । चिरेणैव । यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवतीत्यादौ बहुस्थानगमनं च नाचिरेण । तत्रत्यं महासुखं विहायाऽऽगमने प्रयोजनाभावात् । एवं च सकृदनुष्ठितपक्षस्य मार्गे कल्पावस्थानसंभवेन व्यर्थं वैराग्यमिति प्राप्ते । अचिरेणैवाऽऽयाति । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्त इति विशेषात् । तत्र कर्मिषु ये रमणीयचरणाः सुकृतिनस्त इह भूमौ रमणीयां ब्राह्मणादियोनिमापद्यन्ते । आपद्यन्त इति यदापदनं तच्चाभ्याशः कालसामीप्येनेत्यर्थः ॥ २५ ॥

ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ ३ । १ । २६ ॥

अत्र वैराग्याय कर्मिणो व्रीह्यादिभावो निरस्यते । सुखसाधनवेदोपदिष्टकर्मिणः व्रीह्यादिभावेन दुःखित्वे विहितवैराग्यादावपि तच्छङ्का स्यादित्यवश्यं निर्णयः । कर्मिण आगमने दुःखवन्तो न वेति चिन्तायाम् । अस्त्येव तेषामागमने दुःखम् । त इह व्रीहियवा ओषधिवनस्पतीस्तिला माषा इति जायन्त इति श्रुतेः । तद्भावे छेदादिना दुःखित्वनियमात् । तच्च दुःखं यज्ञादिफलम्। आगमनस्य यागफलस्योक्तत्वात् । सुखहेतुरित्यपि वेदोक्तस्य दुःखहेतुत्वेन मोक्षहेतुवैराग्यादावपि वैपरीत्यापत्तिरिति प्राप्ते । नाऽऽगतौ कर्मिणो दुःखम् । व्रीह्यादिभावे मानाभावात् । उक्तश्रुत्या व्रीहिशरीरप्रवेश एवोक्तो न तु तदभिमानित्वम् । व्रीह्याद्यधिष्ठिते देहे धूमो भूत्वाऽभ्रं भवतीति पूर्ववत् । सोऽवागतः स्थावरान्प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्त इति श्रुतावभिलापादित्यर्थः ॥२६॥

उक्तमाक्षिप्य समाधत्ते—

ॐ अशुद्धमिति चेन्न शब्दात् ॐ ॥ ३ । १ । २७ ॥

ननु यज्ञानां हिंसा युक्तत्वेन कर्मिणां दुःखं स्यादेवेति चेन्न । निषिद्धहिंसाया एव दुःखहेतुत्वेनाग्नीषोमीयं पशुमालभेतेतिशब्दविहितहिंसाया दुःखाहेतुत्वात् ॥ २७ ॥

ॐ रेतःसिग्योगोऽथ ॐ ॥ ३ । १ । २८ ॥

अत्र वैराग्याय स्वर्गादवतीर्णस्य पितृप्रवेशः समर्थ्यते ॥ २८ ॥

जीवः पितृद्वारा मातृयोनिं प्रविश्य शरीरं प्राप्नोति न वेति चिन्तायाम् । देहगर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गत इति वचनाद्देहस्यैव योनिप्रवेशो न तु जीवस्येति प्राप्ते । अस्त्येव योनिप्रवेशः—

ॐ योनेः शरीरम् ॐ ॥ ३ । १ । २९ ॥

दिवः स्थास्नूनगच्छन्ति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरेण जायत इति श्रुतेः । स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् । पुरुषात्स्त्रियमापन्नस्ततो देहं यथाक्रमम् । देहेन जायते जन्तुरिति सामान्यतो जनिः । विशेषजननं पुंसां प्रोच्यमानं निबोध मे । स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा । गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु वेति

जाले । स्थास्नुषु शुकादयः, पुरुषे मान्धातृमुख्याः, प्रमदायामास्तीकादयः, बहिर्द्रोणादयः पितृसापेक्षाः, स्थानान्तरे धृष्टद्युम्नादयः पित्रादिनिरपेक्षाः ॥२९॥

इति श्रीवेदान्तसिद्धान्तमुक्तावल्यां वनमालिविरचितायां सारसंग्रहे ब्रह्मसूत्रे तृतीयाध्यायस्य प्रथमः पादः ॥

---

अथ द्वितीयः पादः ।

**ॐ संध्ये सृष्टिराह हि ॐ ॥ ३ । २ । १ ॥**

यद्दाढर्यार्थं वैराग्यं निरूपितं तस्य भक्तिरिहोच्यते । माहात्म्यज्ञानपूर्वः स्नेहो भक्तिः । न च महात्म्यानुक्तौ सा भवत्यतस्तदर्थं महिमोच्यते । न च पुत्रादौ महिमज्ञानं विनाऽपि स्नेहः । कारणान्तरेण फलसिद्धावन्यस्य कारणत्वाविरोधात् । न हि कारीरीं विना वृष्टिर्दृष्टेति सा वृष्टावहेतुः । न च केषांचिन्माहात्म्यज्ञानेऽपि भक्तिरस्त्विति वाच्यम् । माहात्म्यश्रवणेऽप्ययोग्यतादिनानादोषैर्माहात्म्यज्ञानाभावात् । भावे वा भर्जितं बीजमङ्कुरं नोत्पादयतीत्यन्यदपि तथा । अत्राऽऽदौ भक्त्यर्थं स्वविषयतत्प्रतीत्योर्भगवदधीनत्ववर्णनेन महिमोच्यते । स्वप्नो भगवदधीनो न वेति चिन्तायाम् । न तदधीनोऽसत्त्वात् । सत्त्वे नित्योऽनित्यो वा । उभयथाऽपि पूर्वान्तरकाले दर्शनप्रसङ्गः । न च दृष्टिकाल एवोत्पत्तिनाशावित्यदोषः । कर्त्रुपादाननिमित्तानामभावात् । किंच जीवो देहे स्थित्वैव निर्गत्य वा करोति । नाऽऽद्यः । मेरुमन्दरादिदर्शनायोगात् । न द्वितीयः । कुरुषु सुप्तस्य पञ्चालान्पश्यतः प्रबोधे देहे पञ्चालवेशापत्तेः । अतः प्रातीतिकत्वान्मरुमरीचिजलादिवन्न स्व[प्न]विषयस्येशाधीनत्वमिति प्राप्ते । जाग्रत्सुषुप्तिसंधौ स्वाप्निका भवन्ति । संध्ये स्वप्ने प्रागसतां सृष्टिरनन्तरं नाश इत्यर्थः । किमत्र मानम् । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजत इति श्रुतिः ॥१॥

जीवस्य सुप्तत्वादीशे मानाभावादिति कर्त्रभावशङ्कां निरस्यति—

**ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ ३ । २ । २ ॥**

य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिम इत्येके शाखिनो जीवे सुप्तेऽपीशं कर्तारमामनन्ति । अतः स्वाप्नाः पुत्रादयश्चेशादेव । स केनेति शङ्कां निरस्यति—

ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥३।२।३॥

अनादिमनोगतांश्च संस्कारान्स्वेच्छामात्रेण दर्शयति नान्येन साधनेन। समभिव्यक्तरूपत्वात् । मनोगतांस्तु संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते। यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यत्साधनजं भवेदिति ब्रह्माण्डे । माया कृपायां दम्भे च। ( कृपा तु इव ? ) दम्भः स्वप्नाप्तस्यासंभवी ॥ ३ ॥

ननु मरुमरीचिकाजलवन्मिथ्या स्वप्ना इति शङ्कां निरस्यति—

ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ॥ ३ । २ । ४ ॥

स्वाप्नविषयाणां बाह्यसाधनाजन्यत्वेऽपि न सत्त्वहानिः। शुभाशुभसूचकत्वेन सत्त्वसिद्धेः । तदेव कुत इति चेत् । यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽपि पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शन इति श्रुतेः। यद्वाऽपि ब्राह्मणे ब्रूयाद्देवता वृषभोऽपि वा । स्वप्नस्थमथवा राजा तत्तथैव भविष्यतीत्याचक्षते स्वप्नविदः पराशरादयः । स्वाप्नाः संस्कारोपादानका ईशकर्तृका इति तन्नियामकत्वेन सर्वनियन्तृरूपमाहात्म्यं हरेः सिद्धम् ॥ ४ ॥

ॐ पराभिध्यानात्तु तिरोधानं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥३।२।५॥

भक्त्यर्थं हरेः स्वप्नतिरोधकत्वमहिमोच्यते । स्वप्नतिरोधानं ब्रह्माधीनं न वेति चिन्तायाम् । न तदधीनम् । बाह्यज्ञानाभावादेव हि स्वप्नः। तज्ज्ञानादेव निवर्तते किमीशेनेति प्राप्ते । परेच्छयैव स्वप्नतिरोधानम् । न चाज्ञाननिमित्तिकः स्वप्नो ज्ञानेन निवर्त्यः । अज्ञानज्ञाननिमित्तकौ बन्धमोक्षौ प्रसिद्धावपि भगवदधीनौ यथा तथा स्वप्नस्यापि तदधीनत्वोपपत्तेः । तस्य—क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । तेषामहं समुद्धर्ता मृत्युसंसारसागरादिति बन्धादिहेतुत्वप्रसिद्धेः । न च ज्ञानाज्ञानयोरेव तद्धेतुत्वम् । जडत्वात् ॥ ५ ॥

ॐ देहयोगाद्वासोऽपि ॐ ॥ ३ । २ । ६ ॥

अत्र भक्त्यर्थं जाग्रत्प्रवर्तकत्वमहिमोच्यते । जाग्रदवस्थेशाधीना न वेति चिन्तायाम । नेशाधीना । कालाधीनत्वदर्शनात् । ईशाधीनत्वादर्शनाच्चेति प्राप्ते । देहयोगेन वासो जाग्रदवस्था। साऽपीशाधीना । न च कालाधीनत्वेनोपपत्तिः । तस्य जडत्वात् । ईश्वरः सर्वभूतानां हृद्देशेऽ-

र्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेति स्मृतेः । भ्रमणं प्रत्यक्षादिसिद्धं मुख्यं जाग्रत्येव ॥ ६ ॥

**ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ३ । २ । ७॥**

अत्र भक्त्यर्थं सुखप्राप्यत्वमहिमोच्यते । सुषुप्तेरीशाधीनत्वेऽपि नाडीषु सा भवति न वेति चिन्तायाम् । ईश्वर एव । साऽन्यथाऽन्यत्रावस्थाने जाग्रत्स्वप्नयोरिव दुःखस्याप्यापत्तेः । न चेष्टापत्तिः । सुखमस्वाप्समिति सुखस्यैव स्मृतेः । दुःखार्तानां मूर्छायामिव सुषुप्ताविच्छाद्यनापत्तेरिति प्राप्ते । सता सोम्य तदा संपन्नो भवति यत्रैतत्सुप्तः समस्तसंप्रसन्नः । स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवतीति । एवमात्मनि नाडीषु च जागरस्वप्नाभावरूपा सुषुप्तिः श्रूयते । न चोभयत्रैकस्य स्थितिर्विरुद्धा । नाडीस्थपरमात्मनि सुषुप्त्यङ्गीकारात् । अत एव न दुःखापत्तिः ॥ ७ ॥

**ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ३ । २ ।८ ॥**

अत्र भक्त्यर्थं सुप्तप्रबोधकत्वमहिमोच्यते । प्रबोध ईशाधीनो न वेति चिन्तायाम् । न भवति तदधीनः । तत्कारणभेरीताडनादीनां दर्शनादिति प्राप्ते । यतो जीवस्तत्र सुप्तोऽतः प्रबोधोऽप्यस्मात्परमात्मन एव । न हीशेन स्वान्तर्निवेशितो जीवस्तत्प्रेरणां विनोद्बोद्धुं शक्नोति । न च भेर्यादिकमपि दृश्यते । एष एव सुप्तं प्रबोधयतीत्यादिसावधारणश्रुत्यनुसाराद्भेर्यादीनां निमित्तमात्रत्वात् ॥ ८ ॥

**ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥३ । २ । ९॥**

अत्र भक्त्यर्थं सर्वावस्थानां तदधीनत्वमहिमोच्यते । सर्वेषां सर्वावस्था ईशाधीना न वेति चिन्तायाम् । न भवन्ति सर्वावस्थास्तदधीनाः । किंतु काश्चिदेव । राजादीनां खण्डेशत्वदर्शनात् । न च लोकविलक्षणं प्रेरकत्वमीशस्यातिप्रसङ्गादिति प्राप्ते । सर्वावस्थानियामको हरिः । एष ह्येव साधु कर्म कारयतीति कर्मण्यवधारणात् । प्रदर्शकस्तु सर्वेषां स्वमादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चनेति स्मृतेश्च । एष स्वमान्दर्शयत्येष प्रबोधयत्येष एव परमानन्द इति श्रुतेः । आत्मानमेव लोकमुपासीतेति विधेश्च परमात्मन एवोपास्यत्वम् । अन्यस्य प्रेरकत्वे सर्वत्रावधारणविरोधः स्यात् ॥ ९ ॥

**ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॐ ॥ ३ । २ । १० ॥**

सर्वावस्थानामीशाधीनत्वे सिद्धे भक्त्यर्थं तस्यावान्तरावस्थास्थितजीवप्राप्यत्वं निरूप्यते । अवस्थाविचारप्रसक्तो मोहो जीवस्येशेऽन्यत्र वेति चिन्तायाम् । मोहोऽपीश एव । जाग्रत्स्वप्नयोः पृथगवस्थात्वात् । अन्यथा तत्संकरप्रसङ्गात् । सुषुप्तिसंकरस्तु न दोषः समानत्वादिति प्राप्ते । मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य । हृदयस्थात्पराञ्जीवो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वपित्यस्मिल्लँयं व्रजन् । यत एवं त्रयोऽवस्था मोहस्तु परिशेषत इति स्मृतेः । मोहे तावदीशविदूरत्वसामीप्यप्रवेशार्धप्रवेशाः प्रसक्ताः । तत्र य(तुर्य)स्तावन्न संभवति । जाग्रदाद्यवस्थाधर्मत्वात् । अतः परिशेषादर्धप्राप्तिः । दूरस्थोऽक्षिस्थः । समीपस्थः कण्ठस्थः । मुखे विश्वो मनस्यन्तस्तु तैजस इति मानात् । अतो मोहावस्थाया ईशाधीत्वान्मुग्धप्राप्यत्वाच्च माहात्म्यं तत्र भक्तिरुत्पन्ना ॥ १० ॥

**ॐ स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ३ । २ । ११ ॥**

अत्र भक्त्यर्थं हरेः सर्वत्र निर्दोषाशेषगुणत्वं समर्थ्यते । अवस्थाप्रवर्तक ईशो जाग्रदादिभेदेन भिन्नो न वेति चिन्तायाम् । जाग्रदादिस्थानेषु स्थितो विश्वादिरूपो हरिरन्योन्यं भिन्न एव । भिन्नस्थानकत्वाद् घटादिवदिति प्राप्ते । न परेशस्य स्थानभेदाद्भेदः । सर्वेषु भूतेषु तमेव ब्रह्मेत्याचक्षते । एको देवः सर्वभूतेषु गूढः । शिवमद्वैतं चतुर्थं मन्यन्ते । नात्र काचन भिदा । नेह नानाऽस्ति किंचनेति श्रुतेः । उक्तानुमानस्य श्रुतिबाधितत्वात्परिच्छिन्नत्वोपाधिकत्वाच्च । अहमात्मा गुडाकेश सर्वभूताशयस्थित इति स्मृतेश्च । स्वरूपतो व्यापकत्वं शक्त्याविर्भावश्चेत्युभयथा सामर्थ्यमस्तीत्यर्थः । एकमेव सर्वगतं ब्रह्म कृपया रामादिरूपेणेव विश्वादिरूपेणाऽऽविर्भूतं भवतीति भावः ॥ ११ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ ३ । २ । १२ ॥**

ननु कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यत इति भेदवचनान्नेति चेन्न । एष त आत्माऽन्तर्याम्यमृतः । अयमात्मेदममृतम्, इदं ब्रह्मेदं सर्वम्, अयं वै हरयोऽयं वै दश च सहस्राणि वहति चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तमबाह्यमयमात्मा ब्रह्म सर्वानुभूतिरिति प्रत्येकमभेदवचनात् ॥ १२ ॥

आसनं यस्य तत्तथोक्तम् । अखण्डितसंमृष्टनालपुण्डरीकसमानलोचनोऽयमादित्यान्तर्वर्ती पुरुष इत्यर्थः । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत इति विग्रहविशिष्टवेदनस्यैव मोक्षोपायत्वम् । न चायं प्राकृतलोकमयः । सहस्रशीर्षेत्यादिविग्रहसंस्थानमुक्त्वा पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति सर्वभूतजातस्य तदेकदेशस्थत्वं तस्य नित्यत्वं चोक्त्वाऽनन्तरं तस्माद्विराडजायत इति त्रैलोक्यात्मकविराजो महापुरुषादुत्पत्तेरुपदेशात् । तदेवं पादोऽस्य विश्वा भूतानीत्यादिना भगवद्विग्रहस्य प्राकृताप्राकृतलोकद्वयाश्रयत्वश्रवणान्महत्त्वं सिद्धम् । अतो ज्यायांश्च पुरुषः । वेदाहमेतं पुरुषं महान्तमित्युपसंहारयोस्तस्य महत्त्वं स्फुटम् । मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् । तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् । सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम । देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः । नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतपेति ज्ञेयत्वं मुक्तप्राप्यत्वं च विग्रहस्योक्तम् । श्रीवैष्णवे—दध्यौ ब्रह्म परं विप्र प्रविश्य यमुनाजलम् । फणासहस्रमालाधिरत्नभद्रं ददर्श सः(?)। तस्योत्सङ्गे घनश्याममाताम्रायतलोचनम् । चतुर्बाहुमुदाराङ्गं चक्राद्यायुधभूषणमिति परस्य ब्रह्मणः समाधिविषयभूतस्वरूपमुक्त्वा—बलकृष्णौ तथाऽक्रूरः प्रत्यभिज्ञाय विस्मित इति परवासुदेवविग्रहावतारविग्रहयोरभेद उक्तः । यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः । तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् । द्यौस्त्वया शिरसा व्याप्ता पद्भ्यां देवी वसुंधरा । विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः । अतसीपुष्पसंकाशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयमिति । तत्रैव प्राकृतं रूपमुक्तं—ततस्तस्मै स प्रीतात्मा दर्शयामास तद्वपुः । शाश्वतं वैष्णवं श्रीमद्ददृशे यद्धनन्तपेति । शाश्वतत्वं चोक्तम् । यत्तु—एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते । माया ह्येषा मया सृष्टा यन्मां पश्यसि नारदेति नारायणीयवचनं, तत्तु गुणत्रयात्मकप्राकृतविग्रहाभिप्रायं न चाऽऽदित्यवर्णं तमसः परस्तादित्यादिनो-

कामाकुलाभिप्रायम् । एतान्बहुविधान्वर्णान् रूपे बिभ्रत्सनातनः । सर्वेभूतगुणैर्युक्तं नैव त्वं ज्ञातुमर्हसीति तत्रैव तद्विग्रहवर्णानां भौतिकत्वमुक्तम् । अन्यथा-धन्योऽस्म्य(स्य)नुगृहीतोऽसि यत्ते दृष्टः स्वयंप्रभुः । न हि तद्दृष्टवान्कश्चित्पद्मयोनिरपि स्वयम् । नारदैतद्धि नौ सत्यं वचनं समुदाहृतम् । नास्मद्भक्तात्प्रियतरो लोके कश्चन विद्यत इति श्रीविग्रहदर्शनस्य दुर्लभोक्तिविरोधः स्यात् । यद्वा रूपवानितिहेतोरयं मया चक्षुषा दृश्यते तत्त्वया न विज्ञेयम् । यथा त्वं मां पश्यसि सा एषा माया सृष्टा । माया कृपायां दम्भे च । नायमात्मा प्रवचनेन लभ्यः । न मेधया न बहुधा श्रुतेन । यमेष वृणुते तेनैव लभ्य इति श्रुतेः । प्रधानत्वात्प्रवर्तकत्वात्प्राकृतरूपवन्न भवतीत्यर्थः ॥ १४ ॥

ननु रूपत्वश्रुतिवैयर्थ्यमिति शङ्कां निरस्यति——

**ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ ३ । २ । १५ ॥**

यदा पश्यः पश्यते रुक्मवर्णम् । पश्य मे पार्थ रूपाणीत्यादिश्रुतिस्मृतीनां न वैयर्थ्यं न सौन्दर्याद्यभावश्च । यथा चक्षुरादिप्रकाशे विद्यमानेऽपि लौकिकप्रकाशवैलक्षण्यात्प्रकाशादिव्यवहारस्तथा प्राकृतभौतिकविलक्षणत्वेनारूपित्वव्यवहारोपपत्तिः ॥ १५ ॥

ननु सर्वेषां प्राकृतत्वनियम इति शङ्कां निरस्यति——

**ॐ आह च तन्मात्रम् ॐ ॥ ३ । २ । १६ ॥**

वैलक्षण्यं चाऽऽह रूपस्य । विज्ञानादानन्दमात्रत्वम् । ऐकात्म्यप्रत्ययसारमिति । प्रत्ययसारं ज्ञानस्वरूपमित्यर्थः । आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामिति श्रुतेः ॥ १६ ॥

नन्वेतयोः श्रुत्योर्ज्ञानानन्दात्मकत्वं ब्रह्मणः प्रतीयते नत्वानन्दादेर्ब्रह्मस्वरूपत्वमिति शङ्कां निरस्यति——

**ॐ दर्शयति चाथो अपि स्मर्यते ॐ ॥ ३ । २ । १७ ॥**

दर्शयति चाऽऽनन्दस्वरूपत्वं तद्विज्ञानेन परिपश्यन्ति धीराः । आनन्दरूपममृतवद्विभाति । शुद्धस्फटिकसंकाशं वासुदेवं निरञ्जनम् । चिन्तयीत पतिर्नान्यं ज्ञानरूपादृते हरेरिति मात्स्ये । अतो ज्ञानानन्दादिसुन्दरविग्रहे हरौ भक्तिर्युक्तेति युक्तं तन्महिमवर्णनम् ॥ १७ ॥

ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ ३ । २ । १८ ॥

अत्र भक्त्यर्थं जीवभेदो निरस्यते । अभेदे सेव्यसेवकभावायोगादवश्यं निराकर्तव्यः । परेशे भक्तिर्युक्ता न वेति चिन्तायाम् । न युक्ता । जीवस्य पराभिन्नत्वात् । यतः स्थानादितः परेशरूपाणां न भेदोऽत एव तद्दृष्टान्तेन जीवानामपि न । किमत्र मानम् । जीवः परेशान्न भिद्यते । चेतनत्वादंशत्वान्मत्स्यादिवदित्यनुमानम् । न च पूर्वं भेदो वर्णितः । सर्वचेतनसमुदायस्येशत्वेनैकैकजीवस्येशभेदाभेदेऽपि भेदाविरोधादयुक्ता भक्तिरिति प्राप्ते । तस्य प्रतिबिम्बत्वमुक्त्वा चेतनभेदं दर्शयति । रूपं रूपं प्रतिरूपो बभूव । बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले । एवमेवाऽऽत्मका लोके परात्मसदृशा मता इत्युक्तानुमाने चाप्रतिबिम्बत्वमुपाधिः । प्रतिबिम्बत्वं प्रकृतेर्भिन्नत्वे सदृशत्वे सति तदधीनत्वमेव जीवेन । मत्स्यादिषु तदस्ति । न च सूर्यकादिषु सूर्यस्याभेदः संभवति । न चानित्यत्वादिप्रसङ्गः । पारिभाषिकप्रतिबिम्बत्वेनोपाध्यधीनत्वादिसर्वप्रतिबिम्बधर्मानङ्गीकारात् । प्रतिबिम्बसादृश्यमेव स्वी क्रियते । जीवे न मुख्यप्रतिबिम्बत्वमिति भावः ॥१८॥

ॐ अम्बुवद्ग्रहणान्न तथात्वम् ॥ ३ । २ । १९ ॥

अत्र भक्तिवृद्धयै तत्फलं निरूप्यते । भक्तिः कर्तव्या न वेति चिन्तायाम् । न कर्तव्या । प्रयोजनाभावात् । नित्यानन्दादिमत्स्वरूपमोक्षस्य नित्यसिद्धत्वेन तदर्थं ज्ञानप्रसादयोरप्यनपेक्षणात् । अभिव्यक्त्यर्थं भक्त्यादिरिति चेन्न । नित्यसिद्धस्य कदाचित्स्वयमेवाभिव्यक्तिसंभवादिति प्राप्ते । कर्तव्यैव भक्तिः । ईशसादृश्यनित्यत्वेऽप्यम्बुवत्स्नेहेन ग्रहणं ज्ञानं विना हि न सम्यगभिव्यक्तिः । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामिति श्रुतेः । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति । महित्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते । तयैव व्यज्यते सम्यग् जीवरूपं सुखादिकमिति च स्मृतेः ॥१९॥

ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥३।२।२०॥

अत्र हरिभक्त्यर्थं तस्य भक्त्यनुसारि फलदानं समर्थ्यते । भक्तिरेकप्रकारा वृद्धिह्रासवती न वेति चिन्तायाम् । एकप्रकारैव । तत्फलस्य मुक्तानन्दित्वादेः साम्यादिति प्राप्ते । भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं महदल्पत्वादिकं विद्यते । ब्रह्मादीनामुत्तमानां सर्वेषां भक्तेरन्तर्भावात् । एवं

भक्त्यादिविशेषाङ्गीकारे हरेर्ब्रह्मादीनन्यांश्च प्रति सामञ्जस्यं भवति । मनुष्यादिषु भक्तत्वेन चतुर्मुखादेरप्यन्तर्भावेन तेषां भक्तादितारतम्ये सत्यपि विषमफलदातुर्दूरे वैषम्याभावः ॥२०॥

ननु ब्रह्मादीनां फलतारतम्यमेव कुत इत्यत आह—

**ॐ दर्शनाच्च ॐ ॥ ३ । २ । २१ ॥**

अथात आत्मानन्दस्य मीमांसा भवतीत्यारभ्य ब्रह्मपर्यन्तेषु सुखविशेषदर्शनात् । चात्स्मृतिः । यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदत इति ॥२१॥

**ॐ प्रकृते तावत्त्वं हि प्रतिषेधति, ततो ब्रवीति च भूयः ॐ ॥३।२।२२॥**

हरिभक्त्यर्थं तस्य पालकत्वमुच्यते । पालकत्वगुणाभावे निरतिशया भक्तिर्न स्यादित्यवश्यं निर्णेयम् । पालनं हरेर्युक्तं न वेति चिन्तायाम् । न युक्तम् । सत्यां सृष्टौ यावत्संहारं जगत्स्थितेः स्वत एव सिद्धेरिति प्राप्ते । अस्ति पालकत्वं हरेरुक्तम् । सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य भूयस्ततोऽधिकं ब्रवीति । नैतावदेता परोऽन्यदस्त्युक्षा स द्यावापृथिवीं बिभर्तीति श्रुतेः । अनेनेशेन भवत्कार्यं प्रागुक्तं सृष्टिसंहारमात्रं न, किंत्वन्यदस्ति । किं तत् । स परो भक्ताभिलषितसेचको द्यावापृथिव्यौ धत्ते पुष्णाति चेत्यर्थः । चात्स्मृतिः । सर्गस्थितिविनाशांस्तु भगवान्मधुसूदनः । तैस्तै रूपैरचिन्त्यात्मा करोत्यव्याहतान्प्रभुरिति वैष्णवे ॥२२॥

**ॐ तदव्यक्तमाह हि ॐ ॥ ३ । २ । २३ ॥**

भक्त्यर्थं प्रसादं विनोपलब्ध्ययोग्यत्वमुच्यते । योग्या चेद्भक्तिर्व्यर्था स्यात् । भक्तिः कर्तव्या न वेति चिन्तायाम् । न कार्यैव । प्रयोजनाभावात् । ईशापरोक्ष्यादेः स्तम्भाद्यपरोक्ष्यवत्पुरुषप्रयत्नेनैवोपपत्तेरिति प्राप्ते । अव्यक्तमेव तद्ब्रह्म स्वतः । अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् । यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाव्ययो भवेदिति श्रुतेः । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं ममेति स्मृतेश्च । अव्यक्तत्वं तस्य श्रुतिस्मृती आहतुरित्यर्थः ॥ २३ ॥

ननु ब्रह्मणः स्वतोऽव्यक्तत्वेऽप्याराधनेन पुरुषप्रयत्नेन व्यक्तो भवतीति किं भक्त्येति शङ्कां निरस्यति——

**ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ ३ । २ । २४ ॥**

भक्तिरहिताराधनेनाप्यव्यक्तत्वम् ॥ २४ ॥

गृहीतरूपैर्व्यक्तत्वं दृष्टं ह्यनलजलभुवां तन्मात्रालक्षणानुत्पन्नमूलरूपेणाव्यक्तानामप्युत्पन्नरूपेण व्यक्तत्वमिति किं भक्त्येति शङ्कां निरस्यति—

ॐ प्रकाशवच्चावैशेष्यम् ॐ ॥ ३ । २ । २५ ॥

अग्न्यादिवत्स्थूलसूक्ष्मविशेषाभावात् । अनलादेः स्थूलत्वसूक्ष्मत्वादिवत् । ब्रह्मणि वा दश नानाधर्माभावेन व्यक्तत्वादनुपपन्नमिति भावः ॥ २५ ॥

ननु तर्हि यत्नवैयर्थ्यमिति शङ्कां निरस्यति—

ॐ प्रकाशश्च कर्मण्यभा(भ्या)सात् ॐ ॥ ३ । २ । २६ ॥

भक्तिपूर्वकश्रवणाद्यभ्यासात् । अव्यक्तस्य कृपया प्रकाशप्राकट्यं भवति । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेः ॥ २६ ॥

ननु नित्याव्यक्तस्य कथं प्रकाश इति शङ्कां निरस्यति—

ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॐ ॥ ३ । २ । २७ ॥

पुरुषप्रयत्नमात्रेणाप्रत्यक्षत्वं प्रसादात्प्रत्यक्षत्वमित्युभयत्र प्रमाणसत्त्वात् । तस्याभिध्यानाद्योजनात्तत्त्वज्ञानाद्भूयश्चान्ते विश्वमायानिवृत्तिः । मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् । नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्योऽहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतपेति लिङ्गात् । तस्य युक्तं वै तदनन्तशक्तित्वात् ॥ २७ ॥

ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ ३ । २ । २८ ॥

अत्र भक्त्यर्थं तस्यानन्तगुणवत्त्वं समर्थ्यते । भक्तिः कर्तव्या न वेति चिन्तायाम् । न कर्तव्या । तस्याऽऽनन्दित्वाभावात् । न चागुणिनि भक्तिः संभवति । न चाऽऽनन्दित्वमङ्गीकर्तुं शक्यम् । तस्याऽऽनन्दस्वरूपत्वाभ्युपगमादिति प्राप्ते । कर्तव्यैव भक्तिः । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन । विज्ञानमानन्दं ब्रह्म । यः सर्वज्ञः सर्ववित् । सत्यं ज्ञानमनन्तं ब्रह्मेत्यानन्दानन्दित्वाद्युभयोपदेशात् । यथा कुण्डलात्मकस्याहेर्विशेषादेव कुण्डलित्वमेवमानन्दाद्यात्मकस्यापि ब्रह्मणो विशेषादेवाऽऽनन्दित्वादिकं युज्यते । न चेशो नाऽऽनन्दादिमान् । आनन्दादिस्वरूपत्वात् । नहि तद्वानतत्स्वरूपो यथा गुणादिरिति वाच्यम् । द्रव्यात्मके द्रव्यात्मकस्य दण्डकुण्डलादेर्धर्मत्वदर्शनात् । भेदकस्येच्छाद्यधिकरणानधिकरण-

त्वादेः प्रकृतेऽपि सत्त्वात् । वेदैकगम्ये ब्रह्मणि युक्तिविरोधस्याकिंचित्करत्वात् ॥ २८ ॥

दृष्टान्तान्तरेण समर्थयति—

**ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ॥ ३ । २ । २९ ॥**

यथा प्रकाशात्मकस्यापि सूर्यादेः प्रकाशित्वं विशेषबलादेवं ब्रह्मण आनन्दाद्यात्मकत्वेऽप्यानन्दित्वादिकम् । आदित्यवर्णं, तेजोमयं विश्वमनन्तमाद्यामिति ब्रह्मणः प्रकाशरूपत्वात् ॥ २९ ॥

दृष्टान्तान्तरमाह—

**ॐ पूर्ववद्वा ॐ ॥ ३ । २ । ३० ॥**

यथा कालस्य पूर्वेण कालेनाभेदेऽपि काल इति विशेष्यः पूर्व इति विशेषको विशेषादेव तथाऽऽनन्दाद्यात्मकस्यापि ब्रह्मणो विशेषादेवानन्दादिमद्ब्रह्म विशेष्यविशेषणभावोपपत्तिः ॥ ३० ॥

ननु ज्ञानानन्दादीनां पूर्णानां नानात्वे तदात्मकस्य ब्रह्मणोऽपि नानात्वापत्तिरिति शङ्कां निरस्यति—

**ॐ प्रतिषेधाच्च ॐ ॥ ३ । २ । ३१ ॥**

एकमेवाद्वितीयम् । नेह नानाऽस्ति किंचनेति भेदनिषेधज्ञानानन्दकृत्याद्याश्रयत्वस्य गुणेषु प्रत्येकमभावात् । ब्रह्मणि सत्त्वाच्च ॥ ३१ ॥

**ॐ परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॐ ॥ ३ । २ । ३२ ॥**

अत्र भक्त्यर्थं हरिगुणानां लोकवैलक्षण्यमुच्यते । हरिगुणजातं लौकिकमलौकिकं वेति चिन्तायाम् । न विलक्षणम् । आनन्दादिपदवाच्यत्वात् । न हि घटविलक्षणे घटपदवाच्यत्वमिति प्राप्ते । परमलौकिकं हरिगुणजातम् । एष सेतुर्विधृतिः य एष आनन्दः परस्यैष नित्यो महिमा ब्राह्मणस्येति सेतुत्वोपदेशात् । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहेत्युन्मानत्वोपदेशात् । एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति संबन्धोपदेशात् । अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्परम् । नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयत इति भेदोपदेशाच्च । लौकिकानन्दादिष्वसंभावितैः सेत्वादिभिरलौकिकत्वसिद्धिरिति भावः ॥ ३२ ॥

हेत्वन्तरमाह—

**ॐ दर्शनाच्च ॐ ॥ ३ । २ । ३३ ॥**

दर्शनादेवान्यानन्दादीनां ततो वैलक्षण्यम् । अदृष्टमव्यवहार्यमव्यपदेश्यं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षते चेत्यादिश्रुत्या ब्रह्मानन्दादेरियत्तादिना व्यवहार्यत्वोक्तेः ।

ननु कथं तर्हि श्रुत्यादिष्वानन्दादिप्रयोग इति शङ्कां निरस्यति—

ॐ बुद्ध्यर्थः पादवत् ॐ ॥ ३ । २ । ३४ ॥

जीवेश्वरसंबन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते । पादोऽस्य विश्वा भूतानीति यथा पुरुषपादस्य तदंशत्वं तथा भूतानामिति जीवेशयोरंशांशित्वं संबन्धज्ञानार्थंभेदश्रुतिपर्यालोचनेन जीवानां भिन्नांशत्वं तथा लोकविलक्षणेऽप्यानन्दादौ तस्यानुकूलवेद्यत्वाद्यर्थं तत्पदप्रयोगो युज्यत इति भावः ॥ ३४ ॥

ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ ३ । २ । ३५ ॥

हरिभक्त्यर्थं ब्रह्माद्यानन्दादीनां भगवदानन्दादिप्रतिबिम्बत्वमुच्यते । ब्रह्मानन्दादि भगवदानन्दादिप्रातिबिम्बं न वेति चिन्तायाम् । न प्रतिबिम्बं भवति । तथात्वे मिथो वैचित्र्यापत्तेः । विचित्राणामपि प्रतिबिम्बत्वे भगवद्गुणानां तारतम्यापत्तेः । तथा च तत्र भक्तिर्न स्यादिति प्राप्ते । भवत्यन्यानन्दादीशानन्दादिप्रतिबिम्बम् । नोक्तदोषः । बिम्बवैचित्र्याभावेऽपि सूर्यकान्तादिस्थानगुणेन सूर्यादिप्रतिबिम्बेष्वग्निजनकत्ववैचित्र्यम् । एवं ब्रह्मादिस्थानगुणवैचित्र्येण जीवानन्दादीनां विचित्राणामविचित्रभगवदानन्दाप्रातिबिम्बत्वोपपत्तेः । यथा जीवानां भगवति भक्तिविशेषो भवति तथा तत्कृपया जीवानामानन्दाद्याविर्भावो भवति । तत्सदृशत्वे सति तदधीनत्वमेवाऽऽनन्दादीनां प्रकृतेः प्रतिबिम्बत्वमिति भावः ॥ ३५ ॥

युक्त्यन्तरेण बिम्बावैचित्र्येऽपि प्रतिबिम्बवैचित्र्यमाह—

ॐ उपपत्तेश्च ॐ ॥ ३ । २ । ३६ ॥

ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः । ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रतेति पाद्मे ॥ ३६ ॥

नन्वैश्वर्यानुगुणेनैवोपपन्नेन बिम्बसामर्थ्यमुपयुज्यत इति । मैवम् । सूर्यकान्तादिगतसूर्यकादिवैचित्र्येऽपि बिम्बसामर्थ्यस्योपयोगदर्शनात् । स्थानगुणस्यैव निमित्तत्वे प्रतिबिम्बस्यापि तस्याग्निजनकत्वापत्तेः—

ॐ तथाऽन्यत्प्रतिषेधात् ॐ ॥ ३ । २ । ३७ ॥

अत्र हरिभक्त्यर्थं पुनस्तस्याऽव्यक्तत्वमुच्यते । ब्रह्माव्यक्तं व्यक्तं वेति चिन्तायाम् । नाव्यक्तम् । तस्य ध्याने प्रतीयमानत्वादिति प्राप्ते । न ध्यानकाले प्रतीतत्वेन व्यक्तत्वम् । तस्याब्रह्मत्वात् । यथा जीवानन्दादीनामल्पत्वाद्ब्रह्मानन्दादेर्लक्षणं तथा दुर्लक्षणात्परब्रह्मण उपासाविषयीकृतमन्यद्विलक्षणम । यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति प्रतिषेधात् । अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो मम भूतमहेश्वरमिति स्मृतेः । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यनुसारादुपासाकालेऽपि किंचिद्गुणविशिष्टस्य भानेऽप्यनन्तगुणविशिष्टस्य मोक्षहेतुमहाप्रसादहेतुज्ञानविषयतार्हस्य स्नेहपूर्वकानुध्यानरूपभक्तिं विनाऽयोगेन कर्तव्यैव भक्तिरिति भावः ॥ ३७ ॥

**ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ३ । २ । ३८ ॥**

भक्त्यर्थं हरेरेव सर्वस्रष्टृत्वमुच्यते । ईशः सर्वकर्ता न वेति चिन्तायाम् । न ब्रह्मण एव सृष्ट्यादिः । देशान्तरे कालान्तरेऽन्यतोऽपि राजादीनां तथा दर्शनादिति प्राप्ते । हरेरेव सर्वदेशकालादौ सर्वकर्तृत्वं नान्यस्य । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति तस्यैव मायित्वश्रवणात् । एष सर्व एष सर्वगन एष ईश्वर इति श्रुतेः। विभाव्यतेऽन्तःकरणे पुरुषेष्वक्षयो महान् । सर्वस्मिन्सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक् । सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः । सर्वात्मन्सर्वभूतेश सर्वसत्त्वसमुद्भव । सर्वभूतान्भवान्वेत्ति सर्वसत्त्वमनोरथमिति वैष्णवोक्तेः । सर्वगतत्वमायास्वामित्वश्रवणात्सर्वदेशकालादिष्वनेनैव सृष्ट्यादिः प्रवर्तत इत्यर्थः । अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः । प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकमिति सर्वकारणत्वेन प्रकृतेः स्वामिनि सुतरां सर्वकारणत्वमिति भावः ॥ ३८ ॥

**ॐ फलमत उपपत्तेः ॐ ॥ ३ । २ । ३९ ॥**

अत्र भक्त्यर्थं हरेः कर्मफलदातृत्वमुच्यते । हरिः कर्मफलदाता न वेति चिन्तायाम् । कर्मैव फलदातृ । नेशः । कर्मसापेक्षत्वात् । अकृतकर्मणः फलादर्शनाच्चेति प्राप्ते । अत एवेशात्फलमुपपत्तेः । न कर्मणोऽचेतनत्वात् । तदपि कर्म तेनैवान्तःस्थेन कारितमिति स एव फलदाता ॥ ३९ ॥

नन्वीशस्य चेतनत्वेन फलदातृत्वे संशय एव न तु निश्चय इति शङ्कां निरस्यति—

ॐ **श्रुतत्वाच्च** ॐ ॥ ३ । २ । ४० ॥

विज्ञानमानन्दं ब्रह्म । रातेर्दातुः परायणमिति श्रुतेः । दातुर्यजमानस्य रातिः फलप्रदमित्यर्थः ॥ ४० ॥

मतान्तरमाह—

ॐ **धर्मं जैमिनिरत एव** ॐ ॥ ३ । २ । ४१ ॥

यतः फलं तदेव कर्मशास्त्राद्भवति । एष ह्येव साधु कर्म कारयतीति ॥ ४१ ॥

ॐ **पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॐ ॥ ३ । २ । ४२ ॥

कर्मणः फलदातृत्वं कारणत्वेनाप्युपपत्तेः । कर्मणोऽन्वयव्यतिरेकौ करणत्वेनोपपन्नौ । पुण्येन पुण्यं लोकं नयति पापेन पापमिति श्रुतौ ब्रह्मणः फलदानक्रियाकर्तृत्वस्य कर्मणां कारणत्वस्य च व्यपदेशात्पूर्वं कर्तृरूपं ब्रह्मैवेति भगवान्बादरायणो मन्यते । न च जैमिनिमतविरोधः । सामान्यतः कारणत्वं जैमिनिमतं तच्चाभ्युपगतमित्यविरोधात् । अतः परमेश्वरस्यैव सर्वकर्मफलदातृत्वान्निरतिशयमाहिम्नि हरौ भक्तिः कर्तव्येति ॥ ४२ ॥

इति श्रीवेदान्ते सिद्धान्तमुक्तावल्यां वनमालिमिश्रविरचितायां
सारसंग्रहे ब्रह्मसूत्रे तृतीयाध्यायस्य द्वितीयः पादः ॥

---

अथ तृतीयः पादः ।

ॐ **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॐ ॥ ३ । ३ । १ ॥

उपासनाऽस्मिन्पादे कथ्यते । उपासना हि जिज्ञासा । सा च भक्तिसाध्येति तदुत्तरं ज्ञानसाधनमिति ततः पूर्वमुच्यते । उपासना द्विविधा । सकलशास्त्रश्रवणमननादिरूपा ध्यानरूपा च । तत्राऽऽद्या या ध्यानाङ्गत्वात्सैवास्मिन्नधिकरणे विधीयते । समस्तशास्त्रश्रवणादिना निरस्तसंशयविपर्यस्य ध्यानाधिकारित्वादतोऽस्ति संगतिः । आद्यसूत्रे श्रवणमनने इत्युक्तम् । तयोः सर्वशाखाविषयकत्वेऽस्य शास्त्रस्य सर्वोपादेयता न स्यादिति सर्वशाखाविषयकत्वं समर्थनीयम् । ब्रह्म किमेकैकेन सर्वशाखोक्तश्रवणमननादिना ज्ञातव्यमुत स्वशाखोक्तनैवेति चिन्तायाम् । स्वशाखोक्तेनैव ज्ञेयम् । प्रतिशाखमुच्यमानार्थानां भेददर्शनात् । अन्यथैकप्रकारोक्तिः

स्यात् । अतः स्वशाखागतार्थ एव ज्ञेय इति सर्वश्रुतिनिर्णायकस्यास्य शास्त्रस्य सर्वोपादेयतेति प्राप्ते । सर्ववेदानामन्तो निर्णयस्तेन प्रत्ययो यस्य॰ तत् । तथा च सर्वशाखानिर्णयजन्यज्ञानं ब्रह्मेति ध्यानार्थिना श्रवणादिना वेदान्निर्णीय स्वशाखोपसंहारेणैवोपास्यम् । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिरित्यन्तं पदं निर्णयार्थम् । आत्मेत्येवोपासीतेत्यादिविधीनां सर्वपुरुषाविशेषणैव प्रवृत्तत्वात् ॥ १ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ भेदान्नेति चेदेकस्यामपि ॐ ॥ ३ । ३ । २ ॥**

क्वचिद्विज्ञानमानन्दं ब्रह्म । क्वचिच्च सत्यं ज्ञानमनन्तं ब्रह्म । अन्यत्र यः सर्वज्ञः सर्ववित् । श्रोतृमन्त्रादिरूपमन्यत्रापहतपाप्मत्वादिरूपमन्यत्रेति प्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वाः शाखा इति चेन्न । एकस्यामपि शाखायामात्मेत्येवोपासीत, कं ब्रह्म खं ब्रह्मेत्यादिभेददर्शनात् । यदि विभिन्नशाखागतभेदोक्त्या सर्वशाखोक्तं नैकेन ज्ञेयं तर्ह्येकशाखागतभेदोक्त्यैकशाखोक्तं सर्वप्रकारं नैकस्येति ज्ञेयं स्यादिति भावः ॥२॥

हेत्वन्तरमाह—

**ॐ स्वाध्यायस्य हि तथात्वेन समाचारेऽधिकाराच्च ॐ ॥३।३।३॥**

स्वाध्यायोऽध्येतव्य इति सर्वशाखा एकेनाध्येया इति सामान्यविधिः। अन्यथेयं शाखाऽनेनाध्येतव्येत्युक्तं स्यात् । हिशब्दाद्वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मनेति स्मृतः । सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः । आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः । सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः । शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपत् । इति समाचारे सर्वाधिकाराच्च ॥ ३ ॥

नन्वेवं मन्दानां ध्यानाद्यभावप्रसङ्ग इति शङ्कां निरस्यति—

**ॐ सलिलवच्च तन्नियमः ॐ ॥ ३ । ३ । ४ ॥**

यथा सर्वं सलिलं समुद्रं गच्छत्येवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः । यथा प्रतिबन्धाभावे सर्वासामपां समुद्रोपगमनं तथा सर्वशाखोक्तप्रकारेण ब्रह्मध्याने शक्त्यपेक्षेति मन्दैर्यथाशक्ति गृहीतवदुक्तप्रकारेणैव ध्येयमिति भावः ॥ ४ ॥

युक्तिसमर्थितमर्थं श्रुतिस्मृतिभ्यामाह—

**ॐ दर्शयति च ॐ ॥ ३ । ३ । ५ ॥**

सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिध्येदिति श्रुतेः । वेदैश्च सर्वैरहमेव वेद्य इति स्मृतेः ॥ ५ ॥

**ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ ३ । ३ । ६ ॥**

अत्र हरिज्ञानसाधनोपासनाय सार्वत्रिकगुणोपसंहारः समर्थ्यते । हरिः सर्ववेदोक्तगुणानुपसंहृत्य ध्येयोऽन्यथा वेति चिन्तायाम् । ईशः सर्ववेदोक्तप्रकारेण ध्येय एव, न तु सर्वगुणानुपसंहृत्य ध्येयः । अशक्यत्वात् । ज्ञानक्रमभावित्वाच्छक्यमिति प्राप्ते । सर्ववेदोक्तानामानन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां चाभेदात् । व्यङ्गुलादिवद्भेदाभावादुपसंहारो युक्तः । अहरहः संध्योपासनविधिवदुपास्यः । एकः परतः परेण वेदैश्च सर्वैः सह चेतिहासैः । सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतेः । इत्यादेः सर्वगुणोपसंहारोपासनेऽपि विधेः सत्त्वात् । ये भवन्ति समानाः पूर्णत्वाद्यविरोधिनः। त एवोपसंहर्तव्या न तु सोऽरोदीदितिश्रुत्युक्ता रोदनादय इत्याह—**समाने चेति** । अनेकशाखोक्तानन्दादेः प्रत्येकं भेदाभावेनोपसंहारो युक्त इति भावः ॥ ६ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॐ ॥ ३ । ३ । ७ ॥**

आत्मेत्येवोपासीतेत्यादिश्रुत्योपसंहारस्यान्यथात्वमभावः प्रतीयत इति चेन्न । एते गुणा नोपास्या इति विशेषवचनासत्त्वात् । सर्वगुणैरेक एवेशिताऽसावुपासितव्यो नैव दोषैः कदाचिदिति विशेषवचनाच्च । अवधारणेनाऽऽत्मनो धर्मिणस्तुल्या धर्मिण एवानात्मानो व्यावर्तन्ते न तन्निष्ठा असाधारणधर्मा अपि । न हि राजैव दृष्ट इत्यादौ तदीयच्छत्रादयः श्मश्रुकेशादयो वा व्यावर्तन्ते ॥ ७ ॥

ननु सर्वोपसंहारोऽशक्यत्वादितिशङ्कामभ्युपगमान्निरस्यति—

**ॐ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ॥ ३ । ३ । ८ ॥**

परोवरीयो वैश्वानरादिप्रकरणभेदान्नैकस्य सर्वगुणोपासना । नन्वेकस्मिन्नेव प्रकरणे सर्वगुणोक्तिसंभवेन प्रकरणभेदेऽपि सर्वगुणोपासनोपपत्तिरिति चेन्न । स एष परोवरीयानुद्गीथः, स एषोऽनन्त इत्यादिप्रकरणेषु परोवरीय-

स्त्वादेरेवोक्तेः । सर्वगुणानुक्तेश्च । यावतां येनोपसंहारो येन प्रकारेण कर्तुं शक्यस्तावन्त एवोपसंहृत्योपास्या इति भावः ॥ ८ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ॥ ३ । ३ । ९ ॥**

सर्वविद्यानां ब्रह्मनामत्वेन तद्गुणाभिधायकत्वाद्गुणाभिधानस्योपसंहारार्थत्वात्कर्तव्य एव सः । सर्वविद्यानां ब्रह्मनामत्वं तु—ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदमिति नारदेनाऽऽत्मनः सर्वविद्यावेदित्वमुक्त्वा सोऽहं नामविदेव नाऽऽत्मविदिति सर्वविद्यावेदित्वात्मनामविदेव तन्निर्णयाभावादित्युक्तत्वाद्गम्यत इति चेत्स्वी क्रियत एव सर्वगुणोपसंहारः । शक्तौ सत्यां कर्तव्य एव सर्वगुणोपसंहार इति भावः ॥ ९ ॥

**ॐ प्राप्तेश्च समञ्जसम् ॐ ॥ ३ । ३ । १० ॥**

अत्र ज्ञानसाधने गुणोपसंहारानुपसंहारयोः कर्तव्यता समर्थ्यते । गुणोपसंहारानुपसंहारौ युज्येते न वेति चिन्तायाम् । एकस्य तूपसंहारानुपसंहारौ विरुद्धौ । अनेनोपसंहारोऽनेन नेति तु न नियामकमित्युक्तौ ताविति प्राप्ते । पुरुषयोग्यताविशेषात्पुरुषभेदेन समञ्जसौ तौ । गुणैः सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः । अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव त्विति स्मृतेः ॥ १० ॥

**ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ ३ । ३ । ११ ॥**

अत्र बहुगुणोपसंहारः समर्थ्यते । सर्वगुणोपसंहारः कर्तव्यो न वेति चिन्तायाम् । अल्पगुणचिन्तकेभ्यो बहुगुणचिन्तकानां फलेऽतिशयाभावान्न कर्तव्य एवेति प्राप्ते । अल्पगुणचिन्तकेभ्यो ब्रह्मादीनां फलातिशयाद्युक्त एव बहुगुणोपसंहारः । न च फलातिशयानिर्णयः । सर्वगुणोपसंहारेण तेषां महत्त्वादेव तन्निर्णयात् । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति स्मृतेः सर्वगुणयुक्तत्वेनोपासनाद् ब्रह्मादयोऽल्पगुणचिन्तकफलादन्यत्र फलभोक्तारो भवन्तीति सूत्रार्थः ॥ ११ ॥

**ॐ आनन्दादयः प्रधानस्य ॐ ॥ ३ । ३ । १२ ॥**

अत्रोपास्यगुणा निर्णीयन्ते । उपास्यगुणाः संख्यादिना निर्दिष्टा न वेति चिन्तायाम् । न पृथङ्निर्दिष्टाः सन्ति । के ते कियन्तश्चेत्यत्र वक्तव्यापत्तेः । केषांचित्समुच्चयेऽन्येषामपि समुच्चयापत्त्या नियमासंभवात् । नोपास्या गुणा इति प्राप्ते । प्रधानस्य मोक्षस्यार्थं चत्वार आनन्दादय

उपास्याः । आनन्दो ज्ञानं सदात्मेत्युपास्या एव । सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चितेति स्मृतेः । अयं भावः । स्वापेक्षितफलानुसारेण ब्रह्मोपास्यम् । अपेक्षितं मुमुक्षोरानन्दादिकमेव । सत्त्वं निर्दोषत्वम् । तच्च ज्ञानानन्दादौ च सर्वापेक्षितं फलम् । आत्मत्वं स्वामित्वं भगवत्प्राप्तिसाधनत्वादुपास्यमिति । यथाक्रतुरेतस्मिन् लोके पुरुषस्तथेतः प्रेत्य भवतीति श्रुतेः ॥ १२ ॥

**ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ ३ । ३ । १३ ॥**

अत्र ज्ञानसाधनोपासने प्रियशिरस्त्वादिसाधारण्यं निरस्यते । तस्य प्रियमेव शिर इत्यादिना श्रुताः प्रियशिरस्त्वादयः सर्वोपास्या न वेति चिन्तायाम् । उपास्या एव । तेषामानन्दविशेषत्वादिति प्राप्ते । फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासनाप्राप्तिः । आनन्दत्वेनाऽऽनन्दस्य सर्वोपास्यत्वेऽपि न प्रियशिरस्त्वादिना सर्वोपास्यत्वम् । आनन्दादिश्रुतिसिद्धफलभेदसिद्ध्यर्थं गुणोपासनातारतम्यस्याऽऽवश्यकत्वात् । तथा च ते ब्रह्मादिभिरेवोपास्यास्तेषामानन्दाधिक्यप्रसिद्धेरिति भावः ॥ १३ ॥

**ॐ इतरे त्वर्थसामान्यात् ॐ ॥ ३ । ३ । १४ ॥**

अत्र देवानां बहुगुणोपसंहारः कथ्यते । चतुर्गुणाधिका गुणा देवादिभिरुपास्या न वेति चिन्तायाम् । नोपास्याः । विरिञ्चेतरसर्वेषां चतुर्गुणोपासनस्यैवावगमादिति प्राप्ते । चतुर्भ्यः सर्वेभ्यश्चेतरे मध्यमगुणा देवादिभिरुपास्याः । न तेषां फल उपासने च योग्यत्वानिर्णयः । तेषां भाव्युत्कर्षं ज्ञात्वा ब्रह्मणोऽन्यस्य सर्वस्य गुरोस्तदनुसारिगुणोपदेशोपपत्तेः । यो यो भावो देवानां विमुक्तौ तत्तत्प्राप्तौ सगुणानीश(शि)तुश्च । ब्रह्मादिशत्यथ तांस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्येति श्रुतेः ॥ १४ ॥

**ॐ आध्यानाय प्रयोजनाभावात् ॐ ॥ ३ । ३ । १५ ॥**

पुनरप्युपसंहारानुपसंहारौ समर्थ्येते । तौ कर्तव्यौ न वेति चिन्तायाम् । न कर्तव्यौ । तत्र विध्यभावात् । अनुपसंहारेऽपि मोक्षस्योक्तत्वात्तारतम्यस्यानपेक्षितत्वाच्चेति प्राप्ते । कर्तव्य एवोपसंहारः । सर्वविद्यानां तन्नामत्वेन गुणाभिधायकत्वात् । गुणानां ध्यानार्थत्वात् । अन्यप्रयोजनाभावाच्च । गुणाभिधानान्मोक्षतारतम्यस्य श्रुतियुक्त्यादिसिद्धत्वात्कर्तव्य एव गुणोपसंहारः ॥ १५ ॥

उपसंहारं समर्थ्याधिकारिभेदेनानुपसंहारमाह—

**ॐ आत्मशब्दाच्च** ॐ ॥ ३ । ३ । १६ ॥

आत्मेत्येवोपासीतेति सावधारणात्मशब्दात्स्वामित्वातिरिक्तगुणानामनुपसंहारोऽपि सिध्यति ॥ १६ ॥

**ॐ आत्मगृहीतिरितरवदुत्तरात्** ॐ ॥ ३ । ३ । १७ ॥

अत्र ज्ञानसाधनोपासन आनन्दादिनियमः समर्थ्यते । उक्तानन्दादयश्चत्वारः सर्वमुमुक्षूपास्या उताऽऽत्मत्वमेवेत्युभयथोक्तिः संदेहबीजम् । आत्मत्वमेव सर्वैरुपास्यम् । आत्मेत्येवेति श्रुतेरिति प्राप्ते । नाऽऽत्मपदेन गुणान्तरव्यावृत्तिः । तस्य स्वामित्वमात्रपरत्वाभावात् । सत्यं ज्ञानमनन्तं ब्रह्म । विज्ञानमानन्दं ब्रह्मेतिवदेव ह्यात्मपदगृहीतिः । अत्र ह्येते सर्व एकीभवन्तीत्युत्तरात् । अत सातत्यगमने । गत्यर्थास्ते ज्ञानार्था इति । आत्मा ज्ञानरूपः । अत्यते गम्यते मुक्तैः प्राप्यत इत्यात्मा । सुखरूप इत्यर्थः । तथाऽऽत्मपदं ज्ञानादीनां वाचकमिति भावः ॥ १७ ॥

**ॐ अन्वयादिति चेत्स्यादवधारणात्** ॐ ॥ ३ । ३ । १८ ॥

आत्मपदोक्तगुणोपासनं सर्वैः कर्तव्यमित्यत्रोच्यमाना आत्मपदोक्तगुणाः सर्वैरुपास्या न वेति चिन्तायाम् । नोपास्याः । आत्मव्याप्तेरिति तस्य सर्वगुणाभिधायकत्वादिति प्राप्ते । उपास्या आत्मपदोक्ता गुणाः । न ह्यस्मात्प्रति सर्वे गुणा आत्मपदेनोपास्यत्वेनोच्यन्ते । अवधारणानुपपत्तेः । किंत्वानन्दादय एव । सर्वे तु ब्रह्मादीन्प्रति । एवकारस्य तदन्ययोगव्यावृत्त्यर्थकत्वादिसंभवात् । अयं भावः । आत्मपदेनानन्तगुणपूर्णोऽभिधीयते । तत्र येन यावन्त उपसंहर्तुं शक्यास्तावन्त उपसंहर्तव्या इति ॥ १८ ॥

**ॐ कार्याख्यानादपूर्वम्** ॐ ॥ ३ । ३ । १९ ॥

अत्र लौकिकगुणोपसंहार उच्यते । गुणा लौकिका ध्येया अलौकिका वेति चिन्तायाम् । लौकिका एव ध्येयाः । अलौकिकानां ध्यानकालेऽनुपस्थितेरिति प्राप्ते । अलौकिका एव ध्येयाः । तत्कार्यस्य मोक्षालौकिकत्वाख्यानात् । फलानुसारिध्यानस्यैव कर्तव्यत्वात् ॥ १९ ॥

**ॐ समान एव चाभेदात्** ॐ ॥ ३ । ३ । २० ॥

अत्रोपासनस्य सदृशफलदत्वमुच्यते । उपासनं स्वसदृशफलदं न वेति चिन्तायाम् । न स्वसदृशफलदम् । ब्रह्माणीब्रह्मणोरुपासनस्य तदभावात् ।

सालोक्येन गुणाधिक्येन च फलसाम्ययोः सत्त्वात् । न चोपासनं समं विषमं [वा] संभवति विरोधादिति प्राप्ते । स्वानुसारिफलदत्वमेवोपासनस्य । न चोक्तदोषः । ब्रह्माणीब्रह्मणोः फलवदुपासनस्यापि तादृशत्वात् । ब्रह्माऽप्युपासनस्य गुणसामान्यक्रियासामान्योपसंहारे ब्रह्मोपासनाभेदात्फलसाम्यम् । चकारात्कचिदभिव्यक्तत्रिविक्रमत्वाद्यनुपसंहाराद्वैषम्यं च । न च तदुपसंहारोऽप्यस्तु । तस्या अयोग्यत्वात् ॥ २० ॥

ननु त्रिविक्रमादीनामनित्यत्वान्न ब्रह्मणो नित्यं तदुपसंहारो युक्त इति शङ्कां निरस्यति—

**ॐ संबन्धादेवमन्यत्रापि ॐ ॥ ३ । ३ । २१ ॥**

नित्यपरमात्मनि तादात्म्यसंबन्धाद्यथाऽऽनन्दादयो नित्यमुपास्या एवं त्रिविक्रमादयोऽपि ब्रह्मणोपास्यास्तदतिरिक्तान्प्रति हि त्रिविक्रमादयः कदाचिदेवाभिव्यक्ताः । तं प्रति तु सदैवेति भावः ॥ २१ ॥

**ॐ न वा विशेषात् ॐ ॥ ३ । ३ । २२ ॥**

अत्राऽऽत्मपदोक्तगुणोपासनस्य सर्वैः कर्तव्यतोच्यते । आत्मपदोक्ता गुणाः सर्वैरुपास्या न वेति चिन्तायाम् । नोपास्याः । तत्पदस्य सर्वगुणाभिधायकत्वात्तेषां ब्रह्मातिरिक्तायोग्यत्वात् । न च यथाधिकारं सर्वान्प्रति सर्वे गुणा उच्यन्त इति । एवं प्रत्येतावन्त एवोच्यन्त इति नियामकाभावादनुपासनप्रसङ्ग इति प्राप्ते । न वाऽऽत्मपदेन सर्वगुणग्रहणं सर्वान्प्रति । अधिकारिविशेषात् । आत्मशब्देन यावन्तो गुणा येन ज्ञायन्ते तावन्त एव तेनोपास्या इति भावः ॥ २२ ॥

युक्तिसिद्ध्यर्थं श्रुत्याऽपि समर्थयति—

**ॐ दर्शयति च ॐ ॥ ३ । ३ । २३ ॥**

सर्वान्गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैवेति श्रुतेः ॥ २३ ॥

**ॐ संभृतिद्युव्याप्त्यपि चातः ॐ ॥ ३ । ३ । २४ ॥**

अत्र सर्वेषां संभृत्यादिगुणोपासनं निवार्यते । द्यावापृथिवीं बिभर्ति । एष हि सर्वेषु लोकेषु भातीत्याद्युक्तसंभृतिद्युव्याप्ती सर्वैरुपास्ये न वेति चिन्तायाम् । उपास्ये एव । मोक्षे स्वाधमभरणाप्रकाशव्याप्त्यादेः सर्वापेक्षत्वादिति प्राप्ते । अतो योग्यताविशेषादेव संभृतिद्युव्याप्ती अपि देवादीनामेवोपसंहर्तव्ये । तेषामेव तत्र योग्यत्वात् । यच्च प्रकाशाद्यपेक्षितं

तत्तु भगवद्रूपप्रतीतिं विना भूतप्रकाशादिनैव लभ्यमतः सर्वैरुक्तानन्दादयश्चत्वारः पूर्वोपास्या न संभृत्यादय इति सिद्धम् ॥ २४ ॥

ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ॥ ३ । ३ । २५ ॥

अत्र पुनरपि सर्वतो गुणोपसंहारः समर्थ्यते । सर्वविद्योक्तगुणोपसंहारः कर्तव्यो न वेति चिन्तायाम् । न कर्तव्यः । बहुगुणोपासनयोग्यानां बहुगुणाभिधायिकयैकविद्ययैवोपासनसंभवादिति प्राप्ते । कर्तव्य एव सर्वत उपसंहारः । न च तावन्तो गुणा एव चोक्ताः । सर्वविद्योत्तमपुरुषसूक्तविद्यायामपि केषांचिद्गुणानामनाम्नानेन सर्वगुणाम्नानं हि न क्वाप्यस्ति ॥ २५ ॥

ॐ वेधाद्यर्थभेदात् ॐ ॥ ३ । ३ । २६ ॥

अत्र भेदनादिगुणानां सर्वोपास्यत्वं निरस्यते । अग्ने त्वचं यातुधानस्य भिन्धि । तं प्रत्यञ्चमर्चिषा विध्य मर्मन् । परो शृणीहि तमसा यातुधानेत्याद्युक्तभेदनादयः । सर्वोपास्या न वेति चिन्तायाम् । सर्वोपास्यास्ते । दुष्टजननिग्रहस्य सर्वापेक्षितत्वात् । आततायिनमायान्तं हन्यादेवाविचारयन्निति स्मृतेरिति प्राप्ते । न ते सर्वोपास्याः । पत्यादीनामुपासनस्य यत्फलं ततो देवाद्युपासनफलस्य हिंसात्मकस्य भिन्नत्वात् । पत्यादीनां तत्रानधिकारात् ॥ २६ ॥

ॐ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ ३ । ३ । २७ ॥

अत्रेशोपासनस्य मुक्तावप्यनिवृत्तिः समर्थ्यते । मुक्तेनोपासनं कर्तव्यं न वेति चिन्तायाम् । न कर्तव्यमेव । मुक्ते प्रत्युपासनविधेः प्रापणीयफलस्य चाभावादिति प्राप्ते । न विधिनिबन्धनं मुक्तावुपासनं सर्वोपासनविधीनां मोक्षवाक्यशेषत्वात् । किंतु स्वेच्छयैव तदुपासनम् । यथा नियतस्वाध्यायानन्तरं स्वेच्छया कदाचित्कुशाच्छन्दस्तुत्युपगानं क्रियते न तु नियतस्वाध्यायकाले च नियमेन तथाऽविद्यानाशेऽपि मुक्तैः स्वेच्छयोपासनमपि क्रियते न तु विध्यधीनतया । ब्रह्मविदाप्नोति परम् । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादिनोपासनविधीनां मोक्षविधिशेषत्वोक्तेरिति भावः । आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः । इति सुसुखं कर्तव्यमिति स्मृतेः । अव्ययसाध्यं निष्पाद्य स्वयमुपासनं न नश्यतीत्यर्थात् ॥ २७ ॥

ननूपासनाविधीनां मोक्षार्थत्वमनिष्टपरिहारार्थत्वं च किं न स्यादिति शङ्कां निरस्यति—

**ॐ सांपराये तर्तव्याभावात्तथा ह्यन्ये ॐ ॥ ३ । ३ । २८ ॥**

मुक्तस्य स्वेच्छयैवोपासनं न त्वनिष्टहानाय । तीर्णो हि तदा सर्वाञ्शोकान् हृदयस्य भवतीति ह्यन्ये पठन्ति। मुक्तानां कर्तव्याभावाच्च ॥२८॥

**ॐ छन्दत उभयाविरोधात् ॐ ॥ ३ । ३ । २९ ॥**

अत्र मुक्तानां भगवत्कर्मणि नियमाभावः समर्थ्यते । मुक्ता उपासनवन्नियमेन कर्म कुर्वन्ति न वेति चिन्तायाम् । नियमेन कुर्वन्त्येव। कर्मणोऽपि भगवत्पूजारूपत्वात्तेषां सामर्थ्यसत्त्वाच्चेति प्राप्ते । स्वेच्छया कुर्वन्ति न वा बन्धप्रत्यवाययोरभावेनोभयथाऽप्यविरोधात् ॥ २९ ॥

ननु प्रत्यवायाद्यभाव एव कुत इति शङ्कां निरस्यति—

**ॐ गतेरर्थवत्त्वमुभयथा हि विरोधः ॐ ॥ ३ । ३ । ३० ॥**

उभयथा बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वं पुरुषार्थत्वम् । अन्यथा मोक्षत्वमेव न स्यादिति ॥ ३० ॥

ननु विध्याद्यभावो न कर्माभावनिश्चायकः । ईशस्य विध्याद्यभावेऽपि कर्मदर्शनेन व्यभिचारादिति शङ्कां निरस्यति—

**ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ॥ ३ । ३ । ३१ ॥**

कदाचिन्मुक्ताः कर्म कुर्वन्ति न वेत्ययं प्रकार उपपन्नः । कर्मफलस्य मोक्षस्य प्राप्तत्वात् । फलस्य स्वप्राप्त्यनन्तरं साधननियमानिवर्तकस्वरूपत्वात् । अतो मुक्तानां कर्मनियमाभावात्संसार उपासनाधिक्यं कर्तव्यमिति सिद्धम् ॥ ३१ ॥

**ॐ अनियमः सर्वासामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥३।३।३२॥**

अत्र ज्ञानसाधनोपास्तिमतामुत्पन्नज्ञानानां मोक्षानियमः समर्थ्यते । अन्यथा निःशङ्का प्रवृत्तिर्न स्यात् । मोक्षो ज्ञानिभिर्नियमेन प्राप्यते न वेति चिन्तायाम् । न नियमेन प्राप्यते । ज्ञानिनां केषांचिदयोग्यत्वात् । यथोपासकाः केषांचित्सर्वगुणोपसंहारायोग्यत्वमिति प्राप्ते । यथा केषांचित्सर्वगुणोपसंहारः केषांचिन्नेत्युपासनेऽनियमस्तथा प्राप्तज्ञानानां केषांचिन्मोक्षः केषांचिन्नेति नियमो नास्ति । सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैरिति सर्वगुणोपसंहारे केषांचिन्निषेधवत्प्रकृते तदभावात् । ब्रह्मविदाप्नोति परम् । ब्रह्म-

विद्ब्रह्मैव भवति । यो वेद निहितं गुहायाम् । सोऽश्नुते सर्वान्कामान् सह ब्रह्मणेत्यादिश्रुतेः । विप्रतिपन्ना ज्ञानिनो नियमेन मुक्तिभाजो ज्ञानित्वात्संप्रतिपन्नवदित्याद्यनुमानाच्च ॥ ३२ ॥

**ॐ यावदधिकारमवस्थितिरधिकारिकाणाम् ॐ ॥ ३ । ३ । ३३ ॥**

अत्रोपासनाधिकारनियमः समर्थ्यते । उपासनाधिकारनियमोऽस्ति न वेति चिन्तायाम् । नास्त्येव । मानाभावात् । मोक्षे तारतम्ये द्वेषादिप्रसङ्गादिति प्राप्ते । अस्त्येवोपासने नियमः । मोक्षे तारतम्यानुरोधात् । न च तदेव कुतः । मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणामृषिभ्यो देवानां देवेभ्य इन्द्रस्येन्द्रादुद्रस्य रुद्राद्ब्रह्मण एष ह्येवाऽऽनन्द इति श्रुतेः । न च मुक्तौ द्वेषाद्यापत्तिः । सर्वेषां पूर्णत्वात् । यथा स्वल्पो महान्वा घटकरकादिर्यावत्स्वपरिमाणं जलेन पूरितः पूर्ण इति न जलान्तरापेक्षा तथा मुक्तानां स्वोपासनानुसारेणाऽऽविर्भूतानन्देन यावत्स्वरूपं पूर्णत्वाद् द्वेषहेतुप्राकृतगुणानां सत्त्वादीनां लिङ्गशरीरादेश्च निवृत्तत्वान्न द्वेषादिसंभवः । ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । विशन्ति विप्रप्रवरा सांख्या भागवतैः सहेत्यादिमोक्षधर्मोक्तेः ॥ ३३ ॥

उक्तमेवार्थं युक्त्यन्तरेण द्रढयति—

**ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपवसदवत्तदुक्तम् ॐ ॥ ३ । ३ । ३४ ॥**

स्वरूपतः स्वभावतश्च न क्षरतीत्यक्षरः परमात्मा । तत्र धीर्येषां दोषाभावेन ब्रह्मसाम्यात्परस्परं तारतम्यासत्त्वाच्चाविरोधः । स्वोत्तमादावौपवसदवत्साच्छिष्यवन्न द्वेषादिः । अयं भावः । यथा कीटो भृङ्गभावनया भृङ्गतां तारतम्येन प्राप्तः कीटसाधारणधर्मान्सर्वान्निःशेषं जहाति तथा समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय इत्याद्युक्तनिर्दुष्टासंसारिपरे प्राप्तसाम्यमापन्नो जीवः संसारधर्मान्द्वेषादीन्यथापूर्वं गुरूपासनकालेऽहासीत्तथा मुक्तौ निःशेषं जहाति । न हि द्वेषादियुक्तस्य मोक्षादावधिकारोऽस्तीति । निरञ्जनः परमं साम्यमुपैति । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति साम्यमुक्तम् ॥ ३४ ॥

**ॐ इयदामननात् ॐ ॥ ३ । ३ । ३५ ॥**

अत्रोपासकानां प्राणावधित्वं समर्थ्यते । अन्यथा ब्रह्मण एव सर्वगुणोपासनयोग्यता न स्यात् । छन्दोगोक्ताधिकारिणः प्राणावसाना न वेति चिन्तायाम् । न भवन्ति प्राणावसानाः । नामादीनां स्वोत्तरत्वदर्शनेन प्राणः स्वोत्तमाधिकारियुक्तोऽधिकारित्वान्नामादिवदिति प्राणेऽपि तथा साधनादिति न हिरण्यगर्भ एव सर्वगुणोपासक इति प्राप्ते । नामाधाराख्यप्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणाद्भूयः किंचिदुक्तम् । तथाऽपि न पूर्ववत्स्वोत्तरत्वम् । प्राणो वाव सर्वेभ्यो भूयान् । नहि प्राणाद्भूयानिति । उक्तेयदामननात् ॥ ३५ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ॥ ३।३।३६ ॥**

भूतसमूहे नामादावेकस्मादेकोऽधिको दृष्ट इति तद्दृष्टान्तेनान्तरा विना हरिं प्राणादप्यधिकं साध्यमिति चेन्न । प्राणो वाव सर्वेभ्यो भूयानिति प्राणादुत्तमाभावस्योक्तत्वेन बाधात् ॥ ३६ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ ॥३ । ३ । ३७ ॥**

प्राणस्य सर्वोत्तमत्वे सर्वोत्तमद्वयासंभवेन परेशभेदानुपपत्तिरिति चेन्न । श्रुत्युपदिष्टवदुपपत्तेः । सर्वेभ्यः प्राणस्य तस्माच्च विष्णोरुत्तमत्वं छन्दोगश्रुतावुक्तमिति हरिव्यतिरिक्तादेव सर्वस्मात्प्राणस्योत्तमत्वमिति भावः ॥३७॥

**ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ ३ । ३ । ३८ ॥**

अत्रोपासनाधिकारिणः प्राणात्परेशस्योत्तमत्वमुच्यते । हरिः प्राणादुत्तमो न वेति प्राणस्य हिरण्यगर्भत्वाद्विप्रतिपत्तिः । न हरेः प्राणादुत्तमत्वम् । अस्ति भगवः प्राणाद्भूय इति प्राणाद्वाव भूयोऽस्तीति प्रश्नप्रतिवचनाभावात् । प्राणादुत्तमाभावान्न हरेरुपासनं सर्वैः कार्यमिति प्राप्ते । प्रश्नाद्यध्याहारेण—एष तु वा अतिवदति यः सत्येनातिवदतीति सत्याख्यवस्तु वदतोऽप्यतिवादित्वमुच्यते । प्राणातिवादिनः सकाशात्सत्यातिवादो तुशब्देन विशिष्यते । अन्योऽयमन्यः पूर्वोऽतिवादीतरवद्यथा वाग्वाव नाम्नो भूयसीत्यादिविशेषणं प्रकरणभेदकं तथा तुशब्दोऽपीत्यर्थः ॥ ३८ ॥

**ॐ सैव हि सत्यादयः ॐ ॥ ३ । ३ । ३९ ॥**

अत्र प्राणादुत्तमत्वं विष्णोरेव समर्थ्यते । प्राणाद्धरिरेवोत्तमोऽन्योऽपि वेति चिन्तायाम् । न हरिरेव सत्यपदोक्तः प्राणादुत्तमः । कृतिसुखभूमाहंकारात्मनामप्युक्तत्वादिति प्राप्ते । सत्यादयोऽहंकारान्ताः सेशाख्या देवतैव । सत्यं भगवो विजिज्ञास इति सत्याख्यस्य भगवतो गुणजिज्ञासायां तद्गुणत्वेन तद्भिन्नाभूतज्ञानस्योक्तत्वात् । तथोत्तरत्रापि गुणजिज्ञासायां विना भूतसत्यादीनामुक्तत्वेन रक्तो घट इत्यादिवदभेदासिद्ध्या गुणिनो हरेरेव सर्वोत्तमत्वसिद्धिः ॥ ३९ ॥

**ॐ कामादितरत्र तत्र चाऽऽयतनादिभ्यः ॐ ॥ ३ । ३ । ४० ॥**

अत्र हरिदर्शनसाधनोपासने श्रियोऽनधिकारः समर्थ्यते । अन्यथाऽधिकारिणां प्राणावसानत्वासिद्धिः । श्रीरधिकारिण्यस्ति न वेति चिन्तायाम् । भवत्येव । साधुत्वे । सति संसारित्वात् । न च तस्या न संसारित्वम् । सीतारुक्मिण्यादिजन्मादिदर्शनादिति प्राप्ते । स्वेच्छातो मूलस्वरूपादायतनादितरत्रावतारं करोतीति तस्याः संसारित्वाभावान्नाधिकारः । ईशेच्छानुसारेण स्वेच्छयाऽवतारान् करोत्यतो जन्मादिकं न संसारहेतुरिति भावः । कुत एतत् । नमस्ये सर्वलोकानां जननीमब्जसंभवाम् । श्रियमुन्निद्रपद्माक्षीं कृष्णवक्षःस्थलस्थिताम् । त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी । संध्या रात्रिः प्रभा भूतिः श्रद्धा मेधा सरस्वती । यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च त्वं देवि विमुक्तिफलदायिनी । आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च । सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितमिति वैष्णवोक्तेः । यथा द्वा सुपर्णेत्यादौ बद्धमोचकत्वाभिप्रायेण द्वावेवोच्येते न तु जडाभावात्तथा विवक्षयैव नामादीनामीशस्य वोक्तिः प्रकृतेरनुक्तिर्न तु प्रकृतेरभावात् ॥ ४० ॥

नन्वेवं–यदर्चितं ब्रह्मशिवादिभिः सुरैः श्रिया च देव्या मुनिभिश्च सात्वतैरित्यादिमानसिद्धोपासनं तु तस्याः कथमिति शङ्कां निरस्यति–

**ॐ आदरादलोपः ॐ ॥ ३ । ३ । ४१ ॥**

अबद्धत्वेऽपि भक्तिविशेषादेव तस्या उपास्तेरलोपः । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिरित्याद्यनुसारादहेतुकभक्त्युपासनयोः संभवात् ॥४१॥

ननु तस्या नित्यमुक्तेर्मानाभाव इति शङ्कां निरस्यति–

**ॐ उपस्थितेऽतस्तद्वचनात् ॐ ॥ ३ । ३ । ४२ ॥**

का त्वन्या त्वामृते देवि सर्वयन्तृ(न्त्र)मयं वपुः । अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः । प्रकृतिः पुरुषश्चैव विद्ध्यनादी उभावपीति हरावनादिसंबन्धवचनात्तस्या नित्यमुक्तत्वम् । तस्या मुक्तिप्रतिपादकमानाभावाच्च॥४२॥

**ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॐ ॥ ३ । ३ । ४३ ॥**

अत्र समस्तोपासनस्य कर्तव्यता समर्थ्यते । श्रवणमननध्यानादिरूपं समस्तोपासनं कर्तव्यं न वेति चिन्तायाम् । न कर्तव्यं समस्तं किंतु व्यस्तमेव । दर्शनार्थं हि तत् । तच्च श्रवणादिनैव किं ध्यानादिति प्राप्ते । कर्तव्यमेव समस्तोपासनम् । श्रवणादिमात्रेण ब्रह्मदर्शनाभावादिति सामान्यतस्तत्त्वज्ञानं हि श्रवणफलम् । अयमेव वेदार्थ इति निर्धारणं मननफलम् । तदुभयं च ब्रह्मापरोक्षदृष्टेः पृथगेवातो ध्यानमपि तदपरोक्षार्थं कर्तव्यमिति भावः । ननु ध्यानादेव दर्शनसंभवे श्रवणादिः किमर्थमिति चेद्दर्शनस्याज्ञानसंशयविपर्यया: प्रतिबन्धकाः । तत्र श्रवणं ज्ञानमुत्पादयदज्ञानं निवर्तयति । मननं च वेदार्थनिर्णयं कुर्वत्संशयविपर्ययौ निवर्तयति । अतः प्रतिबन्धकनिवर्तकत्वेन समस्तोपासनं कर्तव्यम् ॥ ४३ ॥

**ॐ प्रदानवदेव हि तदुक्तम् ॐ ॥ ३ । ३ । ४४ ॥**

अत्रोपासनेतिकर्तव्यतोच्यते । श्रवणादि यथाकथंचिदनुष्ठितं ज्ञानसाधनं गुरुप्रसादपूर्वकं वेति यथाकथंचिदनुष्ठितं साधनम् । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इतिश्रवणादिमात्रश्रवणादिति प्राप्ते । न श्रवणादिमात्रेण ब्रह्मदृष्टिः । यथा हि प्रसन्नेन गुरुणा ब्रह्मज्ञानं दत्तं तथैव भवति । आचार्यवान्पुरुषो वेदेत्युक्तम् । यद्यपि विधौ श्रवणादिमात्रमुक्तं तथाऽपि—यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । आचार्यं मां विजानीयान्नावमन्येत कर्हिचिदित्याद्यनुसारेण गुरुप्रसादादिरितिकर्तव्यतात्वेन गृह्यते ॥ ४४ ॥

**ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ ३ । ३ । ४५ ॥**

अत्र गुरुप्रसादरूपेतिकर्तव्यताया बलीयस्त्वमुच्यते । गुरुप्रसादो बलीयाञ्शिष्यप्रयत्नो वेति चिन्तायाम् । शिष्यप्रयत्नः श्रवणादिरेव बलीयान् । तस्येतिकर्तव्यतात्वात् । न गुरुप्रसादः । तस्यानित्यकर्तव्यतात्वादिति प्राप्ते । ऋषभादिभ्यो ब्रह्मविद्यां श्रुतवताऽपि सत्यकामेन भगवंस्त्वं मे कामं ब्रूयाः ।

श्रुतं ह्येवमेव भगवद्दृशेभ्यः । आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयतीति गुरुः प्रार्थ्यते । श्रवणादिमात्रस्य बलवत्त्वे तदयुक्तं स्यात् । तथोपकोसलेनाग्निभ्यः श्रुतविद्येनापि गुरुरर्थ्यते । गुरुणा च सत्यकामेन तं प्रत्युच्यत इत्यादिलिङ्गभूयस्त्वादस्य प्राबल्यम् ॥ ४५ ॥

ननु तर्हि किं श्रवणादिनेति चेच्छ्रोतव्यो मन्तव्य इत्यादिना तदप्युक्तम्—

**ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॐ ॥ ३ । ३ । ४६ ॥**

अत्रोपासनेतिकर्तव्यता विचार्यते । पूर्वप्राप्त एव गुरुस्तं विहायान्योऽपि वेति चिन्तायाम् । पूर्वप्राप्त एव । गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेदिति प्राप्ते । पूर्वापेक्षयाऽधिकः समो वा स्वयमेव समग्रानुग्रहकर्ता चेदन्यस्तर्ह्याश्रवणीय एव । समग्रानुग्रहकर्तोत्तमः । पूर्वानुज्ञां विनाऽपि ग्राह्यः । समग्रानुग्रहाकर्तोत्तमोऽपि त्याज्यः । समस्य च समग्रानुग्रहकर्तुः स्वीकारे विकल्पः । पूर्वानुज्ञां विनाऽपि ग्राह्यः स्वीकार्यो न वेति । यथा श्रीशुकस्य श्रीव्यासानुज्ञया जनकादपि ब्रह्मविद्योपादानम् । उक्तं च भगवता स्वशिष्यार्जुनं प्रति—उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति । श्रुतस्य दार्ढ्याय पूर्वानुज्ञया गुर्वन्तरोपादानं पूर्वस्मादेव दार्ढ्ये तदनुज्ञानमेव च नोपादेयमिति भावः । दोषश्चाधमस्वीकारविषयो निरर्थकस्वीकारविषयश्च । कुत एतत् । प्रकरणात् । समग्रानुग्रहकारणात् । विकल्पे दृष्टान्तः क्रियामानसवत् । क्रियासहितं मानसं मानसध्यानादिक्रिया प्राणायामादिरूपा । यथा समानगुणावयवविग्रहादिध्याने विकल्पस्तद्वत् । गुण औदार्यगाम्भीर्यादिः । अवयवो भुजादिः । विग्रहो रामकृष्णादिः । समग्रध्यानासामर्थ्ये विकल्पः । सामर्थ्ये तु प्रत्येकावयवादिध्यानं त्यक्त्वा समग्रं चिन्तयेदिति भावः । तदुक्तं भगवता—तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् । नान्यानि चिन्तयेद्भूयः सुस्मितं भावयन्मुखम् । तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् । तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेदिति । लब्धपदं स्थिरीभूतं व्योम्नि व्यापके सर्वगुणादिविशिष्टे । तच्च प्रत्येकाचिन्तनं पूर्वचिन्तितं प्रत्येकं न चिन्तयेत् । किंतु युगपत्समग्रं चिन्तयेदिति भावः ॥ ४६ ॥

हेत्वन्तरमाह—

**ॐ अतिदेशाच्च ॐ ॥ ३ । ३ । ४७ ॥**

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति गुर्वन्तराभ्युपगमे निर्देशात् ॥ ४७ ॥

**ॐ विद्यैव तु निर्धारणात् ॐ ॥ ३ । ३ । ४८ ॥**

अत्रोपासनमेव समर्थ्यते । तत्कर्तव्यं न वेति चिन्तायाम् । न कर्तव्यम् । व्यर्थत्वात् । न च ज्ञानमेव प्रयोजनम् । ज्ञानस्यापि व्यर्थत्वात् । न च मोक्षः प्रयोजनम् । तरति शोकमात्मविदित्यादिना ज्ञानस्येव कर्मणैव हि संसिद्धिमास्थिता जनकादय इति कर्मणोऽपि मोक्षहेतुत्वश्रवणेन संदेहादिति प्राप्ते । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति व्युत्क्रमेण विदित्वैवेति निर्धारणात् । विद्यैव मोक्षे हेतुः । न चैवकारव्युत्क्रमे किं मानम् । नान्य इत्युत्तरानुवाद एव ॥ ४८ ॥

ननु विद्या श्रवणादेवास्तु किमुपासनेनेति शङ्कां निरस्यति—

**ॐ दर्शनाच्च ॐ ॥ ३ । ३ । ४९ ॥**

न केवलं विद्ययैव मोक्षो येन ध्यानाभाव आपद्येत । किंतु दृष्ट्वैव तं मुच्यत इति भगवदपरोक्षज्ञानात् । तच्च ध्यानादेव ॥ ४९ ॥

**ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥ ३ । ३ । ५० ॥**

उपासनासाध्यज्ञानस्य मोक्षहेतुत्वमुच्यते । मोक्षो ज्ञानसाध्यो न वेति चिन्तायाम् । न ज्ञानसाध्यः । कर्मणैव हीति स्मृतेः । न च श्रुतिर्बलीयसी । एतत्स्मृतेर्भगवद्वाक्यत्वादिति प्राप्ते । ज्ञानादेव मोक्षः । साधारणश्रुतेर्बलीयस्त्वात् । इन्द्रोऽश्वमेधाञ्छतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाच प्रसन्नः । न कर्मभिर्न धनैर्नैव चान्यैः पश्येत्सुखं तेन तत्त्वं ब्रवीहीति लिङ्गाच्च । नास्त्यकृतः कृतेनेत्युपपत्तेः । कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन इति स्मृतेः । अतः कर्मणैवेत्यत्रैवकारो योगव्यवच्छेदपरः ॥ ५० ॥

**ॐ अनुबन्धादिभ्यः ॐ ॥ ३ । ३ । ५१ ॥**

अत्रोपासनस्य भक्तिपूर्वकत्वमुच्यते । ज्ञानं भक्तिसापेक्षं न वेति चिन्तायाम् । न ज्ञानं भक्तिसापेक्षम् । उपासनादेव तत्सिद्धेः । न चोपासनं भक्तिं विनेति वाच्यम् । द्वेषादिनाऽपि ध्यानसंभवादिति प्राप्ते । केवलं श्रवणादिना प्रबलेनापि भगवद्दर्शनं किंतु श्रीहरिगुरुभक्तिशमादिभ्यः । भक्तिं विना गुरुप्रसादाद्यसिद्धेः । द्वेषाहितध्यानस्यानर्थहेतुताया—मामात्मपरदेहेषु प्रद्विष-

न्तोऽभ्यसूयकाः । तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमित्यादिस्मृत्यादिसिद्धत्वात् । अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृत इत्यभिधानात् ॥ ५१ ॥

ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ ३ । ३ । ५२ ॥

अत्रोपासनजन्यज्ञाने विशेषः समर्थ्यते । तज्ज्ञानं सर्वेषामेकाकारेणोतानेकाकारमिति चिन्तायाम् । दृष्ट्वैव तं मुच्यते नापरेणेति सर्वेषामविशेषेण मोक्षश्रवणान्न विशेष इति प्राप्ते । अधिकाराणां नानाविधोपासनमिव तत्साध्यज्ञानमपि नानाविधम् । प्रज्ञान्तरं प्रज्ञाविशेषः । अविच्छिन्नपरोक्षज्ञानसंततिर्हि ध्यानम् । दृष्टि रपरोक्षज्ञानम् । अन्तर्दृष्टयो बहिर्दृष्टयः सर्वदृष्टय इति । देवा वाव सर्वदृष्टयस्तेषु चोत्तरमाब्रह्मणोऽन्येषु यथायोगं यथा ह्याचार्या आचक्षत इति श्रुतौ दृष्टिभेद उक्तः ॥ ५२ ॥

ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥ ३ । ३ । ५३ ॥

अत्रोपासनसाध्यज्ञानस्य मोक्षसाधनतोच्यते । यत्किंचिद्भगवज्ज्ञानं मोचकमुत स्वबिम्बभूतस्य नियन्तृत्वाद्यनन्तगुणविशिष्टत्वेन ज्ञानमिति चिन्तायाम् । रूपाणां साम्यात्सामान्यतो यत्किंचिद्रूपज्ञाने हेतुरिति प्राप्ते । न सामान्यज्ञानान्मोक्षः । युद्धादौ दैत्यानामपि तत्सत्त्वात् । मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति विशेषज्ञानस्यैवमेवमुक्तम् । मोक्षे मृत्युविशेष एव हेतुर्न मृत्युसामान्यम् । हि प्रसिद्धम् । तथा ज्ञानविशेषो हेतुर्न सामान्यम् । सामान्यज्ञानाल्लोकप्राप्तिरेव । न च तावन्मात्रमेव मोक्षः । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । ब्रह्मविद्ब्रह्मैव भवतीत्याद्यनुरोधादाविर्भूतस्वरूपतया भगवत्प्राप्तिरेव हि मोक्षः । स्वबिम्बपदेन हृदयपुण्डरीकस्थमङ्गुष्ठमात्रं भगवद्रूपमुच्यते । मनुष्यत्वयोग्यानां तदपरोक्षादेव शास्त्रस्य मनुष्याधिकारत्वादिति । तथोक्तम् । देवादीनां तु व्यापकत्वादिज्ञानान्मोक्षः । परेण नाकं निहितं गुहायां विभ्राजते तद्यतयो विशन्ति । वेदान्तविज्ञानसुनिश्चितार्थाः । दहं विपापं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमिति तैत्तिरीयोक्तेः ॥ ५३ ॥

**ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ३ । ३ । ५४ ॥**

अत्र कृपासहितैव भक्तिर्ज्ञानसाधनमित्युच्यते । ज्ञानं भक्तेः सामर्थ्येनोत परमात्मन इति चिन्तायाम् । भक्त्यैव भवति । हरिप्रसादेन भक्तेरेवैतदिति श्रुतौ भक्तेरेव स्वातन्त्र्यमिति प्राप्ते । न भक्तेः स्वातन्त्र्यम् । परेण परमात्मना भक्त्याऽपरोक्षतां गतेन मोक्षः । भक्तिप्राधान्यबोधकशब्दस्य ताद्विध्यं तथाबोधकत्वं भूयस्त्वाद्भक्त्यैव प्रसादितो हरिर्मोचकः । सेवानुबन्धः प्रसादो मुख्यसाधनम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते । तेषामहं समुद्धर्ता मृत्युसंसारसागरादिति स्वस्यैव भगवता मोचकत्वोक्तेः । अतो भगवद्दर्शनस्य पुरुषशक्तिसाध्यत्वाभावात्तस्याव्यक्तासिद्धिः ॥ ५४ ॥

**ॐ एक आत्मनः शरीरे भावात् ॐ ॥ ३ । ३ । ५५ ॥**

अत्रोपासनस्य योग्यतापेक्षा समर्थ्यते । अन्यथोपासाव्यवस्था स्यात् । उपासनं योग्यतापेक्षं न वेति चिन्तायाम् । न तदपेक्षा योग्यता । स्याच्चेदनाद्या स्यात् । न सा युक्ता । इन्द्रादिजीवांशानां योग्यताया अनादित्वासंभवात् । अंशांशिनोः कुतो भेदः । आत्मनः कर्मणा निर्मिते शरीरेंऽशस्य वर्तमानत्वात् । भेदे कृतहानाकृताभ्यागमप्रसङ्गात् ॥ ५५ ॥

ननु ज्ञानादिभेदेनांशांशिनोर्भेद एवातो नांशस्योत्पत्तिमतो योग्यता युक्तेत्याशङ्कां निरस्यति—

**ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ॥ ३ । ३ । ५६ ॥**

अंशिकर्मनिर्मितशरीरावयवेषु भावो यः संबन्धः । तत्कारितो व्यतिरेको भेदो न तु हस्तपादसुखदुःखानुभवयोरिवांशांशिनोर्भेदः । अंशगतं ज्ञानादिरंशिनाऽनुसंधीयते । अंशिगतस्य सर्वस्य ज्ञानादेरनुसंधानं तु देहासंबन्धान्नांशेषु प्रत्येकं भवति । मुक्तानां तु भवत्येवातोऽस्त्येवोपासनादावनादियोग्यतापेक्षेति सिद्धम् ॥ ५६ ॥

**ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ ३ । ३ । ५७ ॥**

अत्र ब्रह्मोपासनस्य योग्याङ्गदेवतोपासनयुक्तत्वेन कर्तव्यत्वं समर्थ्यते । उपासनमन्यदेवतोपासनयुक्तं कर्तव्यं केवलं वेति चिन्तायाम् । केवलमेव कर्तव्यम् । तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथेति श्रुतेरन्यस्योपास्यत्वे हरेः सर्वोत्तमत्वं न सिध्येदिति प्राप्ते । भगवतो यद्यदङ्गाद्या या देवता-

त्मना सा तस्मिन्नङ्गेऽवबद्धा स्थितोपास्या । न च श्रुतिविरोधः । श्रुतेः स्वतन्त्रोपासननिषेधपरत्वात् । ननु चक्षुःस्थसूर्यादिगुणानां भुजस्थशक्रादावुपसंहारे सूर्येन्द्रादिदेवतानां परस्परं तारतम्यं न स्यात् । सिद्धान्त उपासनाया आरोपत्वाभावादिति चेन्न । शाखासु हि प्रतिवेदम् । हि यतः शाखासु प्रतिवेदं ये धर्मा यस्यां देवतायां विहितास्तद्विशिष्टा सैव ब्रह्माङ्गे स्थितोपास्या । नान्यस्याम् । उक्तैर्विशिष्टान्येति तारतम्यसिद्धेः ॥ ५७ ॥

अनुपसंहारमुक्त्वोपसंहारमप्याह—

**ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥ ३ । ३ । ५८ ॥**

यथाऽग्न्याद्यधमदेवतामन्त्रविद्यादिकं ब्रह्माद्युत्तमदेवताविषयत्वेनाधीयतेऽध्येतृभिस्तदयिगुणानामुत्तमेषूपसंहारे न विरोधः । उत्तमानां तद्गुणित्वाम् ॥५८॥

**ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥३।३।५९॥**

अत्र भूमगुणोपासनस्य सर्वसाधारण्यमुच्यते । भूमगुणः सर्वैरुपास्यो न वेति चिन्तायाम् । नोपास्यः । गुणो हि यस्यापेक्षितः स एव तेनोपास्यः । आनन्दादिकमेव सर्वेषामपेक्षितम् । न निरतिशयाख्यं भूमत्वमिति प्राप्ते । उपास्य एव सः । सर्वगुणेषु तस्य ज्यायस्त्वात् । यथा दीक्षाप्राप(य)णीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तनाज्ज्यायस्त्वम् । ततश्च सर्वैः कर्तव्यत्वम् । तथा भूमत्वस्य सर्वगुणानुगतत्वात्तस्यैव सर्वगुणोपासनादिष्टसिद्धेः । सुखादीनां भूमत्वापरपर्यायपूर्णत्वेनैव प्राप्यत्वादुपास्यत्वाच्च ॥ ५९ ॥

भूमैव सुखं नाल्पे सुखमस्तीति ह्यानन्दादेर्भूमत्वाविनाभावं दर्शयति—

**ॐ नानाशब्दादिभेदात् ॐ ॥ ३ । ३ । ६० ॥**

अत्राधिकारिणां विशेषः समर्थ्यते । भूमोपासनं तारतम्येनैकप्रकारेणैव वेति चिन्तायाम् । सर्वेषामविशेषेणैव भूमत्वं प्रतीयते । न हि केषांचित्पूर्णानन्दः केषांचित्किंचिदानन्दः प्रतीयत इत्युक्तम् । उपासनस्य मिथ्यात्वापत्तेरिति प्राप्ते । भमोपासनं नानाप्रकारेण भवति । शब्दादिभेदात् । शब्दानुमानादीनामधिकार(रि)भेदादनेकधैकैकार्थप्रतीतिजनकत्वादिति भावः । तथा च फलतारम्यमप्युपपद्यते ॥६०॥

**ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ ३ । ३ । ६१ ॥**

बिम्बातिरिक्तनृसिंहाद्युपानस्याकर्तव्यता निरस्यते । अन्यथा तापनीयादिवैय-

र्थ्यापत्तिः । स्वबिम्बातिरिक्तोपासनं कर्तव्यं न वेति चिन्तायाम् । न कर्तव्यमेव । मुमुक्षूणां स्वबिम्बोपासनस्यैव विहितत्वात् । अत्रामुमुक्षूणामनधिकारित्वादिति प्राप्ते । स्वबिम्बातिरिक्तोपासने विकल्प एव न त्वकर्तव्यतैव । तस्य मोक्षार्थोपासनानन्तर्भावित्वेन दुरितादिनिवृत्तिलक्षणमोक्षोपयोगित्वेन चोक्तदोषाभावात् । विकल्पश्च यस्य विशिष्टफलेच्छाऽस्ति तेन कर्तव्यं यस्य नास्ति स्वयोग्योपासनेनैव दुरितादिनिवृत्तेस्तेन कर्तव्यमिति ॥ ६१ ॥

**ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ**
**॥ ३ । ३ । ६२ ॥**

अत्र ज्ञानसाधनोपासनस्यवाऽऽवश्यकत्वमुच्यते । काम्योपासनस्याप्यावश्यकत्वे प्रथमपादानुपपत्तिः । कामोपासनं कर्तव्यं न वेति चिन्तायाम् । कर्तव्यमेव। तत्साध्यार्थादेरपि ज्ञानोपयोगित्वात् । अन्यथा तत्प्रतिपादकवेदस्य कैमर्थ्यापत्तेरिति प्राप्ते । तत्रापि विकल्प एव नतु नियमः । स्वकामानुसारेणामुमुक्षुभिः काम्या गुणा उपसंहृत्योपास्या न तु मुमुक्षुभिः। तेषां कामाख्यस्य हेतोरभावात् ॥ ६२ ॥

**ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ ३ । ३ । ६३ ॥**

अत्राङ्गदेवतोपासनस्य कर्तव्यत्वं समर्थ्यते । भगवदङ्गाश्रितत्वेन तदुपासनं मुमुक्षुणा कर्तव्यं न वेति चिन्तायाम् । न कर्तव्यम् । तत्किं सर्वैः कर्तव्यं देवैरेव वा । नाऽऽद्यः । तादृशोपासनाजन्योत्कृष्टफलं देवानामेवेत्युक्तिव्याघातात् । न द्वितीयः । ब्रह्मा शिरसि ललाटे रुद्र इत्यादितत्प्रकरणेषु देवानामेव तदित्यनुक्तेरित्यधिकार्यभावान्नोपासनमिति प्राप्ते । सूर्यादिदेवानां चक्षोः सूर्योऽजायतेत्यादिना यथा भगवदङ्गाश्रयत्वमुक्तं तथोपासनं कार्यमेव । अन्यथा तदुक्तिवैयर्थ्यापत्तेः ॥ ६३ ॥

यत्र जन्म तत्रैव तेषां स्थितिः । श्रुत्याऽपि तथोपासनं विहितमित्याह—

**ॐ शिष्टेश्च ॐ ॥ ३ । ३ । ६४ ॥**

यस्मिन्यस्मिन्यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैवेति श्रुतेः ॥ ६४ ॥

ननु निरधिकारिकत्वाद्व्यर्थमुपासनमिति शङ्कां निरस्यति—

**ॐ समाहारात् ॐ ॥ ३ । ३ । ६५ ॥**

देवानामेव तथोपसंहारसंभवात्तेषां तत्राधिकारः । तथोपासनस्य परम-स्थानप्राप्तिः फलं तच्च देवानामेवेति ॥ ६५ ॥

हेत्वन्तरमाह—

**ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ ३ । ३ । ६६ ॥**

साधारण्यात्सर्वगुणाः परस्य समाहार्याः । तत्त्वदृशो मुमुक्षोरिति श्रुतेः । सूर्याद्याश्रयचक्षुष्ट्वादीनां भगवच्चिह्नानां सर्वसाधारण्यात्सर्वोपास्यत्वमिति भावः ॥ ६६ ॥

**ॐ न वा तत्सहभावश्रुतेः ॐ ॥ ३ । ३ । ६७ ॥**

अत्रापि देवतोपासनं समर्थ्यते । भगवदङ्गाश्रयत्वेन देवतोपासनं कर्तव्यं न वेति चिन्तायाम् । न कर्तव्यमेव । तथोपासनस्य सर्वशाखास्वनुक्तत्वात् । तथोपासनस्य कर्तव्ये तु ज्योतिष्टोमादिवदुक्तिः स्यादिति प्राप्ते । सर्वशाखासु तथोपासनस्याश्रवणादकर्तव्यत्वं भवत्येव । सर्वैः कर्तव्यतानभ्युपगमात् । न केनाप्यकर्तव्यता क्वचिदुक्ता । अतः क्वचिदुक्तत्वात्सर्वत्रानुक्तत्वाद्देवैरेव तदुपासनं कर्तव्यं नान्यैरिति सिद्धो व्यवस्थितविकल्पः ॥६७॥

अत्र श्रुतिं चाऽऽह—

**ॐ दर्शनाच्च ॐ ॥ ३ । ३ । ६८ ॥**

सत्यो ज्ञानपरानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किंचित्समुपासीत धीरः । सर्वैर्गुणैर्देवगणा उपासत इति श्रुतेः ॥ ६८ ॥

इति श्रीवेदान्तसिद्धान्तमुक्तावल्यां वनमालिविरचितायां सारसंग्रहे ब्रह्मसूत्रे तृतीयाध्यायस्य तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ।

ज्ञानसामर्थ्यमस्मिन्पादे कथ्यते ।

**ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥ ३।४।१ ॥**

अत्र ब्रह्मप्राप्तिसाधनस्य सर्वपुरुषार्थसाधनमिहोच्यते । उपासनजन्यज्ञानं मोक्षसाधनं पुरुषार्थान्तरस्यापि वेति चिन्तायाम् । मोक्षस्यैव । ज्ञानिनामितरफलेष्विच्छाभावात् । परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायात् । प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् । आत्मन्येवाऽऽत्मना तुष्ट इति मानात् । इच्छाभावेऽपि प्राप्तौ पुरुषार्थत्वं न स्यादिति प्राप्ते । यावच्छुभं पुंभि-

स्थ्यते ज्ञानिभिस्तावज्ज्ञानादेव भवति । यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः । नास्य भूत्यै देवा ईशत' इत्यादिशब्दादिति बादरायणो मन्यते । संविभातीच्छति जयते प्राप्नोति । तेषामिच्छाभावश्रुत्यादेर्ज्ञानिनां प्रायेणान्येच्छाभावपरत्वात् । यस्य सौभरिकर्दमादीनामिवेच्छा स्यात्तस्य ज्ञानादेव सर्वं संपद्यत इति भावः ॥ १ ॥

मतान्तरमाह—

**ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ॥३।४।२॥**

अस्तु मोक्षसाधनं[ ज्ञानं ]स्वर्गादिसाधनं तु कर्मैव । न च यं यं लोकमिति पुरुषार्थसाधनत्ववादविरोधः । शेषत्वात्पुरुषार्थसाधनत्ववादोपपत्तेः । तथा च कर्मैव मुख्यं स्वर्गादिहेतुः । स्वर्गसाधनशेषे धनादौ स्वर्गसाधनत्वदर्शनात् । तथाऽत्रोपपत्तेरिति जैमिनिर्मन्यते ॥ २ ॥

ननु ज्ञानमेव साक्षात्सर्वपुरुषार्थसाधनं किं न स्यादिति शङ्कां निरस्यति—

**ॐ आचारदर्शनात् ॐ ॥ ३ । ४ । ३ ॥**

ज्ञानिनां देवानां यज्ञेन यज्ञमयजन्त देवा इति कर्मानुष्ठानदर्शनाज्ज्ञानस्य सर्वपुरुषार्थसाधनत्वे तदयुक्तं स्यात् ॥ ३ ॥

ननु ज्ञानस्य कर्मशेषत्वं कुतोऽत आह—

**ॐ तच्छ्रुतेः ॐ ॥ ३ । ४ । ४ ॥**

यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुतेः । स्वयोग्यतया वीर्यवत्तरमधिकफलसाधनम् ॥ ४ ॥

ननु ज्ञानकर्मणोः समत्वमस्तु । द्वयोः प्राधान्यश्रुतेरिति शङ्कां निरस्यति—

**ॐ समन्वारम्भणात् ॐ ॥ ३ । ४ । ५ ॥**

कर्मैव दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः । भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं फलमिति श्रुतेः ॥ ५ ॥

ननु ज्ञानिनामुन्मत्तवल्लीलयैव कर्म न तु फलायेति शङ्कां निरस्यति—

**ॐ तद्वतो विधानात् ॐ ॥ ३ । ४ । ६ ॥**

ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततमिति श्रुत्या, यज्ञदान--तपः--कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि

मनीषिणामित्यादिस्मृत्या च ज्ञानिनां कर्मविधानाद्विहितस्य फलावश्यंभावात् । फलं परमानन्दाविर्भावाधिक्यरूपम् ॥ ६ ॥

अकरणे प्रत्यवायमप्याह—

**ॐ नियमाच्च ॐ** ॥ ३ । ४ । ७ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर इति श्रुतेः । एवं कर्मकरणत्वेऽपि कर्म न लिप्यते । इतोऽन्यथाकरणे नरे त्वयि ज्ञानिन्यपि पापकर्म [ न ] लिप्यत इत्यर्थः ॥७॥

ननु शुकजडभरतादीनां कर्म न दृश्यत इति चेन्न । मानसक्रियायास्तेषामपि संभवात् । एवं जैमिनिमतेनाऽऽशङ्किते स्वमतं समर्थयति—

**ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ** ॥ ३ । ४ । ८ ॥

यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति ज्ञानिनामाचारवैयर्थ्यं विध्याद्यनुपपत्तिश्चेति वाच्यम् । ज्ञानादेव जायमाने पुरुषार्थे कर्मणोऽतिशयाधायकत्वेन ज्ञानशेषत्वात् ॥ ८ ॥

नन्वस्तु ज्ञानस्य पुरुषार्थहेतुत्वं, कर्मणस्तु तच्छेषत्वं, शेषत्वं च ज्ञानफलेऽतिशयाधायकत्वेन, किंतु ज्ञानेऽतिशयाधायकत्वेन किं न स्यादिति शङ्कां निरस्यति—

**ॐ तुल्यं तु दर्शनम् ॐ** ॥ ३ । ४ । ९ ॥

राजसूयादेः कृतावकृतौ च सममेव तेषां विज्ञानम् । न च जैमिनिमतविरोधः । जैमिन्यादीनां भगवन्मतस्यैकदेशमादाय प्रवृत्तेः । अतो ज्ञानस्य सर्वपुरुषार्थसाधनत्वादत्यन्तापेक्षितं तदिति सिद्धम् ॥ ९ ॥

**ॐ असार्वत्रिकी ॐ** ॥ ३ । ४ । १० ॥

अत्र ज्ञाने सर्वेषामधिकाराभाव उच्यते । सर्वेषामधिकारोऽस्ति न वेति चिन्तायामस्त्येव । फलार्थी समर्थो विद्वान्साधनेऽधिक्रियतेऽस्त्येव ज्ञानफले निर्दुःखानन्दात्मके मोक्षे सर्वेषामर्थितेति ज्ञाने सर्वेषामधिकारान्न तदतिशयवादिति प्राप्ते । न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विन्दति । श्रद्धावाल्लँभते ज्ञानं तत्परः संयतेन्द्रियः । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः । निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनामिति भगवता ज्ञानस्यासार्वत्रिक्यधिकृतिरुक्ता ॥ १० ॥

नन्वर्थित्वादेः सत्त्वात्कुतो नेति शङ्कां निरस्यति—

ॐ **विभागः शतवत्** ॐ ॥ ३ । ४ । ११ ॥

नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमोऽधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके । यथा तथैवासंख्येयाः प्रजास्तासु क्रियाज्ञिनः । ज्ञानाधिकारी संप्रोक्तो विष्णुपादैकसंश्रय इति वचनात् । देवत्वसाम्येऽपि नवकोटीनां मध्ये परापरब्रह्मद्वयाधिकशतस्यैवाधिकारस्तथाऽर्थितासाम्येऽपि विशेषस्यैवाधिकार इत्यर्थः ॥ ११ ॥

अर्थिता[ ति ]रिक्तं किमपेक्षतेऽत आह—

ॐ **अध्ययनमात्रवतः** ॐ ॥३।४।१२॥

ईश्वरगुरुभक्तिशमादियुतोऽध्ययनेऽधिकारी । स एवार्थी समर्थो ज्ञानेऽपीति भावः ॥ १२ ॥

ॐ **नाविशेषात्** ॐ ॥ ३ । ४ । १३ ॥

अत्र ज्ञानाधिकारस्य संपूर्णस्य दौर्लभ्येन तन्महिमोच्यते । सर्वेषां देवादीनामेकप्रकारेणाधिकार उत नेति चिन्तायाम् । अविशेषेणैवाधिकारेऽपि तत्सिद्धिः । अधिकारविशेषाभावेऽपि ज्ञानतारतम्यस्याधिकारिणामुच्चावचशक्त्यैव संभवादिति प्राप्ते । न दवाद्यधिकारिणां साम्येनाविशेषेणाधिकारः । ज्ञानतारतम्यानापत्तेः । अधिकारसाम्ये शक्तितारतम्यस्यासंभवाच्च ॥ १३ ॥

ॐ **स्तुतयेऽनुमतिर्वा** ॐ ॥ ३ । ४ । १४ ॥

अत्र ज्ञानस्यासत्प्रवृत्तावपि मोक्षसाधनत्वमहिमोच्यते । ज्ञानिनोऽसद्वत्सत्प्रवृत्तौ विशेषोऽस्ति न वेति चिन्तायां नास्ति विशेषः । ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत । बाल्यं च पाण्डित्यं निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश इति तस्य यथेष्टाचारविधानादिति प्राप्ते । अस्त्येव तस्य सदसत्प्रवृत्त्योर्विशेषः । न चोक्तदोषः । केन स्यादित्यस्य विधित्वाभावात् । किमर्थं तथोक्तिरिति चेत् । स्तुतये । ज्ञानिनो यथा कथंचिद्भक्ष्यं प्रति स्तुतये कथ्यते । यथेष्टाचारेऽभ्यनुज्ञानं वा । न तु विधिः ॥ १४ ॥

ननु ज्ञानस्य मोक्षासाधनत्वप्रसङ्ग इति शङ्कां निरस्यति—

ॐ **कामचारेण चैके** ॐ ॥ ३ । ४ । १५ ॥

नासत्प्रवृत्त्या ज्ञानस्य मोक्षासाधनत्वम् । यतः कामचाराः कामभक्षाः

कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुरिति यथेष्टाचारेऽपि मोक्षमेके शाखिनः पठन्ति ॥ १५ ॥

कैमुत्येनैतमर्थमाह—

**ॐ उपमर्दं च ॐ ॥ ३ । ४ । १६ ॥**

ॐमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च कामचारतो ब्रह्मानु व्रजन्तीति ज्ञानेनोपमर्दमेके पठन्ति ॥ १६ ॥

ननु ज्ञानिनामिव जिज्ञासूनामपि कामचारिणां ज्ञानाधिकारः स्यादिति शङ्कां निरस्यति—

**ॐ ऊर्ध्वरेतःसु च शब्दे हि ॐ ॥ ३ । ४ । १७ ॥**

यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ति । य इमं परमं गुह्यमूर्ध्वरेतःसु भावयेत् । न तथा विद्यते भूयान्यं प्राप्यान्येऽपि भूयस इत्यूर्ध्वरेतःस्वेव जिज्ञासाधिकारोक्तेः ॥ १७ ॥

मतान्तरमाह—

**ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ॥ ३ । ४ । १८ ॥**

प्रातरुत्थाय संध्यामुपासीत । तदा संध्यामुपासते । ब्रह्मैवं तदुपासतेऽथ देवान्यमेज्जुहुयाद्वेदानावर्तयीत नान्यत्किंचिदाचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत न भृशं वदेन्न विस्मरेताऽऽत्मानं सोमं पिबेद्धुतशेषेणाऽऽवर्तयेदित्युक्ताचारपरामर्शेन विधिं वधवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते ॥ १८ ॥

स्वमतं प्रतिपादयति—

**ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ॥ ३ । ४ । १९ ॥**

अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते । केन स्याद्येन स्यादिति साम्यश्रुतेः । यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यत इति भगवदुक्तेः ॥ १९ ॥

यथेष्टाचरणं विहितमित्याह—

**ॐ विधिर्वा धारणवत् ॐ ॥ ३ । ४ । २० ॥**

केन स्याद्येन स्यादिति विधिर्वा यथा वेदधारणं त्रैवर्णिकानां विहितं नेतरषामेवं कामचारविधिर्ज्ञानिनो नेतरेषाम् ॥ २० ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वात् ॐ ॥ ३ । ४ । २१ ॥**

स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । ज्ञानिनामपि संध्योपासनादिविधिसत्त्वादिति चेन्न । ज्ञानिनां स्वेच्छाचरणविध्यभावेन स्तुतिविषयत्वे सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वप्रसङ्गात् । न च तद्युक्तम् । परमात्माधीनत्वात् ॥ २१ ॥

ननु ज्ञानिनां स्वेच्छाचरणे स्फुटो विधिरेव नेत्याशङ्कां निरस्यति—

**ॐ भावशब्दाच्च ॐ ॥ ३ । ४ । २२ ॥**

यथाविधानमपरे विधिर्भावे । प्रजापतेर्ब्रह्मणो दूरतेति श्रुतेः । भाव इच्छा । ब्रह्मणो यथेष्टाचरणविधिरन्येषां यथायोग्यं परब्रह्मणः सर्वविध्यतिदूरत्वमिति भावः ॥ २२ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ॥ ३ । ४ । २३ ॥**

प्रथमं जैमिनिमतानुसारेण ज्ञानिभिः समस्तं कार्यमित्युक्तम् । यस्त्वात्मरतिरेवेति पुनः स्वेच्छाचरणमनुज्ञातम् । पुनश्च तथाविधानमित्याद्यनुसारेण स्वेच्छाचारविधिरुक्तः । त्रयं च केन स्यादित्याद्यर्थतयोक्तम् । तथा च केनेत्यादिना वस्तुबोधकम् । प्रकारत्रयबोधकवाक्यान्तरविरोधात् । स्तुतिविकल्पाभावादतः स्थिरत्वनिवृत्त्यर्थास्ते व्यपदेशा न तु विधय इति चेन्न । ज्ञानिनां विशेषितत्वाद्भेदात् । त्रेधा हि ते । विधिनियता अनियताः स्वेच्छानियताश्च । विधिनियता मनुष्याः । अनियता देवाः । ब्रह्मैव स्वेच्छानियत इति श्रुतेः ॥ २३ ॥

ननु ज्ञानिनामनेकप्रकारत्वे किं मानमिति शङ्कां निरस्यति—

**ॐ तथा चैकवाक्योपबन्धात् ॐ ॥ ३ । ४ । २४ ॥**

ज्ञानिनां त्रैविध्ये प्रातरुत्थायेत्यादिवाक्यानां यस्त्वात्मरतिरित्यादीनां यथाविधानमित्यादीनां चोपबन्धोऽविरोधो भवति । जैमिनिमतं मानुषविषयं, द्वितीयं देवताविषयं, तृतीयं हिरण्यगर्भविषयमिति भावः ॥ २४ ॥

एवं ज्ञानिनां श्रुतिबलेन सदसत्प्रवृत्त्योरविशेषः परिहृतः । यदुक्तं

ज्ञानिनां सदसत्प्रवृत्त्योर्विशेषे ज्ञानस्यासत्प्रवृत्तिकुण्ठितशक्तेर्न मोक्षसाधनत्वं मोक्षसाधने च सत्प्रवृत्तिसापेक्षत्वं स्यादिति। तत्र प्रथमं परिहृतं द्वितीयं निरस्यति—

**ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ॥ ३ । ४ । २५ ॥**

कामचाराणां मोक्षकर्थनादेवाग्नीन्धनादीनामग्निहोत्रादीनां नापेक्षा ॥ २५ ॥

नन्वसत्प्रवृत्त्या मोक्षाप्रतिबन्धेऽपि सत्प्रवृत्तिस्तत्र हेतुः स्यादेवेति शङ्कां निरस्यति—

**ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ ३ । ४ । २६ ॥**

सर्वापेक्षा ज्ञानस्योत्पत्तौ न तु ज्ञानेन मोक्षे जननीये। विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेः। यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न ग्रामादिप्राप्तौ तथा ज्ञानोत्पत्ताविवापेक्षा ॥ २६ ॥

ननु ज्ञानादेव तदुपपत्तिरिति शङ्कां निरस्यति—

**ॐ शमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ ॥ ३ । ४ । २७ ॥**

यद्यपि ज्ञानादेव मोक्षस्तथाऽपि ज्ञानी शमाद्युपेतः स्यात्। आचार्याद्विद्यामवाप्यैतमात्मानमभिप(मृ)श्य शान्तो भवेद्दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेदित्यादिविधेः सत्त्वात्। न चोत्पन्नज्ञानस्य शमादिर्व्यर्थः। ज्ञानप्रतिष्ठापनाय शमादेरवश्यानुष्ठेयत्वात् ॥ २७ ॥

ननु सदसत्प्रवृत्त्या ज्ञानिनो विशेषे निषिद्धान्नभोजने ह्रासाभावोक्तिः कथमिति शङ्कां निरस्यति—

**ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ॥ ३ । ४ । २८ ॥**

यदिह वा अप्येवंविन्निखिलं भक्षयीतैवमेव स भवतीति सर्वान्नानुमतिः प्राणात्ययविषया। न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति दर्शनात्। चाक्रायणेनेभ्योच्छिष्टकुल्माषान्खादतोच्छिष्टजलपाने प्रार्थिते तेनोक्तमुच्छिष्टं वै मे पीतं स्यात्तेभ्योऽभाषत श्विदेतेऽपि कुल्माषा उच्छिष्टाः। मुनिरुवाच—यदीमान्कुल्माषान्नाभक्षयं तर्हि मे जीवनं न स्यात्। प्राणात्यये दोषाभावात्ते भक्षिताः। जलं तु ममेच्छाधीनं तत्पाने पापं स्यादिति भावः ॥ २८ ॥

अन्यायचरणाभावे ज्ञानस्याबाधनं भवतीत्याह—

ॐ अबाधाच्च ॐ ॥ ३ । ४ । २९ ॥

अतो विद्वानपि न्याय्यं वर्ततेोत्कर्षसिद्धय इति वचनात् ॥ २९ ॥

ॐ अपि स्मर्यते ॐ ॥ ३ । ४ । ३० ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । नानवाप्तवाप्तव्यं वर्त एव च कर्मणि । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजा इति स्मृतेः ॥ ३० ॥

तत्र श्रुतिं चाऽऽह—

ॐ शब्दश्चातो कामकारे ॐ ॥ ३ । ४ । ३१ ॥

स य एतदेवं मन्वानः पूर्वं पश्यन्न कामं चरेन्न कामं क्षयथीतेति श्रुतेः ॥ ३१ ॥

ननु सत्कर्मकरणाद्ध्रासकारणाभावे ज्ञानादेव पूर्णा फलसिद्धिरिति शङ्कां निरस्यति—

ॐ विहितत्वाच्चाऽऽश्रमकर्मापि ॐ ॥ ३ । ४ । ३२ ॥

पश्यन्नपापमात्मानं कुर्यात्कर्माविचारयन्निति श्रुतेर्वर्णाश्रमोचितं कार्यमेव । नियतस्य तु संन्यासः कर्मणो नोपपद्यत इति स्मृतेः ॥ ३२ ॥

ननु ज्ञानकर्मणोः समुच्चयः स्यादिति शङ्कां निरस्यति—

ॐ तत्सहकारित्वेन च ॐ ॥ ३ । ४ । ३३ ॥

यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं न क्षितिपः कार्यमृच्छेत् । एवं ज्ञानं कर्म विनेति सयुक्तिकश्रुतेर्यावद्देहाद्यनुसंधानं लोकसंग्रहाद्यर्थं ज्ञानसहकारित्वाद्यर्थं वा स्वकर्मानुष्ठानमावश्यकमिति भावः । अतो ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपि मोक्षो नियत एवेति सिद्धम् ॥३३॥

ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ ३ । ४ । ३४ ॥

अत्र ज्ञानस्याधिकारप्राप्तिमहिमा वर्ण्यते । अधिकारिभिरेव ज्ञानं प्राप्यतेऽन्यैरपीति चिन्तायाम् । अनधिकारिभिरपि महाप्रयत्नेन प्राप्तव्यमिति प्राप्ते । सर्वथा योग्या एव ज्ञानं प्राप्नुवन्ति । अयोग्यांस्तु शब्देन व्यावर्तयति । य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति श्रुत्याऽऽचार्योपदेशस्य साम्येऽपि योग्यत्वादिन्द्रस्यैव सम्यग्ज्ञानं न विरोचनस्येत्युभयलिङ्गात् ॥ ३४ ॥

ननु दृष्टं विश्वामित्रस्य क्षत्रियस्य ब्राह्मणत्वमित्ययोग्यस्यापि स्यादिति शङ्कां निरस्यति—

**ॐ अनभिभवं च दर्शयति ॐ ॥ ३ । ४ । ३५ ॥**

दैवीमेव संपत्तिं देवा अभिगच्छन्त्यासुरीमेव चासुराः । नैतयोरभिभवः कदाचित् स्वभाव एव ह्यवतिष्ठत इति स्वभावानभिभवं दर्शयति । क्षत्रियत्वादेस्त्वागन्तुकत्वाद्युक्तस्तदभिभवः ॥ ३५ ॥

ननु देवासुराणां सम्यग्ज्ञानविपरीतज्ञानदार्ढ्येन स्वभावानभिभवेऽपि मध्यमानां मानुषाणां स्वयोग्यताभिभवसंभवेन देवयोग्यसम्यग्ज्ञानप्राप्तिरस्त्विति शङ्कां निरस्यति—

**ॐ अन्तरा वाऽपि तु तद्दृष्टेः ॐ ॥ ३ । ४ । ३६ ॥**

सम्यग्ज्ञानविपरीतज्ञानयोर्देवासुरयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्यदृष्टेर्मानवानां मिश्रज्ञानित्वमेव न तु देवादीनामिव केवलं सम्यग्ज्ञानित्वं विपरीतज्ञानित्वं वा । दृढस्वभावस्याभिभवासंभवात् ॥ ३६ ॥

स्मृतिमाह—

**ॐ अपि स्मर्यते ॐ ॥ ३ । ४ । ३७ ॥**

असुरा आसुरेणैव स्वभावेन च कर्मणा । ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् । देवा देवस्वभावेन कर्मणा चाप्यसंशयम् । सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् । नानयोरन्यथाभावः कदाचित्क्वापि विद्यते । मानुषा मिश्रमतयो विमिश्रगतयोऽपि चेति स्मृतेः ॥ ३७ ॥

हेत्वन्तरमाह—

**ॐ विशेषानुग्रहं च ॐ ॥ ३ । ४ । ३८ ॥**

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमति नेनीयमान इति । तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । इति श्रुतिस्मृतिभ्यां देवेषु भगवतो विशेषानुग्रहमसुरेषु निग्रहं च दर्शयति । उग्रान्सुरान्, दमयन्देवान्, संसारमतिक्रम्य स्वपदं नयतीत्यर्थः ॥ ३८ ॥

दैत्यानां स्वभावानभिभवे युक्तिमाह—

**ॐ अतस्त्वितरज्ज्यायोलिङ्गाच्च ॐ ॥ ३ । ४ । ३९ ॥**

यतो देवभागादासुरो भागो ज्यायानतो सुराणां स्वभावाभिभवेन न देवत्वप्राप्तिः । कुत एतत् । तस्मान्न जनतामियादिति लिङ्गात् । कनीयसा

एव देवा ज्यायसाऽसुरा इति श्रुतेश्च । असुराणां देवत्वप्राप्तौ तद्भागस्य न्यूनता स्यादिति भावः ॥ ३९ ॥

जैमिनिमतेनाथैतमर्थमाह—

**ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमात्तद्रूपभावेभ्यः ॐ ॥ ३ । ४ । ४० ॥**

असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि संमतम् । नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरिति नियमश्रुतेः । नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूप इति तद्रूपत्वश्रुतेः । तं भूतिरिति देवा उपासांचक्रिरे ते बभूवुस्तस्माद्धा । अप्येतर्हि सुप्तो भूर्भु[व]रित्येव प्रश्वसित्यभूरित्यसुरास्ते ह पराबभूवुरिति देवासुराणां भावाभावश्रुतेश्च ॥ ४० ॥

**ॐ न चाऽऽधिकारिकमपि पतनानुमानात्तद्व्यपदेशात् ॐ ॥ ३ । ४ । ४१ ॥**

अत्र देवादिपदाकाङ्क्षाशून्यैरेव प्राप्यत्वं ज्ञानस्योच्यते । मुमुक्षुभिर्ब्रह्मादिपदं काङ्क्ष्यं न वेति चिन्तायाम् । काङ्क्ष्यमेव । प्रयत्नेन प्राप्तुं शक्यत्वादिति प्राप्ते । मोक्षेऽधिकारिणा ब्रह्मादिपदं नाऽऽकाङ्क्ष्यम् । पतनानुमानेन तदयोगात् । विमतो देवादिभिः पात्यते । अशक्तत्वे सति तत्पदेच्छत्वात् । राजपदेच्छुवदिति प्रयोगः ॥ ४१ ॥

कैमुत्येन देवपदाकाङ्क्षाभावमाह—

**ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ॥ ३ । ४ । ४२ ॥**

भावशमनवदृषिपदवदुपदेवानां गन्धर्वादीनां पदं नाऽऽकाङ्क्ष्यं किमु देवपदम् । ऋषीन्प्रजापतीन्वाकाङ्क्षेदेव । न गन्धर्वान्न विद्याधरानित्येके शाखिनो वदन्ति । ऋष्यादिषु विशेषे तु दोषो नैवाविशेषत इत्युक्तम् । अहं कश्चिदृषिः स्यामित्यविशेषाकाङ्क्षायां न दोषः । वसिष्ठः स्यां विश्वामित्रः स्यामित्याकाङ्क्षायां दोषः । एवं देवाकाङ्क्षायामपीति भावः ॥ ४२ ॥

ज्ञानभक्त्यादिकमाकाङ्क्ष्यं न वेति शङ्कां निरस्यति—

**ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ ॥ ३ । ४ । ४३ ॥**

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय आकाङ्क्षायामनाकाङ्क्षायां च

आश्रमिणः सर्वे समफलभागिनो न वेति चिन्तायाम् । गृहस्थ एव मुक्ता-वुत्तमः । छन्दोगोपनिषदि—कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मि-कान्विदधदात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्याहिंसन्सर्वाणि भूतानि अन्यत्र तीर्थेभ्यः । स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते । न च पुन-रावर्तते न च पुनरावर्तत इति गृहस्थस्योत्तमत्वोक्तेरिति प्राप्ते । संन्यासिन एवोत्कृष्टज्ञानस्य फलस्य च प्राप्तिः । मोक्षाश्रमं यश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः । अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिरिति श्रीवैष्णवे संन्यासस्यैव मोक्षाश्रमत्वमोक्षफलकत्वयोरुक्त-त्वात् । न चोक्तश्रुतिविरोधः । तस्या देवविषयत्वात् । कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना एते यतयोऽत एतेषां न पुत्रा दायमुपयन्ति न चैते गृहान्विसृजन्त्यरागा अद्वेषा अलोभाः सर्वज्ञाः सर्वकर्तार इत्यादिश्रुत्या तेषामेव कृत्स्नगृहित्वाद्युक्तम् । अतस्ते यतिभ्योऽधिकाः ॥ ४७ ॥

युक्त्यन्तरमाह—

**ॐ मौनवदितरेषामप्युपदेशात् ॐ ॥ ३ । ४ । ४८ ॥**

न देवानामाश्रमद्वयमेव देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वे ह्येते कुर्वन्तीति श्रुत्या मुनिदृष्टान्तेन सर्वाश्रमित्वोक्तेः । अतो धर्माधिकारादिषु ज्ञानप्रचुराणां यतीनामेवोत्तमत्वमिति सिद्धम् ॥ ४८ ॥

**ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ३ । ४ । ४९ ॥**

अत्र ज्ञानस्यातिगोप्यत्वमुच्यते । प्रकृतं ज्ञानमाविष्कारेणोपदेष्टव्यं न वेति चिन्तायाम् । आविष्कारेणैवोपदेष्टव्यम् । तथा सति बहूनां ज्ञाना-वाप्तौ फलाधिक्यसिद्धेरिति प्राप्ते । नाऽऽविष्कारेणोपदेशः । अन्वयात् । अयोग्यप्राप्तिः स्यात् । सा च निषिद्धा । मानस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुरिति श्रुतेः । इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयतीति स्मृतेश्चातोऽनावि-ष्कुर्वन्नेवोपदिशेदित्यर्थः ॥ ४९ ॥

**ॐ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ ३ । ४ । ५० ॥**

अत्र ज्ञानस्य प्रतिबन्धाभाव इह साधनसंपत्तिरुच्यते । ज्ञानं तज्ज-न्मन्येव साधनसंपूर्तौ भवति जन्मान्तरेऽपि वेति चिन्तायाम् । साधनसंपत्तौ

ज्ञानानुदये कारणाभावात्तदानीमेवेति प्राप्ते । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति दर्शनार्थश्रवणादैहिकमेव दर्शनं प्रारब्धप्रतिबन्धाभावे श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्येहे(है)व दृष्टिं परमस्य विन्देत् । यद्यारब्धं कर्म प्रतिबन्धकं स्यात्प्रेत्यैवेत्यादि दर्शनात् ॥ ५० ॥

**ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ ३।४।५१॥**

ज्ञानस्य स्वोत्पत्त्यनन्तरमेव प्रतिबन्धाभावे फलजनकत्वमुच्यते । यच्छरीरे ज्ञानमुत्पन्नं तत्पातानन्तरं मोक्ष उत न वेति चिन्तायाम् । तत्पातानन्तरमेव । कारणे सति कार्याभावे मानाभावादिति प्राप्ते । एवमेव । यथा ज्ञाने नियमाभावस्तथा मोक्षेऽपि प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः । तत्सत्त्वे जन्मान्तरस्य प्रामाणिकत्वसूचनाय द्विरुक्तिः । इत्यानियमः । धर्मी स्वर्गं विधर्मी निरयमेत्येवं ब्रह्मसंस्थोऽमृतत्वमेत्येवेति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात् । सर्वस्य प्रामाणि[क]त्वसूचनाय द्विरुक्तिः । तदुक्तम्—सर्वप्रमाणसिद्धत्वं वक्तुमध्यायमूलतः । अध्यायान्ते द्विरुक्तिः स्यात्पूर्वोक्तस्यावधारणे [इति] ॥ ५१ ॥

इति श्रीवनमालिमिश्रविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां सारसंग्रहे ब्रह्मसूत्रे तृतीयाध्यायस्य चतुर्थः पादः। समाप्तस्तृतीयोऽध्यायः॥

---

## अथ चतुर्थोऽध्यायः ।

उक्तसाधनसंपत्तेः प्राप्यं यत्फलमुत्तमम् ।
प्राधान्यतोऽथो तद्भूते भगवान्बादरायणः ॥ १ ॥

**ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ ४ । १ । १ ॥**

विरक्त्यादिना संपाद्यं यद्धरिज्ञानं तस्य फलमत्र निरूप्यते । ननु ज्ञानात्सर्वपुरुषार्थमित्युक्तं पुरुषार्थाधिकरण इति चेन्न। तदेव कीदृगिति निरूप्यमाणत्वात् । मोक्षश्चतुर्विधः । कर्मक्षयोत्क्रान्तिमार्गभोगभेदात् । तत्राऽऽद्य आदौ निरूप्यते । नन्वावृत्तिरित्यादौ न प्रतीयत इति चेन्न। साधकस्यैव कैश्चित्सूत्रैरुच्यमानत्वात् । तद्विना मोक्षासंभवात् । तृतीय उक्तस्यापि दाढर्याद्यर्थं पुनरुक्तिः । तृतीये साधनस्यात्र फलस्य प्रायेणोक्त्याऽध्यायव्यवस्था । अत्र श्रवणाद्यावृत्तिः समर्थ्यते । श्रवणाद्यावर्तनीयं न वेति चिन्तायाम् । सकृदनुष्ठितज्योतिष्टोमात्स्वर्गादिदर्शनान्नावर्तनीयमिति

प्राप्ते । आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादीनामावृत्तिरेव । उद्दालकेन तत्त्वमसीत्यादेर्नवकृत्व उपदेशात् । ज्योतिष्टोमादेरदृष्टार्थस्य सकृदनुष्ठितस्य फलजनकत्वेऽप्यज्ञाननिवृत्त्यादिदृष्टार्थकश्रवणादेर्वैतुष्यार्थकावघातवदावृत्तिरेवेति भावः ॥ १ ॥

हेत्वन्तरमाह—

ॐ लिङ्गाच्च ॐ ॥ ४ । १ । २ ॥

स तपोऽतप्यत । पुनरेव वरुणं पितरमुपससारेत्याद्यावृत्तिलिङ्गाच्च ॥२॥

ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ॥ ४ । १ । ३ ॥

अत्र ज्ञानार्थमात्मत्वेनशोपासनमुच्यते । आत्मत्वं स्वामित्वाख्यं नित्यमुपास्यं न वेति चिन्तायाम् । जगत्स्वामित्वस्यातिप्रसिद्धत्वेन नोपास्यं लोकप्रसिद्धमेवोपास्यमिति प्राप्ते । आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः कार्यम् । नान्यं विचिन्तय आत्मानमेवाहं विजानीयामित्यात्मानमुपास आत्मा हि ममैष भवतीति ह्युपगच्छन्ति । आत्मेत्येवोपास(स्)स्वाऽऽत्मेत्येव विजानीहि नान्यं किंचन विजानथ । आत्मा ह्येवं भवसीति । तमेकमेवमात्मानं जानीथान्या वाचो विमुञ्चथेति ग्राहयन्ति च । अन्तर्यामिण उपासनमुपदेशश्चाऽऽत्मत्वेन स्वामित्वेन नित्यं कार्यमिति भावः ॥ ३ ॥

ॐ न प्रतीके न हि सः ॐ ॥ ४ । १ । ४ ॥

अत्र प्रतीकैक्योपासनं निरस्यते । प्रतिरूपं ब्रह्मत्वेनोपास्यं न वेति चिन्तायाम् । उपास्यमेव । नाम ब्रह्मेत्युपासीत । नाम ब्रह्मेत्युपास्ते । यावन्नाम्नो गतं तत्रास्य कामचारो भवतीत्यादिश्रुतेरिति प्राप्ते । न प्रतीकमेव ब्रह्मत्वेनोपास्यं, किंतु तत्स्थं ब्रह्मोपास्यम् । सुपां सुलुगित्यनेन नामेत्यस्य लुप्तसप्तमीकत्वात् ॥ ४ ॥

ॐ बाहिर्द(ब्रह्मद)ष्टिरुत्कर्षात् ॐ ॥ ४ । १ । ५ ॥

अत्र ब्रह्मत्वेनोपासनस्य नित्यता समर्थ्यते । ब्रह्मत्वं सदोपास्यं न वेति चिन्तायाम् । न सदोपास्यम् । मोचकप्रसादस्य प्रतिदिनं विविधगुणोपसंहारेणैव सिद्धा किं विशिष्य ब्रह्मत्वोपासनेनेति प्राप्ते । ब्रह्मत्वोपासनं सदा कार्यम् । उत्कर्षात् । ब्रह्मत्वं बृद्धत्वाख्यसर्वोत्कृष्टत्वम् । तथा च सर्वोत्कृष्टत्वेनोपासनान्महाप्रसादस्ततो मोक्ष इति भावः ॥ ५ ॥

ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥ ४ । १ । ६ ॥

अत्र भगवदङ्गाश्रितदेवतोपासनस्याऽवश्यकत्वं वर्ण्यते । अन्यथा तद्द-

दात्मत्वोपासनस्याऽऽवश्यकत्वं न स्यात् । तदुपासनं सदा कार्यं न वेति चिन्तायाम् । न कार्यम् । तत्तदङ्गस्थैर्देवैरेव तत्कार्यम् । न च सूर्यस्य सदा चक्षुष्येवावस्थानं विविधदेशेषु संचरणादिति प्राप्ते । आदित्यादीनां मतय उपासनाख्या वृत्तयः स्वाश्रयाङ्गविषयकास्तैः सदा कार्याः । मुक्तौ तत्तदङ्गेषु लयस्य तदेवोपपत्तेः । न च माऽस्तु तत्र लयः । उत्पत्तिस्थानत्वात् । उत्पत्तिस्थान एव हि लयो दृष्टः । देवैरेव स्वाश्रयत्वविशिष्टभगवताश्चिन्तनं नित्यं कार्यम् । लयस्तु वने लीनाः सारङ्गा वृक्षे लीनाः पतङ्गा इतिवत्संश्लेषविशेष एव । यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित इति स्मृत्या सदाभावितस्यैव प्राप्त्युक्तेः ॥६॥

ॐ आसीनः संभवात् ॐ ॥ ४ । १ । ७ ॥

अत्र साधकस्याऽऽसनसाधनादिनियमः समर्थ्यते । उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धय इत्युक्तमासनं नित्यं न वेति चिन्तायाम् । न नित्यम् । ज्ञानादेव हि मोक्षः । तच्चोपासनात्किमासनेनेति । आसीन एवोपासीत । तस्यैवोपासनसंभवात् । आसीनस्य विशेषेण विक्षेपासंभवात् । अन्यथा च विक्षेपसंभवादिति भावः ॥ ७ ॥

ननूपासनं सर्वदोपादेयम् । विहितत्वात् । नाऽऽसनं तद्विनाऽप्युपासनसंभवादिति शङ्कां निरस्यति—

ॐ ध्यानाच्च ॐ ॥ ४ । १ । ८ ॥

द्विविधमुपासनम् । ध्यानस्मरणभेदात् । स्मरणं यद्यप्यासनं विना भवति । सर्वदा विहितत्वात् । ध्यानं त्वासननियतमिति भावः । उपासनस्य ध्यानत्वादासनमावश्यकं भावप्रधाननिर्देश इति सूत्रार्थः ॥ ८ ॥

ननु ध्यानार्थमपि नाऽऽसनमावश्यकम् । प्रत्याहारादिना तत्संभवादिति शङ्कां निरस्यति—

ॐ अचलत्वं चापेक्ष्य ॐ ॥ ४ । १ । ९ ॥

न केवलं प्रत्याहारादिना विक्षेपाभावोऽपि तु शरीराचलत्वं चापेक्ष्य । तच्चाऽऽसने सत्येव स्यात् ॥ ९ ॥

स्मृतिमुदाहरति—

ॐ स्मरन्ति च ॐ ॥ ४ । १ । १० ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्नित्यादि ॥ १० ॥

पर्वताग्रे नदीतीरे, काले मुहूर्ते चोत्थायेत्यादिदेशादिनियतिं निरस्यति—

ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥ ४ । १ । ११ ॥

यत्र देशादावेकाग्रता भवति तत्रैव स्थेयम् । नदीतीरादिनियमाभावात् । तमेवं देशं सेवेत तं कालं तामवस्थितिम् । तानेव भोगान्सेवेत मनो यत्र प्रसीदतीति वचनात् । नदीत्यादिवचनं तु प्रायेण मनःप्रसादमतीत्यभिप्रायेण ॥ ११ ॥

ॐ आप्रायणात्तत्रापि हि दृष्टम् ॐ ॥ ४ । १ । १२ ॥

अत्र ध्यानस्य प्रायणान्ततोच्यते । ध्यानं ज्ञानपर्यन्तमेव मुक्तिपर्यन्तं वेति चिन्तायाम् । ज्ञानपर्यन्तमेव । तदर्थमेव श्रवणादिविधानादिति प्राप्ते । आप्रायणात्कर्तव्यमेव ध्यानम् । तद्विना सम्यगापरोक्ष्यासंभवात् ॥ १२ ॥

ननु मोक्षपर्यन्तामित्यत आह—दृष्टं हीति । स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीतेति श्रुतेः । न च ज्ञानोत्तरं ध्याने विध्यभावः । तदानींतनस्य स्वाभाविकत्वात् । न च फलाभावः । आनन्दातिशयफलत्वात् । न च तत्र मानाभावः । योगारूढस्य तस्यैव शमः कारणमुच्यत इति स्मृतेः ॥ १२ ॥

ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ॥ ४ । १ । १३ ॥

अत्र प्रासङ्गिकं समाप्य ब्रह्मज्ञानात्कर्मक्षयरूपफलमुच्यते । ज्ञानं मोक्षं साधयति न वेति चिन्तायाम् । न ज्ञानादेव मोक्षः । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति बहुकर्मणां भोक्तव्यत्वात् । न च कायव्यूहेन भोगः । तेषामनियतदेशकालविपाकत्वात् । न भोगकाले कर्मान्तरसंभवेनासमाप्तेश्च । न च स न करोति, न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । इति स्मृतेरिति प्राप्ते । ब्रह्माधिगमे सति पूर्वपापविनाश उत्तरपापासंबन्ध इति भवति ज्ञानान्मोक्षः । तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति ॥ १३ ॥

ज्ञानात्कर्मक्षयमाह—

ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥ ४ । १ । १४ ॥

यथा ज्ञानिनः पापक्षयस्तथेतरस्य पूर्णभगवद्द्वेषयुक्तस्यान्धे तमसि पाते प्रत्यासन्ने पुण्यस्यासंश्लेषः । यथाऽऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः । एवं सुकर्मणश्चापि पततस्तमसि ध्रुवमिति स्मृतेः ॥ १४ ॥

नर्वे(न्वे)वं ज्ञानोदय एव मोक्षः स्यादिति शङ्कां निरस्यति—

**ॐ अनारब्धकार्य एव तु पूर्वे तदवधेः ॐ** ॥ ४ । १ । १५ ॥

यस्य कर्मणो दुःखादिकं कार्यं च भोक्तुं नाऽऽरब्धं तस्यैव भक्तिपूर्वकभगवदापरोक्ष्यान्नाशः । यस्य कर्मणः सुखादिकार्यं भोक्तुं नाऽऽरब्धं तस्यैव पूर्णभगवद्द्वेषपूर्वकज्ञानान्नाशः । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति प्रतिबन्धनिवृत्त्यवधित्वश्रुतेः । एतेन नाभुक्तमित्यादिकं प्रारब्धविषयकमित्यपि लभ्यते ॥ १५ ॥

ननु ज्ञानिकृतपुण्यस्य विनाशाश्लेषौ स्तो न वा । आद्ये । अद्य(व)शब्दवैयर्थ्यम् । द्वितीये । तस्यापि बन्धकत्वे न मोक्षसिद्धिरिति शङ्कां निरस्यति—

**ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ**
॥ ४ । १ । १६ ॥

अग्निहोत्रादि कर्म ज्ञानात्पूर्वं कृतं ज्ञानार्थं भवति । तदुत्तरं क्रियमाणं ज्ञानकार्यमोक्षातिशयाय भवति । अथानेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयत इति तद्दर्शनात् । अज्ञकर्मणो नश्वरफलकत्वेन नाशित्वेऽपि ज्ञानिकृताकाम्यकर्मणोरनन्तफलकत्वेन मोक्ष उपयोग इति भावः ॥ १६ ॥

अन्यस्यैव नाशादिकमुक्तमिति ज्ञानिकृतकाम्यपुण्यकर्मणां सत्त्वात्कथं भक्तिस्तत्राऽऽह—

**ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ** ॥ ४ । १ । १७ ॥

अतो मुक्त्युपयोग्यकाम्यकर्मणो यदन्यत्काम्यं पुण्यं तदपि नश्यति । न तथाऽस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्यामित्युभयोः काम्यपुण्यपापयोस्त्याग एकेषां शाखिनां स्पष्टः ॥ १७ ॥

ज्ञानिकृताकाम्यपुण्यस्याक्षयत्वं स्पष्टयति—

**ॐ यदेव विद्ययेति हि ॐ** ॥ ४ । १ । १८ ॥

यदेव विद्यया करोति, श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुतेः ।

हिशब्दसूचितायाः कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिस्मृतेश्च ॥ २८ ॥

ॐ भोगेन त्वितरे क्षपयित्वा संपत्स्यते ॐ ॥ ४ । १ । १९ ॥

आरब्धपुण्यपापे भोगेन क्षपयित्वा संपत्स्यते । अथेतिशब्दो नियतसूचकः । आरब्धस्य भोगे क्षपणादनु प्राप्नोत्येव तमो घोरं ब्रह्मैवेति ॥१९॥

इति श्रीवनमालिविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां ब्रह्मसूत्रे सारसंग्रहे चतुर्थाध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः।

ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ ४ । २ । १ ॥

ज्ञानभोगाभ्यां क्षीणकर्मणां देहक्षयक्रमोऽत्रोच्यते । स च द्विविधः । देवानां स्वोत्तमप्रवेशेन भगवत्प्राप्तिः । तदन्येषां ब्रह्मनाम्ना देहोत्क्रान्त्या । तदुभयमत्र पादे कथ्यते । तत्र तावद्यत्र देवताविवादः स विचार्यते । अत्र भगवत्प्राप्तिरूपमोक्षार्थं वाचो मनसि लयः समर्थ्यते । वाग्मनसि लीयते न वेति चिन्तायाम् । न लीयते । तदधीनस्य हि तत्र लयो वाच्यः । न ह्यनयोरन्यदितराधीनमिति निश्चेतुं शक्यम् । वाक्पूर्वरूपं वागुत्तररूपमिति व्यामिश्रत्वोक्तेरिति प्राप्ते । भवत्येव वाचो मनसि लयः । प्रत्यक्षत एव वाचो मनोवशत्वदर्शनात् । मनसाऽग्रे संकल्पयत्यथ वाचा व्याहरतीति युक्त्या मनःपूर्वकत्वविशेषश्रवणात् । न च वाचो मनोधीनत्वेऽपि देवतयोः कुतस्तादिति वाच्यम् । अचेतनस्यान्योन्यवशत्वस्य देवतानिमित्तत्वात् । वागभिमानिन्युमा मनोभिमानिनि रुद्रे लीयते । उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः । तदेतन्मिथुनं ज्ञात्वा न दांपत्याद्विहीयत इति स्कान्दोक्तेः ॥ १ ॥

अस्तु वाचो लयनिर्णयस्तथाऽपि सर्वेषां देवानां मोक्षो लयानिर्णयादिति शङ्कां निरस्यति—

ॐ अत एव च सर्वाण्यनु ॐ ॥ ४ । २ । २ ॥

अग्नौ सर्वे देवा विलीयन्ते । अग्निरिन्द्रे । इन्द्र उमायामुमा रुद्रे विलीयते । एवमन्यानि दैवतानि यथानुकूलमित्येतस्मादेव शब्दाद्देवानां स्वनियम्यनियामकभावेन लयान्मोक्षः ॥ २ ॥

ॐ तन्मनः प्राण उत्तरात् ॐ ॥ ४ । २ । ३ ॥

अत्र मनसो ब्रह्मप्राप्त्यर्थं प्राणे लय उच्यते । मनः प्राणे लीयते न वेति चिन्तायाम् । न लीयत एव । मानाभावादिति प्राप्ते । मनः प्राणे लीयते । मनः प्राण इति । वाङ् मनसि संपद्यत इतिपूर्वोदाहृतवाक्योत्तरसद्भावात् । अत्र प्राणश्चतुर्मुखः । वायोर्वाव रुद्र उदेतीति वायो रुद्रप्राप्तिस्थानत्वात् । न च तयोश्चेष्टकत्वसाम्यम् । मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्ते । प्राण उदक्रामन्नप्राण उत्क्रान्तेपद्यत मन इत्यादिना मनसः प्राणाधीनत्वोक्तेः ॥ ३ ॥

ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ॥ ४ । २ । ४ ॥

अत्र प्राणस्य परमात्मनि लय उच्यते । प्राणः परेशे लीयते न वेति चिन्तायाम् । न लीयते । तस्य तदधीनत्वानिश्चयात् । मानाभावाच्चेति प्राप्ते । स प्राणश्चतुर्मुखः परमात्मनि लीयत एवमेवमिममात्मानमन्तकाले सर्वे प्राणा अभिसमीयन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवतीति श्रुतिरध्यक्षोपगामिनः प्राणान्दर्शयति । तथा चान्येषां ब्रह्मणि लयस्तस्य परमात्मनीति भावः । ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति स्मृतेः । न च प्राणस्तेजसीति प्राणस्य तेजोरूपायां रमायां लयोक्तिः । तत्प्राप्तिरेव हि तत्र लयो न तूपाधेर्लयः । न चोपादाने लयो दृष्टो न निमित्ते । लूतादौ निमित्ते तन्तूनां लयदर्शनात् । यथा मलिनकनकस्य शुद्ध्यर्थमग्नौ लयस्तथा हि प्रकृते लयो न तु स्वरूपनाश ऐक्यं वा ॥ ४ ॥

ॐ भूतेषु तच्छ्रुतेः ॐ ॥ ४ । २ । ५ ॥

अत्र देवानां ब्रह्मप्राप्तये भूतेषु लय उच्यते । अग्नौ सर्वलयो भूतान्तरेऽपि वेति चिन्तायाम् । अग्नावेव सर्वेषां लयः । अग्नौ सर्वे देवा विलीयन्त इति श्रुतेः । अशेषदेवानामग्नौ लयात्तदुत्तमेष्ववधमलयोक्तिरयुक्तेति प्राप्ते । येऽत्र विशे(शि)ष्योक्तास्तेभ्योऽन्येषां पञ्चस्वपि भूतेषु नत्वग्नावेव । भूतेषु देवा विलीयन्ते भूतानि परे । न पर उदेति नास्तमेतीति श्रुतेः ॥ ५ ॥

ॐ नैकस्मिन्दर्शयतो हि ॐ ॥ ४ । २ । ६ ॥

अत्र देवानां मुक्त्यर्थं सर्वभूतेषु लय उच्यते । देवा अग्नावेव लीयन्ते. सर्वभूतेषु वेति चिन्तायाम् । अग्नावेव । अग्नौ सर्वे देवा विलीयन्त इति

श्रुतेः । न च सर्वभूतेषु विलीयन्त इति श्रुतिविरोधः । अग्नौ लयेऽपि तस्या न विरोधः । अस्ति भूतानामुत्पत्तिक्रमवैपरीत्येन लयः । उत्पत्तिश्चाऽऽकाशादिक्रमेण । आत्मन आकाश इति श्रुतेः । मुक्तिश्च प्रलयविशेषः । तथा चाग्नावेव सर्वदेवलयाङ्गीकारेऽपि भूतेष्वित्युपपद्यत इति प्राप्ते । नैकस्मिन्भूतेऽग्नौ सर्वदेवलयः । पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते क्रमव[?] पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मरुत आकाशे विनायका विलीयन्त इति श्रुती हि सर्वभूतेषु लयं दर्शयतः । अथमानां देवान्तराप्रवेशिनां प्रायेणाग्नौ लय इत्यभिप्रायेणाग्नावेवेति श्रुतिः ॥ ६ ॥

**ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ॥ ४ । २ । ७ ॥**

अत्र प्रकृतेर्विष्णौ लयाभाव उच्यते । प्राणादुत्तमा प्रकृतिर्ब्रह्मणि लीयते न वेति चिन्तायाम् । लीयते । ब्रह्माधीनत्वात् । न च तस्या असंसारित्वाल्लयो न युक्तः । असंसारित्वस्यैवासिद्धेरिति प्राप्ते । चशब्दः पूर्वसूत्रान्नञनुकर्षकः । न प्रकृतिर्लीयते । यतः समना समो ना परमः पुरुषो यस्याः सा । प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ । नित्यौ सर्वगतौ चैतौ ज्ञात्वा विमुच्यत इत्याद्युपक्रमात् । अनुपोष्योपासां विनैव तस्या नित्यमुक्तत्वम् । प्रकृतिरत्र श्रीर्जडस्य प्रतिलयं लयात् ॥ ७ ॥

ननु तस्याः परमेणात्यन्तसाम्यं स्यादिति शङ्कां निरस्यति—

**ॐ तदपीतेः संसारव्यपदेशात् ॐ ॥ ४ । २ । ८ ॥**

विलीनो हि प्रकृतौ संसारमेति, विलीनः परमे ह्यमृतत्वमेतीति तामितस्य संसारः परमितस्य चासंसारो हि व्यपदिश्यते ॥ ८ ॥

हेत्वन्तरेण तयोरत्यन्तसाम्यं प्रतिषेधति—

**ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ॥ ४ । २ । ९ ॥**

प्रकृतितो ब्रह्मणः सूक्ष्मत्वं ज्ञानानन्दाधिक्यं च । सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः । ज्ञानानन्दो तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोरिति प्रमाणात् ॥ ९ ॥

ननु प्रकृतेः पुरुषासाम्ये नित्यमुक्तत्वं न स्यादिति शङ्कां निरस्यति—

**ॐ नोपमर्देनातः ॐ ॥ ४ । २ । १० ॥**

पुरुषेण नित्यमुक्तत्वादिना साम्यम् ॥ १० ॥

हेत्वन्तरेण किंचित्साम्यं समर्थयति—

**ॐ अस्यैव चोपपत्तेरूष्मा ॐ ॥ ४ । २ । ११ ॥**

सर्वप्रकाशोऽस्यैव परमात्मन एव । तस्य भासा सर्वमिदं विभातीत्यादिश्रुत्योपपत्तेः । ये चाप्यक्षरमव्यक्तं कूटस्थं पर्युपासत इत्यक्षरत्वादिना प्रकृतेः परेण साम्यम् ॥ ११ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥ ४ । २ । १२ ॥**

ननु न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो० इत्यन्यस्य परेण साम्यं निषिध्यत इति चेन्न । शारीरस्य जीवस्य सर्वगतत्वासंभवेन तत्साम्यस्यैव प्रतिषेधात् ॥ १२ ॥

कुतः प्रकृतेः समासमत्वं जीवानां चासमत्वमित्यत आह—

**ॐ स्पष्टो ह्येकेषाम् ॐ ॥ ४ । २ । १३ ॥**

समानि ब्रह्मणो रूपाणि यैरुत्पत्तिस्थितिलयो(या) नियतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये केचन देवा गन्धर्वा मनुष्याः पितरोऽसुराः । यत्किंचेदं चरमचरं वा या समा प्रकृतिर्वाव समासमैषा नित्याऽजरा तद्वशा चेत्येकेषां शाखिनां स्पष्टो ह्ययमर्थः । आयतिः प्रवृत्तिः । प्रजापतिर्दक्षः ॥ १३ ॥

**ॐ स्मर्यते ॐ ॥ ४ । २ । १४ ॥**

मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः । ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमेति वाराहे ॥ १४ ॥

**ॐ तानि परे तथा ह्याह ॐ ॥ ४ । २ । १५ ॥**

अत्र चतुर्मुखेतरदेवानां मोक्षे भगवत्प्राप्तिः समर्थ्यते । ते देवा भगवति लीयन्ते न वेति [ चिन्तायाम् ] । लीयन्ते । भूतचतुर्मुखादौ लीनत्वात् । न ह्येकत्र लीनस्यान्यत्र लयः संभवतीति प्राप्ते । तानि देवतानि चतुर्मुखद्वारा परे लीयन्ते । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति ब्रह्मद्वारा परमाप्तिमाह । एकत्र वृक्षे लीनस्य पक्षिणो वृक्षान्तरे लयो दृश्यते । तेषां च क्षेममध्वानं गच्छतां द्विजसत्तम । सर्वलोकतमोहन्ता आदित्यो द्वारमुच्यते । आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित् । परमाणुभूतास्ते

गत्वा तं देवं प्रविशन्त्युत । तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः । मनोभूतास्ततो गत्वा प्रद्युम्नं प्रविशन्त्युत । प्रद्युम्नाच्च विनिर्मुक्ता जीवं संकर्षणं ततः । विशन्ति विप्रप्रवराः सांख्या भागवतैः सह । ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । समाहितमनस्काश्च नियताः संयतेन्द्रियाः । एकान्तभावोपगता वासुदेवं विशन्ति व इति मोक्षधर्मोक्तेः ॥ १५ ॥

ननु मुक्तानां स्वातन्त्र्यं स्यात्तथा हरेः सर्वोत्तमत्वं न स्यादिति शङ्कां निरस्यति—

ॐ अविभागो वचनात् ॐ ॥ ४ । २ । १६ ॥

एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसंकल्पा यथा निकामं ह्यन्तर्बहिः परिचरन्ति मुक्तानां सत्यसंकल्पस्येश्वरसंकल्पादविभागः परमेश्वरसंकल्पाविभागेनाधीनत्वेनव सत्यसंकल्पत्वादिकं तेषामिति न स्वातन्त्र्यम् ॥१६॥

ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ॥ ४ । २ । १७ ॥

अत्र देवानां मोक्षमुक्त्वा मनुष्याणां मुक्त्यर्थं देहोत्क्रमणस्य मरणविलक्षणत्वं समर्थ्यते । ज्ञानिनां मरणमज्ञमरणसाधारणं विलक्षणं वेति चिन्तायाम् । अज्ञमरणसाधारणमेव । तस्याप्यन्यमरणवत्प्रारब्धनिबन्धनत्वादिति प्राप्ते । विलक्षणमेव ज्ञानिमरणम् । तस्योत्क्रान्तिकाले भगवदोकसः प्रकाशाद् हृदयस्याग्रं हि प्रकाशते । तत्प्रकाशेन प्रकाशितनाडीद्वारः सन् देहान्निष्क्रामति । ननु प्रारब्धकर्मवतः कथमयं विशेष इति चेद्विद्यासामर्थ्यात् । प्रारब्धकर्मसत्त्वेऽपि भगवत्साक्षात्कारसामर्थ्याद्विशिष्टोत्क्रान्तिः । ज्ञानस्य स्वोदयमारभ्यैव फलप्रदत्वात् । तदुक्तं—प्रारब्धकर्मशेषस्तु विरजातरणावधिः । स्वोदयान्मूलदं ज्ञानमादेहं कर्म वारयेदिति । कथमेतत् । तेष्वे(तच्छे)ष गत्यनुस्मृतियोगाच्च । स्वहृदयमारभ्य ब्रह्मपर्यन्ता गतिस्तस्याः शरीरत्यागकाले स्मरणात् । न च स्मरणादेव तत्फलं ज्ञानात् । गत्यनुस्मरणस्य ज्ञानशेषत्वात् । न हीतिकर्तव्यतया करणमकरणं भवति । किमत्र मानम् । यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित इति स्मृतिरेव ।

ननु ज्ञानसामर्थ्येन गत्यनुस्मरणयुक्तेन स्वातन्त्र्येणैवमुत्क्रमणं किं नेति ब्रूमः । किंतु ज्ञानादिना प्रसन्नस्य भगवतोऽनुग्रहेणेत्याह—हार्देति । यमेष वृणुते तेन लभ्य इति श्रुतेः । नाड्यां विशेषमाह—शतेति । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धमूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेतीति श्रुतेः ॥ १७ ॥

ननु यदि प्रकाशितनाडीद्वारो निष्क्रामति तर्ह्यज्ञवन्नाड्यन्तस्तमसैव गमनम् । यद्यन्तरेऽप्यस्ति प्रकाशस्तर्हि द्वारपदवैयर्थ्यमिति शङ्कां निरस्यति—

**ॐ रश्म्यनुसारी ॐ ॥ ४ । २ । १८ ॥**

सहस्रं वा आदित्यस्य रश्मय आसु नाडीष्वाततः । तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छतीति श्रुतेः । ज्ञानी रश्म्यनुसारी तत्प्रकाशेन प्रकाशितो निर्गच्छति नाज्ञानीति भावः ॥ १८ ॥

उक्तमाक्षिप्य समाधत्ते—

**ॐ निशि नेति चेन्न संबन्धात् ॐ ॥ ४ । २ । १९ ॥**

ननु ज्ञानिनां रश्म्यनुसार्युत्क्रमणं सर्वेषां न वा । नाऽऽद्यः । रात्रौ पर्यवसितकर्मणां ज्ञानिनामुत्क्रमणं न स्यात् । रात्रौ रश्म्यभावात् । न द्वितीयः । केषांचिज्ज्ञानिनामज्ञावैलक्षण्यापत्तेरिति चेन्न । रात्रौ वा ह्यादित्याभावेऽप्यन्तःस्थादित्यरश्मीनां सर्वदा नाडीसंबन्धात् ॥ १९ ॥

कियत्कालमत आह—

**ॐ यावद्देहभावित्वाद्दर्शयति च ॐ ॥ ४ । २ । २० ॥**

यावद्देहो विद्यते तावद्रश्मिसंबन्धोऽस्त्येव । एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तत इति श्रुतिर्दर्शयति ॥ २० ॥

ननु ज्ञानिनो दक्षिणायने मरणायोगवद्रात्रावप्ययोगः स्यादिति शङ्कां निरस्यति—

**ॐ अतश्चायनेऽपि दक्षिणे ॐ ॥ ४ । २ । २१ ॥**

दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायण इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते । शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः । तावन्त एव निर्दिष्टा उत्तरायणरश्मयः । ते सर्वे देहसंबद्धाः सर्वदा सर्वदेहिनाम् । महर्लोकादिगन्तार उत्तरायणरश्मिभिः । निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः । इत्यनुसारात् ।

दक्षिणेऽप्ययने तादृशरश्मिविशेषे संबन्धस्य सत्त्वाज्ज्ञानिन उत्क्रान्तिर्युज्यते ॥ २१ ॥

ॐ योगिनः प्रति स्मर्यते स्मार्ते चैते ॐ ॥४ । २ । २२ ॥

अत्र ब्रह्मप्राप्तौ गत्यनुस्मरणादेरावश्यकत्वं समर्थ्यते । उत्क्रान्तिर्विद्यागतिस्मृतिसापेक्षा न वेति चिन्तायाम् । न सापेक्षा । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । इति गतिस्मृतिं विनाऽपि तत्प्राप्तिदर्शनाच्चेति प्राप्ते । स्मार्ते गती योगिनः प्रत्येव स्मर्येते । न तु कालाद्यधीनम् । अग्निज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते । इति स्मृत्या ज्ञानिकर्मयोगिनोरेव गतिरुक्ता न कालाद्यधीनेति भावः । तथा च विद्यागतिस्मृत्योरपेक्षावश्यकतेति सिद्धम् ॥ २२ ॥

इति श्रीवनमालिमिश्रविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां सारसंग्रहे ब्रह्मसूत्रे चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

अथ तृतीयः पादः ।

ब्रह्मनाड्योत्क्रान्तानां प्राप्तो यो मार्गस्तेन यद्गम्यं चैतदुभयमस्मिन्पाद उच्यते ।

ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ ४ । ३ । १ ॥

अत्र ब्रह्मप्राप्तिमार्गस्यार्चिरादित्वं समर्थ्यते । ब्रह्मप्राप्तिमार्गोऽर्चिरादिर्वा वाय्वादिर्वेति चिन्तायाम् । उभयोरपि प्राथम्यम् । उभयत्र श्रुतिसत्त्वादिति प्राप्ते । तेऽर्चिषमभिसंभवत्यार्चिषोऽहरह आपूर्यमाणपक्षमित्यर्चिषः प्राथम्यप्रसिद्धेः । यदा ह वै पुरुषोऽस्माल्लोकात्प्रैति स वायुना गच्छतीति वायोस्तत्रार्चिषः प्राप्तिरेव प्रथमा । द्वावेव मार्गौ प्रथितावार्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चेति । अग्निर्ज्योतिरिति धूमो रात्रिरिति च मार्गद्वयस्य स्मृत्या प्रतिपादनात् ॥ १ ॥

ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ ४ । ३ । २ ॥

अत्र ब्रह्ममार्गे वायोर्द्वितीयप्राथम्यमुच्यते । आर्चिरुत्तरं वायुर्द्वितीयः

प्राप्योऽहर्वेति चिन्तायाम् । उभयोरपि पूर्ववदाधिकारिभेदादिति प्राप्ते । द्वितीयं वायुमागच्छति । वायोरहरह आपूर्यमाणपक्षामिति विशेषवचनाच्च ॥ २ ॥

ॐ तडितोऽधिवरुणः संबन्धात् ॐ ॥ ४ । ३ । ३ ॥

अत्र ब्रह्ममार्गे तडितः संवत्सरानन्तर्यमुच्यते । आर्चिषमेवाभिसंविशन्त्यर्चिषोऽहरह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्केति मासांस्तान्मासेभ्यः संवत्सरमिति संवत्सरपर्यन्तं निर्णीते मार्गे तदुत्तरं वरुणो विद्युदा(ता) प्राप्यत इति चिन्तायाम् । संवत्सराद्वरुणलोकं, संवत्सरात्तडितामिति श्रुतिद्वयसत्त्वादनिर्णय एवेति प्राप्ते । न मार्गभेदेन वरुणतडितोः संवत्सरानन्तर्यम् । संवत्सरानन्तरमेव प्राप्नोति तडितोऽधि उत्तरं वरुणः । वरुणप्राप्तिरित्यर्थः । यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु नृत्यन्ति अथाऽऽपः प्रपतन्ति विद्योतते स्तनयति वर्षिष्यति वा इति । ब्रह्माणमपां चाधिपतिर्वरुण इति श्रुतिस्मृत्यादिना विद्युद्वरुणयोः संबन्धोक्तेः पाठादिना च वरुणादीनामन्ते निवेशः । यद्यपि संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतामिति श्रौतः क्रमस्तथाऽपि संवत्सरोत्तरं स्वल्पव्यवधानेन तडित्स्वी क्रियते । तदुत्तरं च वरुणो वरुणस्यापि संवत्सरोत्तरत्वान्न तस्य संवत्सरोत्तरत्वश्रुतिविरोधः ॥ ३ ॥

ॐ आतिवाहिकास्तल्लिङ्गात् ॐ ॥ ४ । ३ । ४ ॥

अत्रार्चिरनन्तरं प्राप्यस्य वायोरातिवाहिकत्वमुच्यते । अर्चिरनन्तरं प्राप्यो मुख्यो वायुरमुख्यो वेति चिन्तायाम् । मुख्य एव । वायुशब्दस्य तत्रैव प्रसिद्धेः । तस्यापि प्राप्यत्वाच्चेति प्राप्ते । योऽयं पूर्वं प्राप्यतयोक्तो वायुरसावेवातिवाहिको न मुख्यः । पूर्वप्राप्यत्वलिङ्गात् । न हि मुख्यस्य पूर्वं प्राप्तिस्तदुत्तरं चान्यस्येति युक्तम् ॥ ४ ॥

ननु मुख्यस्याऽऽतिवाहिकत्वममुख्यस्य वेत्यत्र संशय एवेति शङ्कां निरस्यति—

ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ॥ ४ । ३ । ५ ॥

स वायुमागच्छतीति प्रथममुक्तम् । उत्क्रान्तो विद्वान्परमभिगच्छन् विद्युतमेवान्तत उपगच्छति । द्यौर्वाव विद्युत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छतीत्यन्ते वायुगमनश्रुतेर्न मुख्यस्य पूर्वप्राप्तिः । उभयोः पूर्वमेव प्राप्यत्वे वाक्यद्वयेन व्यामोहप्रसङ्गादेकस्यैव पूर्वं प्राप्तिसिद्धिः ॥ ५ ॥

उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ॥ ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा । तडितं वरुणं चैव प्रजापं सूर्यमेव वा ॥ सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तममिति स्मृतेः ॥ ५ ॥

ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ॥ ४ । ३ । ६ ॥

अत्र ब्रह्मप्राप्तिमार्गे वायोरन्तिमत्वमुच्यते । मुख्यवायोरनन्तरं ब्रह्मणोऽर्वाग्गन्तव्योऽस्ति न वेति चिन्तायाम् । अस्त्येव मध्ये प्राप्यः । न च वायोरुत्तमत्वहानिः । सोमं वैश्वानरं देवं ध्रुवमित्यादौ सोमादवरस्याग्नेरिन्द्रादवरस्य ध्रुवस्य पश्चात्प्राप्त्युक्तेरतो न वायोरतिशयेनोत्तमत्वामिति प्राप्ते । वैद्युतेन विद्युत्पतिना वायुराब्रह्मप्राप्तिः । येनैवाव्यवधानेन तत्प्राप्तिः स एवान्तिमोऽतिशयेनोत्तमश्च । कुतो वायोर्ब्रह्मप्रापकत्वमिति चेत् । तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयतीति श्रुतेरतो वायोरेव हिरण्यगर्भाख्यस्यान्तिमत्वेन प्राधान्यम् ॥ ६ ॥

ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ ४ । ३ । ७ ॥

स्मृत्यर्थमार्गं विचार्य गम्यमत्रोच्यते । प्राप्यं कार्यं चतुर्मुखाख्यं परं वेति चिन्तायाम् । कार्यमेव चतुर्मुखाख्यं गम्यम् । स एतान्ब्रह्म गमयतीति गत्युपपत्तेरिति बादरिर्मन्यते ॥ ७ ॥

विशेषश्रुतिमुदाहरति—

ॐ विशेषितत्वाच्च ॐ ॥ ४ । ३ । ८ ॥

यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखमिति विशेषश्रुतेः ॥ ८ ॥

ननु ब्रह्मविदाप्नोति परमिति परप्राप्तिरेव ज्ञानिनः श्रूयत इति शङ्कां निरस्यति—

ॐ सामीप्यात्तव्यपदेशः ॐ ॥ ४ । ३ । ९ ॥

ज्ञानी चतुर्मुखं प्राप्य चिरेण परं प्राप्नोतीति समीपाभिप्रायेणैतव्द्यपदेशः ॥ ९ ॥

समीपप्राप्तिः कदेत्याकाङ्क्षायामाह—

ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ॥४।३।१०॥

सर्वकार्याणां प्रलये स्वाध्यक्षेण स्वामिना चतुर्मुखेण सह । अतश्चतु-

मुखात्परं गच्छति । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता । ते हि ब्रह्माणमभिपद्य यदेतद्विलीयतेऽथ ब्रह्मणा परमभिगच्छतीति श्रुत्यभिधानात् ॥ १० ॥

स्मृतिं चाऽऽह—

**ॐ स्मृतेश्च ॐ ॥ ४ । ३ । ११ ॥**

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति स्मृतेः ॥ ११ ॥

पक्षान्तरं दर्शयति—

**ॐ परं जैमिनिर्मुख्यत्वात् ॐ ॥ ४ । ३ । १२ ॥**

ब्रह्मशब्दस्य परस्मिन्मुख्यत्वात् । परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ॥ १२ ॥

ननु ब्रह्मशब्दस्य परस्मिन्मुख्यत्वेऽप्यनुपपत्त्या तत्त्याज्यमिति शङ्कां निरस्यति—

**ॐ दर्शनाच्च ॐ ॥ ४ । ३ । १३ ॥**

न ज्ञानिनः परप्राप्तिरनुपपन्ना । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिश्रवणादिसाधनैः परस्यैव द्रष्टत्वात् । ब्रह्मविदाप्नोति परमिति परस्यैव प्राप्यत्वदर्शनाच्च ॥ १३ ॥

हेत्वन्तरमाह—

**ॐ न च कार्ये प्रत्यभिसंधिः ॐ ॥ ४ । ३ । १४ ॥**

ज्ञानिनः कार्यविषये प्रतिपत्त्यभिसंधी न स्तश्चात्परविषयकौ स्तः । यद्विषयकौ तौ स एव प्राप्यते । प्रतिपत्तिरनुभवोऽभिसंधिरिच्छा । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण इति सावधारणस्मृत्येतरप्राप्तेर्निरासात् ॥ १४ ॥

स्वमतं सिद्धान्तयति—

**ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ ४ । ३ । १५ ॥**

न सर्वान्कार्यं नयति परं वेति श्रुत्यर्थः । उभयपक्षोक्तदोषात् । किंत्वप्रतीकोपासात्परं कोपासाऽऽशु कार्यं नयति तत्क्रतुरिति । यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीति श्रुतेः । एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति शरी-

रत्यागानन्तरं प्राप्तिश्रुतेः । कार्यप्राप्तौ मानस्योक्तत्वाच्च । प्रतीको देहः प्रतिमा वा । तन्मात्रस्थत्वेन परिच्छिन्नत्वेन ये भगवन्तमुपासते ते कार्यं प्राप्य तेन सह मुच्यन्ते ये त्वनन्तगुणविशिष्टव्यापकत्वेनोपासते ते साक्षात्परमेव प्राप्नुवन्तीति भावः । यान्ति देवं परं केचित्पूर्वं केचिल्लये विभुमिति मानात् । अप्रतीकाश्रया ये हि ते यान्ति परमेव हि । स्वदेहे तं यथा यथोपास्ते तदेव भवतीति श्रुतेः । ब्रह्म दृष्ट्वैव गच्छेद्ब्रह्मसंलोकतामिति स्मृतेश्च ॥ १५ ॥

अप्रती[का]लम्बनाः केचित्प्रतीकालम्बना इति यथेष्टशङ्कां निरस्यति—

**ॐ विशेषं च दर्शयति ॐ ॥ ४ । ३ । १६ ॥**

अन्तःप्रकाशा बहिःप्रकाशा देवा वाव सर्वप्रकाशा ऋषयोऽन्तःप्रकाशा मानुषा एव बहिःप्रकाशा इति विशेषं दर्शयति । कार्यप्राप्तिमतं मनुष्यस्वभावाभिप्रायं, परप्राप्तिमतं देवादिस्वभावाभिप्रायम् । तत्तत्स्वभावानां तादृशतादृशोपासनसंभवादिति भावः ॥१६॥

इति श्रीवनमालिमिश्रविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां सारसंग्रहे ब्रह्मसूत्रे चतुर्थाध्यायस्य तृतीयः पादः ॥

---

अथ चतुर्थः पादः ।

**ॐ संपद्याविहाय स्वेन शब्दात् ॐ**

चतुर्विधेषु फलेषु फलत्रयमुक्त्वा चतुर्मुखेण सह परं ब्रह्म प्राप्तानां यस्तत्र भोगः क्रमप्राप्तः सोऽत्रोच्यते । तत्राऽऽदौ मुक्तस्य ब्रह्मानतिक्रमेणैव भोगानुभवः साध्यते । मुक्तो ब्रह्मातिक्रम्य भोगान्भुङ्क्ते न वेति चिन्तायाम् । एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवतीति श्रुत्या परमात्मातिक्रमानन्तरं स्वरूपाविर्भावस्योक्तत्वेन परमात्मानमतिक्रम्यैव भोगान्भुङ्क्त आप्नोतीति प्राप्ते । तं प्राप्याविहायैव च भोगावाप्तिः । एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः । इमां घोरामशिवां नदीं तीर्त्वैतत्सेतुमाप्यैतेनैव सेतुना मोदत इति श्रुतेः । एतं सेतुमिति श्रुतिस्तत्प्राप्तयेऽन्यतरणमेवाऽऽह । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय इति स्मृतेश्च । अर्चिरादिप्राप्तौ स्वरूपाविर्भावस्याभावाद्भगवत्प्राप्तौ तत्सत्त्वात्स्वरूपाविर्भावस्यैव मोक्षत्वाच्च न तस्यातिक्रम इति भावः ॥ १ ॥

ॐ मुक्तः प्रतिज्ञानात् ॐ ॥ ४ । ४ । २ ॥

अत्र ब्रह्म प्राप्य तदविहायैव भोक्तुर्मुक्तत्वमुच्यते । जक्षन्क्रीडन्रममाणः स तत्र पर्येतीति श्रुत्युक्तो मुक्तोऽमुक्तो वेति चिन्तायाम् । अमुक्त एव । क्रियावत्त्वप्रतीतेः । मुक्तस्य कृतकृत्यस्य क्रियायोगादिति प्राप्ते । मुक्त एवोच्यते सोऽश्नुते सर्वान्कामानिति सर्वकामावाप्तेर्मुक्तत्वं विनाऽसंभवात् । तं त्वेवं ते भूयो व्याख्यास्यामीत्यवस्थात्रयदोषहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञायाशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति चोपन्यस्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति चोपसंहरति । यद्वा—अहरहरेनमनुप्रविशत्युपसंक्रमतेऽत्र न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष भवति । अथ यदैतं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवतीति श्रुतौ सुषुप्तौ ब्रह्मप्राप्यानामप्यमुक्ततया दिव्यभोगाभावमुक्त्वा मुक्तस्यैव तत्प्राप्त्या तद्भावप्रतिज्ञानात् ॥ २ ॥

ॐ आत्मा प्रकरणात् ॐ ॥ ४ । ४ । ३ ॥

अत्र मुक्तप्राप्यस्य ज्योतिषो ब्रह्मत्वं समर्थ्यते । उक्तं ज्योतिर्ब्रह्मान्यद्वेति चिन्तायाम् । अब्रह्मैव ज्योतिः । ज्योतिःपदस्याऽऽदित्यादौ प्रसिद्धेः । स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैष स पाप्मना विनिर्मुक्त इति श्रुत्याऽऽदित्यप्राप्त्युक्तेः । तथा चाऽऽदित्यं प्राप्य प्रारब्धकर्मणा मुच्यत इति प्राप्ते । परमात्मैवात्र ज्योतिः । य आत्माऽपहतपाप्मा विजरो विमृत्युरिति तस्यैव प्रकरणात् । तदेव ज्योतिषां ज्योतिरिति ज्योतिःपदमपि परमात्मनि दृश्यते ॥ ३ ॥

ॐ अविभागेन दृष्टत्वात् ॐ ॥ ४ । ४ । ४ ॥

अत्र मुक्तस्य हरिभुक्तभोगभोक्तृत्वमुच्यते । अन्यथा हरेः सर्वभोक्तृत्वं न स्यात् । जक्षन्क्रीडन्रममाणो हरिभुक्तभोनानेव भङ्क्तेऽतिरिक्तान्वेति चिन्तायाम् । अभुक्तानेव भुङ्क्ते । मोक्षस्य परमपुरुषार्थत्वेनाभुक्तानामपि प्राप्तिसंभवात् । ईश्वरस्य पूर्णानन्दत्वेन भोगेच्छाभावेन भोगाभावान्मुक्तस्याभोगः स्यादिति प्राप्ते । हरिभुक्तभोगानेव भुङ्क्ते मुक्तः । निरञ्जनः परमं साम्यमुपैतीति श्रुत्या । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इति स्मृत्या च भोगेनैव साम्योक्तेः । ये ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते । यानेवाहं शृणोमि यान्पश्यामि याञ्जिघ्रामि तानेवैत इदं

शरीरं विमुच्यानुभवन्तीति श्रुतौ दृष्टत्वात् । न चेशस्य भोगाभावः । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरमिति स्मृत्या पूर्णानन्दस्यापि भगवतो भोगोक्तेः । यस्तु मुक्तावभेदो भेदो वेति चिन्तायाम् । अभेद एवेति तत्त्व-मसीत्यादिना दृष्टत्वादित्याह । तस्य जक्षन्क्रीडन्रममाण इति श्रुतिविरोधः स्पष्ट एव । तत्त्वमस्यादिश्रुतयस्तु व्याख्याताः प्राक् ॥ ४ ॥

ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ॥ ४ । ४ । ५ ॥

अत्र मुक्तस्य भोगः समर्थ्यते । मुक्तानां भोगोऽस्ति न वेति चिन्तायाम् । नास्त्येव । देहाभावात् । देहसत्त्वे संसाराविशेषप्रसङ्ग इति प्राप्ते । सर्वदेह-परित्यागेन मुक्ताः सन्तो ब्रह्मवद्ब्राह्मेणैवेदं सर्वमनुभवन्तीति श्रुतेः ॥ ५ ॥

देहाभावाभ्युपगमेन भोगं रीत्यन्तरेण समर्थयति—

ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ॥ ४ । ४ । ६ ॥

चितिमात्रो देहः स्वरूपात्मको मुक्तानां विद्यते । सर्वं वा एतदचित्परि-त्यज्य चिन्मात्र एवैष भवति । चिन्मात्र एवावतिष्ठते । तामेतां मुक्तिरित्याच-क्षत इतिश्रुतेश्चिदात्मकदेहेन भोगमौडुलोमिर्मन्यते ॥ ६ ॥

ननु वस्तुनि विकल्पाभावादुभौ पक्षावनुपपन्नाविति शङ्कां निरस्यति—

ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ॥४।४।७॥

अथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिरि-त्युपन्यासात् । पूर्वस्मिन् जैमिनिमतेऽपि प्रामाण्यस्य संभवादविरोधं बादरा-यणो मन्यते ॥ ७ ॥

ॐ संकल्पादेव तच्छ्रुतेः ॐ ॥ ४ । ४ । ८ ॥

अत्र मुक्तस्य संकल्पमात्रभोगत्वमुच्यते । मुक्तभोगस्तत्र साधनान्त-रसाध्यः संकल्पमात्रसाध्यो वेति चिन्तायाम् । तत्तदुपायसाध्य एव । मुक्त-स्य भगवदोकसि स्थितत्वात् । तदोकस्थस्यापि भूम्यादिवत्तत्तदुपायसाध्य एव भोगो भवेदिति प्राप्ते । तेषां भोगादिषु न यत्नापेक्षा । स यदि पितृलो-ककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति श्रुतेः । साधनान्तरापेक्षायां श्रुतिः । ( ? ) तेति संकल्पादेव तेषां सर्वं सिध्यतीति भावः ॥ ८ ॥

ॐ अत एव चानन्याधिपतिः ॐ ॥ ४ । ४ । ९ ॥

अत्र मुक्तानां ब्रह्मातिरिक्तनियामकराहित्येन भोग उच्यते । मुक्तस्य

ब्रह्मातिरिक्तनियामकाः सन्ति न वेति चिन्तायाम् । सन्त्येव । तस्य परगृहगतत्वात् । दृश्यन्ते राजगृहगतानां स्वापकृष्टाः प्रतीहारादयो नियामका दृष्टा इति प्राप्ते । अत एव सत्यसंकल्पादेव तेषां भगवद-तिरिक्त आचार्यातिरिक्तश्च स्वाधमः समो वा नियामको नास्ति । संसाराविशेषापत्तेः । अथ य इहाऽऽत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीति श्रुत्या मुक्तानां कामचारत्वोक्तेः । न चेशोऽपि तेषामधिपो माऽस्तु । न तत्राभ्यधिकः कश्चित्सर्वे ते समचेतसः । कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः । तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च स इति मोक्षधर्मे भगवन्नियम्यत्वस्य स्वीकारात् । परमानन्दकारित्वाच्च ॥ ९ ॥

ॐ अभावं बादरिराह ह्येवम् ॐ ॥ ४ । ४ । १० ॥

अत्र मुक्तानां भोगानुपपत्तिर्निवार्यते । मुक्तानां भोगः संभवति न वेति चिन्तायाम् । न संभवति । मुक्तस्य हि बाह्यदेहोऽस्ति न वा । आद्ये । तत्राभिमाने दुःखाद्यापत्तिः । अनभिमाने सुखस्यैव भोगानुपपत्तिः । द्वितीये । भोगासंभवः । न हि बाह्यदेहरहितस्य भोगो दृष्ट इति प्राप्ते । युक्त एव मुक्तानां भोगः । न चोक्तदोषः । चिन्मात्रं विनाऽन्यदेहानङ्गीकारात् । बाह्यदेहाभावेऽपि भोगसंभवादिति बादरिर्मन्यते । अशरीरो वाव तदा भवत्यशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतेः । न च ब्राह्मदेहेन तदुपपत्तिरिति वाच्यम् । सायुज्यभाजां तदुपपत्तावप्यन्येषामनुपपत्तेः । अयं भावः । यो यो देवः सूर्यादिर्भगवतो यद्यदङ्गादुत्पन्नः स तदङ्गे सायुज्यं प्राप्य भगवन्तं प्राप्नोति । स्वेच्छया निर्गच्छति च । तस्य भगवद्विग्रहेण भोगसंभवेऽपि तत्र लयमप्राप्यैव मुक्तानां तदसंभवः ॥ १० ॥

बाह्यदेहमभ्युपगच्छतां पक्षमाह–

ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥ ४ । ४ । ११ ॥

सेन्द्रियस्य शरीरस्य भावं जैमिनिर्मन्यते । स एकधा भवति त्रिधा भवतीति विकल्पाम्नानात् । न हि देहं विनाऽनेकधा विहारः संभवति ॥ ११ ॥

नन्वेतन्मतद्वयस्य विरुद्धत्वात्स्वमतं किमिति शङ्कां निरस्यति–

**ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥ ४ । ४ । १२ ॥**

उभयविधश्रुतिलिङ्गादिदर्शनात्सशरीरत्वमशरीरत्वं चेत्युभयविधं भगवान्बादरायणो मन्यते । यथा द्वादशाहस्य यजमानेच्छयाऽनेकयजमानकत्वेन सत्रत्वमेकयजमानकत्वेनाहीनत्वं न विरुद्धं तथा सत्यसंकल्पमुक्तेच्छया शरीरत्वाशरीरत्वादिकं न विरुद्धमित्यर्थः ॥ १२ ॥

ननु भवतु बाह्यदेहाभावभावयोरविरोधस्तथाऽपि भोगोपपत्तिः कथमित्याशङ्कां निरस्यति—

**ॐ तन्वभावे संध्यवदुपपत्तेः ॐ ॥ ४ । ४ । १३ ॥**

न देहाभावे भोगानुपपत्तिः । यथा हि संध्ये स्वप्ने बाह्यदेहाभिमानाभावेऽपि भोगस्तथा मुक्तावप्यभिमानाभावस्योभयत्र तुल्यत्वात् ॥ १३ ॥

देहसत्त्वे सुतरां भोगोपपत्तिरित्याह—

**ॐ भावे जाग्रद्वत् ॐ ॥ ४ । ४ । १४ ॥**

यथा जागरे भोगस्तथा मुक्तौ देहसत्त्वे सुतरां तदुपपत्तिरित्यर्थः । स्वप्नस्थानां यथा भोगो विना देहेन युज्यते । एवं मुक्तावपि भवेद्विना देहेन भोजनम् । स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन । इति स्मृतेः । तेजोरूपाणि प्रकाशरूपाणि । ये च मुक्ता भवन्तीह नरा भरतसत्तम । तेषां लक्षणमेतद्धि श्वेतद्वीपनिवासिनाम् । तत्र नारायणपरा मानवाश्चन्द्रवर्चसः । अनिन्द्रिया अनाहारा अनिष्यन्दाः सुगन्धिनः । एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः । न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः । कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः । तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः । प्रतिबद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमे । तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च स इति मोक्षधर्मे प्राकृतदेहेन्द्रियाद्यभावमुक्त्वाऽलौकिकेन्द्रियादेरुक्तत्वात्सत्यसंकल्पनादेव तेषां सर्वं संभवतीति भावः ॥ १४ ॥

ननु देहसत्त्वपक्षे दुःखभोगः स्यादिति शङ्कां निरस्यति—

**ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ॥ ४ । ४ । १५ ॥**

यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थतैलाद्येव भुङ्क्ते न तु कार्ष्ण्यादि(?) शरीरमनुप्रविश्यापि तत्प्रकाशयन् पुण्यानेव भोगाननुभवन्ति न दुःखानीत्यादि हि शास्त्रं दर्शयति ॥ १५ ॥

ननु तीर्णो हि तदा सर्वान् शोकानित्यादिकं यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरेत्याद्यनुरोधेन स्वर्गपरमिति शङ्कां निरस्यति–

**ॐ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ**

॥ ४ । ४ । १६ ॥

मोक्षसुप्त्योरेवेदं वचनम् । पिताऽपिता भवति । अनन्वागतं पुण्येन । अनन्वागतं पापेन । स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते । ब्रह्मैव सद् ब्रह्माप्येतीत्यनन्तरावस्थायामुच्यते स्वर्गिणः । श्राद्धादिभोक्तुस्तदसंभवात् ॥ १६॥

**ॐ जगद्व्यापारवर्जम् ॐ** ॥ ४ । ४ । १७ ॥

अत्र मुक्तस्य भोगैयत्ता समर्थनेऽन्यथेशस्य समर्थत्वं न स्यात् । मुक्तजगत्कर्तृत्वमस्ति न वेति चिन्तायाम् । अस्त्येव तस्य जगत्कर्तृत्वम् । सोऽश्नुते सर्वान् कामानिति श्रुतेः । मुक्तस्य सत्यकामत्वेन कामितसमस्तप्राप्त्युपपत्तेरिति प्राप्ते । नास्त्येव जगत्कर्तृत्वम् । जगद्व्यापारवर्जमेव हि सर्वकामाप्तिः । मुक्तिर्हि सादिर्जगत्कर्तृत्वं चानादि । यो जीवो मुक्तस्ततः पूर्वं स्रष्टुरीशस्यैव स्वाभाविकं सर्वदा स्रष्टृत्वं मुक्तानां न । विनिगमनाविरहात् । अणुत्वादपि जीवस्य सर्वकर्तृत्वानुपपत्तिः । देशतः कालतो व्यापिन्या अपि रमाया सार्वज्ञ्याभावात् ॥ १७॥

हेत्वन्तरमाह–

**ॐ प्रकरणादसंनिहितत्वाच्च ॐ** ॥ ४ । ४ । १८ ॥

यतो वा इमानि भूतानि जायन्त इत्यादौ, स ऐक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादौ, ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धीत्यादौ च कारणप्रकरण ईशस्यैव प्रक्रान्तत्वात् । मोक्षप्रकरणेऽत्र जीवस्यैव प्रक्रान्तत्वाच्च । निरतिशयसार्वज्ञ्यादिसामर्थ्याभावेन जीवस्य कारणतायामसांनिध्याच्च ॥ १८ ॥

उक्तमाक्षिप्य समाधत्ते–

**ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ**

॥ ४ । ४ । १९ ॥

ता यो वेद स यद्ब्रह्म सर्वेऽस्मै देवा बलिमावहन्तीति मुक्तस्य जग-

दैश्वर्यं प्रत्यक्षमुपदिश्यते । न हि जगदकर्तुर्देवाराध्यत्वं युक्तमिति चेन्न । सर्वाधिकारिकमण्डलाधिपतेश्चतुर्मुखस्यैव देवाराध्यत्वोक्तिर्न तु मुक्तसामान्यस्य । आत्मेत्येव परं देवमुपास्यं हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन । केचित्स्वर्गे महर्लोके जने तपसि केचन । केचित्सत्ये महाज्ञानाद्गच्छन्ति क्षीरसागरम् । तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः । सालोक्यं च स्वरूपत्वं सामीप्यं योग एव च । रमामारभ्य सर्वत्र यावत्सुक्षीरसागरम् । पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः । मानुषा वर्णभेदेन तथैवाऽऽश्रमभेदतः । क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः । आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः । रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमान् । इत्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च । सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् । पूज्यन्ते चापरैस्तेन सर्वपूज्यश्चतुर्मुखः । स्वजगव्द्याप्तिस्तेषां पूर्ववत्समुदीरिता । सयुजः परमात्मानं प्रविश्यैव बहिर्गताः । चिद्रूपाश्चाकृतांश्चापि विना भोगांश्च कांश्चन । भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृतेति स्मृतेः । यत्कल्पीयचतुर्मुखेण सह ये मुक्तास्ते पूजयन्तीत्यर्थः ॥१९॥

ननु मुक्तानां ब्रह्मादीनां मुक्तव्यापार एव कुतोऽमुक्तव्यापारोऽपि किं न स्यादिति शङ्कां निरस्यति—

**ॐ विकारावर्ति च तथा हि दर्शयति ॐ ॥ ४ । ४ । २० ॥**

न विकारावर्तिव्यापारो मुक्तानाम् । इमं मानवमावर्तं नावर्तन्त इत्यादिश्रुतिः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम । एकया यात्यनावृत्तिमित्यादिस्मृतिश्च मुक्तस्य तथात्वं दर्शयति ॥ २० ॥

**ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ॥ ४ । ४ । २१ ॥**

अत्र मुक्तानां भोगादिना वृद्धिह्रासौ निरस्यति । मुक्तो वृद्धिह्रासादियुक्तो न वेति चिन्तायाम् । अस्त्येव वृद्ध्यादिः । एतत्साम गायन्नास्त इत्यादिना तस्याप्युपासनादिश्रवणादन्यथा तद्वैयर्थ्यापत्तेरिति प्राप्ते । न मुक्तौ वृद्धिह्रासौ । स एष एतस्मिन्ब्रह्मणि संपन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सदा भवति । दर्शयन्नेव ब्रह्मेति दर्शयन्नेव ब्रह्मेति दर्शयतः पश्यतो मुक्तस्यैकाकारेण स्थितिरुच्यते । मह-

तोऽप्रत्यक्षेण मुक्तो वृद्ध्यादिमान्न तत्कारणाभावादित्याद्यनुमानेन च वृद्ध्याद्यभावसिद्धिः । मुक्तिगतोपासनस्य वैधत्वाभावेनैच्छिकत्वेन फलरूपत्वान्न सुखादिसाधनत्वमिति भावः ॥ २१ ॥

ननु मुक्तानां वृद्धिहेत्वभावो भोगविशेषस्य सत्त्वादिति शङ्कां निरस्यति—

ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ॥४।४।२२॥

यथैतां सर्वाणि भूतान्यति एतस्यै देवतायै सायुज्यं सलोकतां जयन्ति । एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न वर्धत इति भोगमात्रसाम्ये हि लिङ्गम् । यादृशयोग्यतावतां यादृगुपासनं यादृगानन्दावाप्तिर्येषां तादृगेवानन्दावाप्तिः सर्वदा तिष्ठति । अन्येषामपि तादृशयोग्यतावतां तादृगानन्दावाप्तिः । प्राप्तस्य चाऽऽनन्दस्य वृद्ध्यादिरिति भावः । केचित्तु मुक्तौ न परेणाभेदो भेदे लिङ्गसत्त्वाद्भोगमात्रसाम्यं यथा परेशस्य पूर्णानन्दत्वं तथा मुक्तस्येति वदन्ति ॥ २२ ॥

ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ ॥ ४ । ४ । २३ ॥

अत्र मुक्तस्यापुनरावृत्तिरुच्यते । मुक्तस्य पुनरावृत्तिरस्ति न वेति चिन्तायाम् । अस्त्येव पुनरावृत्तिः । स्वर्गादिगतानां तथा दर्शनादिति प्राप्ते । न मुक्तानां पुनरावृत्तिः । न च पुनरावर्तते न च पुनरावर्तते । तयोर्ध्वमायन्नमृतत्वमेति । तेषां न पुनरावृत्तिः । ते प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते । ब्रह्मलोकमभिसंपद्यन्ते न च पुनरावर्तन्त इति श्रुतेः ।

कृतनिगमविभागं योगिभिः सेविताङ्घ्रिं धृतमुनिवररेषं वासुदेवांशमीड्यम् ।
यतिगुरुमरुदंशं श्रीमदानन्दतीर्थं मतिनिधिजयतीर्थं व्यासतीर्थं च वन्दे ॥१॥

श्रीगोविन्दविहारभूषितभुवो वृन्दावनात्प्राग्दिशि
कोशानां त्रियुगे पुरे सुभुवि ये विप्रा भरद्वाजजाः ।
श्रीसंनाहमुचो वसन्ति सुकुले तेषां सुजातेन वै
वर्णिश्रीवनमालिना श्रुतिनये वृत्तिः समा प्राकृता ॥ २ ॥
भुक्त्वा श्यामाकमुष्टिं विपदमदमयद्दीनबन्धुर्द्विजाते-
र्दत्त्वा भूतीः पराः स्वा धृतकर इति मां देहि मा पद्मया यः ।

द्रौपद्याः शाकलेशात्त्रिभुवनमपुषद्यज्वनां दुःप्रसाद्यः
स्थित्वाऽन्तःकारिताया भवतु यदुवरो मे प्रसन्नः सवृत्तेः ॥ ३ ॥

भगवतोऽङ्घ्रिकञ्जस्य श्रीगोपालस्य रेणवः
क्रियासुर्भूतिमस्माकं संविदां प्रमुदां सदा ॥ ४ ॥

इति श्रीवनमालिविरचितायां वेदान्तसिद्धान्तमुक्तावल्यां
ब्रह्मसूत्रे सारसंग्रहे चतुर्थाध्यायस्य चतुर्थः पादः ॥

समाप्तेयं ब्रह्मसूत्रसिद्धान्तमुक्तावलिः ।

# शुद्धिपत्रम् ।

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | ११ | यावदशिः | यावदीशः |
| ८ | ९ | भेद | भेदे |
| ,, | २७ | दृष्टृत्वा | द्रष्टृत्वा |
| १० | ३० | सर्वभतस्य | सर्वभूतस्य |
| १६ | १७ | प्रत्यगब्रह्मैक्यं | प्रत्यग्ब्रह्मैक्यं |
| १९ | १० | द्वियोगन | द्वियोगेन |
| ,, | १८ | विलणानां | विलक्षणानां |
| २० | १५ | पुनर्भशं | पुनर्भ्रंशं |
| २३ | १३ | विविक्तन | विविक्तेन |
| ,, | २२ | २ । १ । १ । | १ । १ । २ । |
| २६ | ३ | सष्टृत्वं | स्रष्टृत्वं |
| ,, | ११ | बाधित्वे | बोधित्वे |
| ,, | १७ | प्रतिपत्त्यर्थः | प्रतिपत्त्यर्थं |
| २८ | २० | मलाज्ञाना | मूलाज्ञाना |
| ३३ | ३ | विधा | विद्या |
| ३५ | ३ | निष्कल | निष्फल |
| ,, | २१ | यासाध्य | याससाध्य |
| ,, | २७ | श्रमण | श्रवण |
| ,, | २८ | विवर्तना | निवर्तना |
| ३६ | १३ | न युक्तो वेति | न युक्तो युक्तो वेति |
| ,, | २१ | गमयतीति | गमयत इति |
| ३७ | ८ | ध्रात्म | द्यात्म |
| ३८ | १२ | संभवति । | संभवति ॥ ९ ॥ |
| ४० | २४ | ब्रह्मस्वरूपे निरूपणेऽवशे | ब्रह्मस्वरूपनिरूपणे विशे |
| ४३ | २४ | चेष्टते प्रतीति | चेष्टयतीति |
| ४४ | ७ | त्वन्नमयादि | अन्नादि |
| ,, | १६ | दीनाम | दीनाम् |
| ४६ | ७ | क्ष्यासंभवात् | क्ष्यसंभवात् |
| ४९ | २६ | सर्जब्रह्म | सर्जनब्रह्म |
| ५१ | १७ | अन्नमस्येव | अन्नमयस्येव |
| ६५ | २९ | मक्यत्वे | मशक्यत्वे |
| ६८ | ३० | शर्द्धं | शुद्धं |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ७१ | २४ | श्रुतो गतो मतो दृष्टो विज्ञातो | अश्रुतोऽगतोऽमतोऽदृष्टोऽविज्ञातो |
| ११३ | २३ | प्रमेयत्वेऽप्रमेयत्व | प्रमेयत्वे प्रमेयत्व |
| ११४ | २४ | नान्यत्रव | नान्यत्रैव |
| ११८ | २० | तस्माच्छब्दा | तस्मात्स्त्रीशब्दा |
| १२४ | १६ | प्रागभागस्य | प्रागभावस्य |
| १२६ | १३ | पचारिता | पचरिता |
| १२८ | २१ | सत्त्वतो | तत्त्वतो |
| १३९ | २२ | शरीरं संबन्धकेव | शरीरसंबन्धः केव |
| १४१ | २३ | मत्रैय | मैत्रेय |
| १४२ | १५ | चासवायि | चासमवायि |
| १४३ | २७ | परमाणनु | परमाणूनु |
| १४६ | ११ | स्वप्न | स्वम |
| १४७ | ७ | पञ्चमम् | पञ्चमः |
| १४८ | १५ | कृणोति | कृणोमि |
| १६६ | १२ | दमवि | दमावि |
| १६७ | १६ | न्यूतं | न्युत |
| १७२ | ५ | वातं | वाचं |
| १८० | १२ | माहात्म्यज्ञाने | माहात्म्याज्ञाने |
| ,, | २१ | पञ्चालवेशा | पञ्चालदेशा |
| ,, | २८ | निर्मिण | निर्मिमाण |
| १८७ | १९ | व्यक्तयर्थं | व्यक्त्यर्थं |
| २०२ | २ | ब्रह्मव | ब्रह्मैव |
| ,, | १० | न्द्रादुद्रस्य | न्द्राद्रुद्रस्य |
| २०६ | १० | श्रवणीय | श्रयणीय |
| २१० | २६ | भमोपासनं | भूमोपासनं |
| २११ | १० | वाऽऽवश्य | चाऽऽवश्य |
| २२३ | २४ | अयोग्याप्राप्तिः | अयोग्यप्राप्तिः |
| २३१ | ८ | ऋभव(?) | मृत्यवः |
| २३२ | १७ | वा या | चाथ |
| ,, | १८ | समासमैषा | समासमा सैषा |
| २३७ | २९ | परमाभिधानात् | परमभिधानात् |

इति शुद्धिपत्रम् ।